विबुध्येति—

**विबुध्य विबुधेश्वरा अवधिरूपविज्ञानतः, स्वविष्टरविकम्पनप्रकृतिकारणादात्मनः ।**
**प्रभोश्च्यवनमादरात् समुपगत्य सर्वे तदा, दुरन्तदुरितक्षयप्रवणमेव चक्रुः स्तवम् ॥४८॥**

विबुधेश्वरा ! देवा ! अवधिरूपविज्ञानत' अवधिज्ञानतः स्वविष्टरस्य स्वासनस्य विकम्पनरूपात् प्रकृतिकारणात् प्रभोः मेघरथस्य आत्मनः जीवस्य भावितीर्थेशितुः च्यवनं विबुध्य ज्ञात्वा, तदा सर्वे देवा आदरादसमुपगत्य आगत्य दुरन्तानां दुष्परिणामानां दुरितानां पापानां क्षये प्रवण-मुन्मुखम्, स्तवं स्तोत्रमेवं वक्ष्यमाणप्रकारेण चक्रुः ॥४८॥

स्तवमेवाह अनुत्तरेति—

**अनुत्तरविमानकादपि विभो ! महीमण्डलं, समुन्नतमनुत्तरं त्वदधिवासतो मन्महे ।**
**तवात्र कथमन्यथाऽवतरणं यतः संभवेद्, दरिद्रसदने किमु द्विरदराजसंभावना ?॥४९॥**

विभो ! त्वदधिवासतः त्वसन्निवासाद्धेतोः महीमण्डलम् अनुत्तरविमानकादपि अनुत्तरं श्रेष्ठतमं समुन्नतमुच्चं च मन्महे स्वीकुर्मः । अन्यथा बाधकमाह—यतः अन्यथा पृथिव्याः विमानादनुत्तरत्वा-भावे अत्र पृथिव्यां तव अवतरणं कथं सम्भवेत् ? न सम्भवेदित्यर्थः । तत्र दृष्टान्तमाह—दरिद्र-सदने द्विरदराजस्य गजराजस्य सम्भावना किमु ? नैवेत्यर्थः । तस्येभ्याश्रयत्वादिति भाव एवञ्च गजेनेभ्यत्वानुमानवत् त्वत्स्थित्या पृथिव्या अनुत्तरत्वं सिद्ध्यतीति ॥४९॥

मतीति—

**मतिप्रमुखचित्त्रयीत्रिपथगातुषाराचल–प्रभ ! त्रिभुवनश्रियः कुलवलोपचारप्रियः ।**
**मनोभवमहोरगोपशमवैनतेयस्थिते ! प्रकाशितसदागमव्यवहृते ! चिरं तज्जय ॥५०॥**

मतिप्रमुखानां चितां ज्ञानानां त्रयी त्रयाणां मतिश्रुतावधीनां समाहार एव त्रिपथगा गङ्गा तस्याः तुषाराचलप्रभ ! हिमाद्रितुल्य ! हिमवतः गङ्गायाः प्रभववत्ततो ज्ञानत्रयप्रवृत्तेरितिभावः । त्रिभुवनश्रिय' सर्वलक्ष्म्याः कुलैः वलैरुपचारैश्च प्रिय ! सर्वलक्ष्मीसमन्वितेत्यर्थः । कुलीने बलवति व्यवहारपरौ च लक्ष्मीस्थितेरिति भावः । मनोभवः काम एव महोरगः महासर्पः तत्कृते वैनते-यस्य—गरुडस्य स्थितिरिव स्थितिर्यस्य तादृग ! कामजेतः ! प्रकाशिता सदागमस्य व्यवहृतिः व्यपदेशो येन स तादृशः ! आगमप्रवर्त्तक ! तत्पृथिव्यवताराद्धेतो. चिरं जय ॥५०॥

इतीति—

इति जिनपतिं नुत्वा नत्वा जिनस्य च मातरं
प्रमदनिचयप्रोल्लासैकप्रयोगनिबन्धनम् ।
दिविपदधिपा यात्रां नन्दीश्वरे विरचय्य च,
प्रकृतमहिम स्वं स्वं धामाऽगन् महितर्द्धयः ॥५१॥

इत्युक्तप्रकारेण नुत्वा जिनपतिं जिनस्य मातरं च नत्वा दिविषदधिपाः देवेन्द्राः प्रमद-निचयेन हर्षातिरेकेण यः प्रोल्लासः शुभोत्साहः तस्माद्धेतोर्य एकः कोऽपि प्रयोगः व्यापार-स्तन्निबन्धनम् तद्धेतुकं नन्दीश्वरे यात्रां विरचय्य च, हर्षावसरलाभतः सोत्साहाः जनाः शुभादि-किमपि कुर्वन्तीति भावः । महितर्द्धयः उत्कृष्टर्धिमन्तः ते देवेन्द्राः प्रकृतमहिम गौरवास्पदं स्वं स्वं धाम स्थानमगमन् ॥५१॥

बुधैरिति—

**बुधैः सुपुत्रेण तिरश्च्यपि स्तुता, परं किमन्याऽत्र विवेकशालिनी ।**
**क्षमाभरं धारयता सुदुर्वहं, न कच्छपी सा किल कच्छपेन किम्? ॥५२॥**

तिरश्ची निकृष्टयोनिः अज्ञप्रकृतिरपि सुपुत्रेण हेतुना बुधैः स्तुता प्रशंसिता अन्या विवेक-शालिनी काचिन्मानुषी अत्रेदृशे विषये सुपुत्रसत्त्वे' परं स्तुतेति किं वक्तव्यमित्यर्थः का तिरश्ची स्तुतेति चेत्तत्राह—सुदुर्वहं वोढुमशक्यं क्षमाभरं पृथ्वीभारं धारयता कच्छपेन पुत्रेण सा कच्छ-पमाता कच्छपी न किं? स्तुतेति ज्ञेयम्, अपि तु स्तुतैवेति । सुपुत्रो हि पितरौ स्तूयेते इति भावः, कूर्मः पृथिवीं पृष्ठे वहतीति पौराणिकाः । एवञ्च तीर्थेशमातुः स्तुतिरुचितैवेति भावः ॥५२॥

अहमिति—

**अहं समालोक्य जिनेन्द्रमातरं, स्वमण्डलं पावयिताऽस्मि निर्भरम् ।**
**इतीव पूर्वाचलसानुमुन्नतं, रविः समारोहदनन्तरागभृत् ॥५३॥**

अहं सूर्यः जिनेन्द्रमातरमचिरां समालोक्य स्वमण्डलं स्वबिम्बं निर्भरं-सुतरां पावयिताऽस्मि इति विचिन्त्येव रविः सूर्यः अनन्तं रागं प्रेम, उदयकालिकरक्ततां च बिभर्तीति सः तादृशः सन् उन्नतं पूर्वाचलस्य सानुं प्रस्थं समारोहत् । अन्योऽपि हि दूरस्थं वस्तु उच्चं वृक्षादारुह्य पश्यतीति भावः ॥५३॥

परीति—

**परिवृढमिमं गर्भस्थानं विचिन्त्य विचेष्टितैः,**
**प्रमदकलिता द्यौरेषा दिग्वधूभिरनुद्रुता ॥**
**उदयविसरत्सूर्योस्रालीकुसुम्भमहाम्बरा**
**विहगविरुतव्याजेनोच्चैःस्वरा किल गायति ॥५४॥**

विचेष्टितैः बाह्यव्यापारैः इमं परिवृढम् प्रभुं "प्रभुः परिवृढोऽधिपः" इत्यमरः गर्भे स्थानं स्थितिर्यस्य तं तादृशं गर्भस्थं विचिन्त्यानुमाय प्रमदकलिता हृष्टा एषा दृश्यमाना द्यौः दिशो वध्व इव ताभिरनुद्रुता सहिता नवेकिकैव, उदयेन विसरन्ती प्रसरन्ती सूर्यस्य किरणोस्र-मयूखांशु" इत्यमरोक्तेः उस्राणां किरणानां माली श्रेणी एव कुसुम्भं कुसुम्भरक्तं महत् अम्बरं

वस्त्रं यस्याः सा तादृशी सती विहगानां पक्षिणां विरुतस्य शब्दस्य व्याजेन छलेन उच्चैःस्वरा सती गायति किलेत्यलीके । अन्यापि हि हर्षावसरे रक्तवस्त्रं परिधाय वधूभिः सहोच्चैर्गायतीति भावः ॥५४॥

**प्रातरिति—**

प्रातःकृत्यमसौ विधाय विधिवच्छ्रीविश्वसेनो नृपः,
सामन्तैः सचिवैः सहातिविनतैरध्यास्य सिंहासनम् ।
जानन्निन्द्रसमागमादपि जिनं गर्भावतीर्णं प्रिया-
प्रीत्यै स्वप्नविचारशास्त्रचतुरानष्टौ समाजूहवत् ॥५५॥

असौ प्रस्तुतः श्रीविश्वसेनो नृपः विधिवद्यथाविधि प्रातःकृत्यं स्नानपूजावन्दनादिकं विधाय अतिविनतैः विनम्रतरैः सामन्तैः सचिवैश्च सह सिंहासनमध्यास्य इन्द्रसमागमात् गर्भावतीर्णं जिनं जानन्नपि गर्भे जिनेश्वर एव अवतीर्णोऽस्ति. इन्द्रागमनान्यथानुपपत्तेरिति भावः । प्रियायाः प्रीत्यै मनस्तोषाय स्वप्नविचारशास्त्रे चतुरान् अष्टौ दैवज्ञान् समाजूहवत् ॥५५॥

**आयाता इति—**

आयाता विनिवेशितेष्वपि पुरा भद्रासनेष्वासिता,
दृष्टस्वप्नफलोदयं विनयतो राज्ञाऽनुयुक्ताः स्वयम् ।
तेऽप्यूचुर्नरदेवसिंह भविता ते धर्मचक्री सुत-
श्चक्री वेतिनिशम्य हृष्टमनसा तेनाऽपि ते सत्कृताः ॥५६॥

आयाता आगताः पुरा प्रागेव विनिवेशितेषु स्थापितेषु भद्रासनेषु आसिता अपि उपवेशिताश्च राज्ञा विश्वसेनेन स्वयमेव विनयतः विनयपूर्वकम् दृष्टानां स्वप्नानां फलोदयं फलप्राप्तिमनुयुक्ताः पृष्टाः ते दैवज्ञा अपि ऊचुः, किमित्याह नरदेवसिंह । नृपश्रेष्ठ! चक्रीव चक्रवर्तीव धर्मचक्री धर्मचक्रप्रवर्तयिता ते तव सुतः भविता इतीत्थं निशम्य हृष्टमनसा तेन नृपेण ते दैवज्ञाः सत्कृताः ॥५६॥

**रत्नेति—**

रत्नस्वर्णविभूषणैर्बहुविधैर्देव्याऽपि ते पूजिता-
स्तुष्टा धाम ययुर्निजं जवनिकाऽन्तर्धानपीठश्रिताः ।
सामीप्यं समुपेत्य मानसमुदे सिंहासनादुत्थितः,
स्वप्नार्थं कथितं श्रुतं च नृपतिस्तस्याः पुरो व्याकरोत् ॥५७॥

ते दैवज्ञाः देव्या अचिरयाऽपि बहुविधैः रत्नस्वर्णविभूषणैः पूजिताः अत एव तुष्टाः सन्तः जवनिकायाः परकुड्यस्यान्तर्धानेन व्यवधिना पीठश्रिताः विमुखाः भूत्वा निजं धाम गृहं ययुः

सिंहासनादुत्थितः नृपतिश्च देव्याः सामीप्यं समुपेत्यागत्य मानसमुदे चेतस्तुष्ट्यै दैवज्ञैः कथितं श्रुतं च स्वप्नार्थं तस्या देव्याः पुरोऽग्रे-व्याकरोन्निवेदयामास ॥५७॥

दधारेति—

दधार सा गर्भमनन्तरं सती, सतीव सौभाग्यगुणेन मानिनी ।
गुणोज्ज्वलं शुक्तिरवाप्तसंवरा, महाशया मौक्तिकवद् मनोहरम् ॥५८॥

अनन्तरं सौभाग्यगुणेन सती पार्वतीव मानिनी मानार्हा महाशयोदारा सा सती अचिरा अवाप्तसंवरा प्राप्ता सती शुक्तिः मौक्तिकवत्, गुणोज्ज्वलं मनोहरं गर्भं दधार ॥५८॥

गर्भप्रभावमाह रुग्मेति—

रुग्मारिप्रमुखाशिवानि शतशः पूर्वं बभूवुस्तदा,
प्राणघ्नानि शरीरिणां जनपदे तस्मिन् कुरौ सर्वतः ।
तन्नाशाय जनश्चकार विविधोपायान् समग्रान् परं,
शाम्यन्ति स्म न तानि तैरपि जलैरब्धेरिवौर्वाग्नयः ॥५९॥

रुगिति, तदा पूर्वं तीर्थेशस्य गर्भावतारात्पूर्वं तस्मिन् कुरौ जनपदे देशे सर्वतः सर्वत्र शरीरिणां प्राणिनां प्राणघ्नानि मृत्युकारकाणि शतशः अनेकानि रुजः रोगाः रोगभूताः मारयः मरकीत्याख्यप्राणहररोगविशेषाः । तत्प्रमुखानि अशिवानि अमङ्गलकराणि उपद्रवानि बभूवुः तेषां अशिवानां नाशाय जनः समग्रान् शक्यान् विविधानुपायान् प्रतीकारान् चकार, परं किन्तु अब्धेः जलैरौर्वाग्नयः वडवानला इव तैरुपायैरपि तानि अशिवानि न शाम्यन्ति स्म ॥५९॥

देव्या इति—

देव्याः कुक्षिमुपागते जिनपतौ सर्वाणि तान्यक्रमात् ,
तत्कालं विशरारुतामुपययु-र्घर्मा इवेन्दूदये ।
ईदृग् यस्य महाप्रभावविभवो गर्भावतारेऽप्यभू-
ज्जातो दर्शनमात्रतः स भविनां-किं किं न कर्ता सुखम् ? ॥६०॥

जिनपतौ देव्या अचिरायाः कुक्षिं गर्भमुपागते प्राप्ते सति अक्रमाद्युगपदेव, इन्दूदये चन्द्रोदये घर्मा ऊष्माण इव तत्कालं विशरारुतां नाशमुपययुः । यस्य तीर्थेशस्य गर्भावतारेऽपि ईदृगुक्तप्रकारः महतः प्रभावस्य विभवः स तं लोकासाध्यकार्यानुकलाचिन्त्यसामर्थ्यविशेषः अभूत्, स तीर्थेशः जातः उत्पन्नः सन् दर्शनमात्रत एव भविनां किं किं सुखं न कर्ता ? अपि सर्वप्रकारं सुखं करिष्यतीत्यर्थः ॥६०॥

प्रपेति—

प्रपद्यमानेऽभ्युदयं जिनेश्वरे, महार्घतां यास्यति जातिरेकिका ।
इतीव वर्षासु विकाशमासदद्, गुणप्रकर्षेण व जातिरात्मनः ॥६१॥

जिनेश्वरे अभ्युदयं जन्म प्रपद्यमाने प्राप्ते सति एकिका केवलं जातिः सामान्यं महार्घतां दुर्लभतां यास्यति तेन स्याद्वादोपदेशनात्तत्र वस्तुनः सामान्यविशेषात्मकस्यैव समर्थनादेकम् विशेषात्पृथक् तन्त्रान्तरसम्मतं सामान्यं दुर्लभं भवेदित्याशयः । इति हेतोरिव वर्षासु आत्मनः स्वस्य गुणप्रकर्षेण महार्घत्वरूपगुणातिशयेनव इव जाति' मल्लिकालताविकाशमासदत् पुष्पिता । श्लेषमूलोत्प्रेक्षाऽलङ्कारः ॥६१॥

द्वीति—

द्विजिह्वभावं न सहिष्यते प्रभुः, पुराऽपि तन्नाशमतो विदध्महे ।
इति द्विजिह्वक्षयबद्धविभ्रमाः, कलापिनः प्रावृषि नेदुरुन्मदाः ॥६२॥

प्रभुः द्विजिह्वभावं पिशुनतां न सहिष्यते सत्यव्रतत्वादिति भावः तत्तलोऽतः पुराऽपि प्रागेव तस्य द्विजिह्वस्य सर्पस्य नाशं विदध्महे । इति हेतोः प्रावृषि वर्षर्तौ उन्मदाः उन्मदाः सन्तः कलापिन. मयूराः द्विजिह्वानां सर्पाणां क्षये बद्धः विभ्रमः विलासः येषां तादृशाः' सर्पनाशबद्धपरिकरा इव नेदुः जगु. ॥६२॥

जडेति—

जडाशयानां कलुषत्वशालिनां, न दर्शनं तस्य विभोर्भविष्यति ।
इतीव तन्निर्मलतां प्रकुर्वती, समाययौ हंसकनादिनी शरत् ॥६३॥

कलुषत्वशालिनां पापिनां जडाशयानां मन्दानाम् अथ च वर्षर्तौ रजोमिश्रितत्वाद् अनच्छानां तडागानाम्. तस्य विभोर्जिनेशस्य दर्शनं न भविष्यति, पापितया मन्दबुद्धितया तस्मिन् श्रद्धाऽभावात् अप्कायविराधना मा भूदिति तडागादौ अगमनात् चातुर्मास्ये विहाराकरणाच्चेति भाव' । इति हेतोरिव तेषां जडाशयानां निर्मलतां प्रकुर्वती हंसकनादिनी हंसरवा शरदृतुः समाययौ शरदि जलान्यच्छानि भवन्तीति भावः ॥६३॥

मह इति—

महः प्रभोर्यद्यपि भावी चासमं, तथाऽपि वर्ण्यं मयका सहैव तत् ।
इतीव यस्यां ववृधे स्वतेजसा, रविः प्रमोदातिशयादिवात्मनः ॥६४॥

प्रभोर्जिनेशस्य महः तेजो यद्यपि असमं निष्प्रतिमं भावि भविष्यति तथापि तज्जिनतेजः मयका रविणा सहैव वर्ण्यं स्यात्, तेजसि रव्युपमाया प्रसिद्धेरिति भावः इति हेतोरिव

आत्मनः प्रमोदातिशयादिव रविः स्वतेजसा यस्यां शरदि ववृधे अग्रतेजा अभूदित्यर्थः शरदि रविः प्रचण्डकिरणो जायते स च सहेतुकत्वेनोत्प्रेक्षितः ॥६४॥

अमुष्येति—

**अमुष्य पश्चादपि पर्युपासनां, परे करिष्यन्ति जना अहं पुनः ।**
**मुनीनमाऽऽगर्भमिनं मुनिर्भजे, त्वितीव यस्यामुदगादगस्त्यकः ॥६५॥**

यस्यां शरदि, अमुष्य जिनेश्वरस्य परे जना पश्चादपि जन्मानन्तरमपि पर्युपासनां करिष्यन्ति, अहं पुनः मुनीनं मुनीन्द्रम् इनं स्वामिनं जिनेशमागर्भं गर्भादेवारभ्य भजे इति बुद्ध्येव तु मुनिरगस्त्यकः अगस्त्यो मुनिः नक्षत्रविशेषरूपः उदगादुदयमियाय, शरदि अगस्त्योदयः सहेतुकत्वेनोत्प्रेक्षितः ॥६५॥

मुखमिति—

**मुखं स्वभावेन सुवर्णकेतकी-दलाभमस्या अपि पाण्डुतां दधौ ।**
**विनापि काश्मीरविलेपनं रसैः प्रवर्धमानोत्तमगर्भसङ्गमात् ॥६६॥**

अस्या अचिरायाः स्वभावेनैव सुवर्णकेतकीलतायाः दलाभं पत्रप्रभं मुखम् प्रवर्धमानस्योत्तमस्य गर्भस्य सङ्गमात्प्रभावात् रसैः कृत्वा काश्मीरस्य कुङ्कुमस्य विलेपनं विनैव पाण्डुतां दधौ, गर्भवत्या मुखं पाण्डु जायते इति भावः ॥६६॥

इयमिति—

**इयं स्वभावादपि चारुताधिका, ततोऽतिरिक्ता महिषीपदं श्रिता ।**
**अनेन गर्भेण न दृष्टिदूषिता, भवेदिति श्याममुखौ स्तनौ तदा ॥६७॥**

इयमचिरा स्वभावादपि स्वभावत एव चारुतया अधिका अधिकरमणीया, महिषीपदं श्रिता सति ततोऽप्यधिकाप्यतिरिक्ता अधिकतमरमणीया जाता, गुणानां स्थाने अतिशयाधानादिति भावः। अनेन गर्भेण कृत्वा दृष्टिदूषिता न भवेदिति हेतोरिव तदा तस्याः श्याममुखौ कृष्णाग्रौ स्तनौ जातौ, गर्भावस्थायां स्तनमुखं नीलायते इति भावः। अन्योऽपि हि दृष्टिदोषनिरणाय क्षेत्रादौ कृष्णभाण्डादि स्थापयतीति भावः स्तनमुखनीलता सहेतुकत्वेनोत्प्रेक्षिता ॥६७॥

बभूवेति

**बभूव देव्या जठरं न पीवरं तदाऽपि गर्भे परिपुष्यति श्रियम् ।**
**अजिज्ञपत् तं मुखपाण्डिमा परं, कपोलपर्यन्तविसृत्वरद्युतिः ॥६८॥**

तदा गर्भे श्रियं वृद्धिं परिपुष्यति प्राप्तवत्यपि सति देव्या अचिराया जठरमुदरं पवीरं न बभूव, ननु गर्भे वर्धमाने उदरमुच्छ्रूयत्येव, अन्यथा गर्भसत्त्वं नेति चेत्तत्राह-परं किन्तु

कपोलपर्यन्तं विसृत्वरा द्युतिर्यस्य स तादृशः मुखपाण्डिमा मुखस्य पाण्डुतैव तं गर्भमजिज्ञपन्निवेदयति स्म, एवञ्च गर्भस्थप्रभावादेव कष्टकारिण्युदरस्य वृद्धिर्नेति बोध्यमिति भावः ॥६८॥

स्वेति

स्वभावतो देव्यपि मन्दगामिनी, विशेषतो गर्भभरेण साऽभवत् ।
विसारिणा केवलदानवारिणा, यथा महावारणराजवल्लभा ॥६९॥

देवी अचिराऽपि स्वभावत मन्दगामिनी उत्तमस्त्रीत्वादिति भावः । सा गर्भभरेण गर्भभारेण विशेषतः पूर्वापेक्षयाऽधिकमेव सा तादृशी मन्दगामिन्यभवत् । यथा विसारिणा प्रसरणशीलेन केवलेन दानवारिणा मदजलेन महावारणराजस्य वल्लभा प्रिया करिणी मन्दगमना भवति तथेति भावः ॥६९॥

जाड्यमिति

जाड्यं मत्तः प्रभवति जने यत्कलङ्कं तमेव,
जाने स्वस्याऽहमपि यशसां संक्षयस्यैकहेतुम् ।
मा भूद् युष्मच्चरणकमलानुग्रहात् तद् ममेति ।
प्राग् विज्ञप्तिं रचयितुमिवाऽथाऽऽर हेमन्तकालः ॥७०॥

अथ शरदनन्तरम् मत्तः हेमन्ततः जाड्यं शीताधिक्यं जडता च प्रभवति इति जने लोके यः यत्कलङ्कोऽपवादः तं कलङ्कमेवाऽहमपि 'कलङ्कोऽपवादयोः'–इत्यमरः । हेमन्तर्तुः स्वस्य निजस्य हेमन्तस्य यशसां संक्षयस्यैकं मुख्यं हेतुं कारणं जाने तद्यशःक्षयः युष्माकं जिनेश्वराणां चरणकमलानुग्रहात् मम हेमन्तस्य मा भूत्, जिनेशेन सम्यग्ज्ञानोपदेशेन जड़ताया विनाशनादिति भावः इतीत्थं विज्ञप्तिं रचयितुं कर्तुमिव हेमन्तकालः प्रागेवाऽऽराऽऽजगाम । श्लेषमूला हेमन्तागमने सहेतुकत्वोत्प्रेक्षा ॥७०॥

ममेति—

मम प्रकाशेन निरर्थकेन किं, जिनस्य यस्मिन् न जनिर्भविष्यति ।
इतीदृशं दुःखभरं श्रयद् दिनं, दिने दिने यत्र दधार तुच्छताम् ॥७१॥

यस्मिन् हेमन्ते दिनं दिवसम् मम हेमन्तदिनस्य निरर्थकेणाफलेन प्रकाशेन किं? न किमपीत्यर्थः नैष्फल्यहेतुमाह न यस्मिन् हेमन्तदिने जिनस्य जनिर्जन्म न भविष्यति तदेवं दिनं सफल यत्र जिनजन्मेति भावः इतीदृशमुक्तप्रकारं दुःखभारं चिन्ताखेदं श्रयदिव दिने दिने तुच्छतामल्पतामदीर्घतां दधार । हेमन्ते दिनानि ह्रस्वानि जायन्ते, तत्र सहेतुकत्वोत्प्रेक्षा, सा च व्यञ्जकेवाद्यप्रयोगाद्गम्या ॥७१॥

दिनमिति—

दिनं प्रकाशं दधतां स्वमानतो, निजस्य याऽस्मासु भविष्यते जनिः।
इति क्षपा यत्र दधुर्नतानवं, प्रमोदमेदस्वितयेव ता नवम् ॥७२॥

दिनं स्वमानतः स्वप्रमाणतः प्रकाशं सूर्यप्रकाशं दधताम् आधिक्यं न गच्छतु, तेन किम्? जिनस्य जनिर्जन्म चास्मासु रात्रिष्वेव भविष्यते प्राप्स्यसि भूधातोः प्राप्त्यर्थकस्यात्मनेपदिनो रूपमिदमिति बोध्यम्। इति हेतोः ताः हेमन्तस्य क्षपा रात्रयः प्रमोदेन मेदस्वितया स्थूलतया इव नवं विलक्षण, नतानवं दीर्घतां दधुः, हेमन्ते रात्रयो दीर्घा भवन्ति तदेव अत्र सहेतुकत्वेनोत्प्रेक्षितम् ॥७२॥

जात इति –

जातेऽस्मिन् परमेश्वरे जिनपतावाचूलमापन्नखं,
रागः पुण्यविधौ न येषु भविता तेन प्रशंसापदम्।
इत्यादावपि संविमृश्य हृदये यं संनिधातुं जना,
यस्मिन् कुङ्कुमपङ्कलेपनमिषादभ्यासमेवार्जयन् ॥७३॥

यस्मिन् हेमन्ते जिनपतौ परमेश्वरे जाते उत्पन्ने सति अस्मिन् जिनजन्मरूपे पुण्यविधौ पुण्यकर्मणि येषु जनेषु आचूलमाशिखमापदः चरणस्य नखं यावत् रागः कुङ्कुमद्रवादिरूपः अथ च प्रीतिः न भविता ते तादृशजनाः प्रशंसापदं न अपि तु निन्दनीया एव इति हेतोः आदौ जन्मनः प्रागपि हृदये संविमृश्य विचार्य जना यं रागं संविधातुं कर्तुं कुङ्कुमपङ्कस्य लेपनमिषाल्लेपनव्याजेन अभ्यासमेवार्जयन्नकुर्वन्, हेमन्ते क्रियमाणस्य कुङ्कुमादिलेपस्य सहेतुकत्वोत्प्रेक्षा ॥७३॥

मातुरिति—

मातुस्तीर्थपतेर्न किञ्चन मुखच्छायां दधन्ते तरा–
मेतानि प्रसभं विभोर्नयनयोः स्प्रक्ष्यन्ति कान्ति न च।
साम्यं नो करपल्लवेन न पदाऽप्यासादयन्ते ततो,
मा भूवन्निति कोपतोऽथ शिशिरः पद्मान्यधाक्षीदयम् ॥७४॥

अथ हेमन्तानन्तरमयं वर्तमानः शिशिरः एतानि पद्मानि तीर्थपतेः मातुः मुखच्छायां मुखकान्ति किञ्चनाण्वपि न दधन्ते तराम्। किञ्च विभोर्जिनेशस्य नयनयोः कान्ति च न स्प्रक्ष्यति, तथा करपल्लवेन साम्यं नासादयन्ते पदा चरणेनाऽपि साम्यं नासादयन्ते, पद्मापेक्षया तेषामुत्कृष्टत्वादिति भावः, ततः निष्प्रयोजनत्वादेतानि पद्मानि मा भूवन् माऽस्तु इति कोपतः

क्रोधात् प्रसभं हठात्पद्मानि अधाक्षीन्नाशयामास, शिशिरे पद्मानि नश्यन्ति तत्र व्यतिरेकपोषित-सहेतुकत्वोत्प्रेक्षा ॥७४॥

वृद्धाभिरिति—

वृद्धाभिः स्वकुलावलाभिरुदयत्पुत्रान्विताभिस्तत-
स्तस्याः शीलविभूषणाभिरुचिताचारोपचारप्रियः ।
भर्तृस्नेहवशंवदाभिरमलप्रज्ञाभिराबाल्यतः,
सीमन्तोन्नयनं व्यदीधपदयं क्ष्मापालचूडामणिः ॥७५॥

ततोऽनन्तरम् उचिताचारस्योपचारे विधाने प्रियः रुचिमान् आचारपालकः क्ष्मापाल-चूडामणिः अयं विश्वसेनः वृद्धाभिः स्वकुलस्यावलाभिः स्त्रीभिः उदयता वर्द्धमानेन पुत्रेणाऽन्विताभिः, सपुत्राभिरित्यर्थः, तथा, शीलविभूषणाभिः भर्तृस्नेहवशंवदाभिः पतिप्रियतमाभिः तथा आबाल्यतः बाल्यादेवाऽऽरभ्य अमलप्रज्ञाभिः बुद्धिमतीभिः कृत्वा तस्या अचिरायाः सीमन्तोन्नयनं सीमन्तकर्म व्यदीधपत् कारयामास, गर्भाधानानन्तरं सीमन्तोन्नयनविधानाचारादिति भावः ॥७५॥

जातिरिति—

जातिर्यत्र प्रकटयति न स्वं निलीनेव गूढं,
पद्मानामप्यपचितिरभून्निःस्ववद् यत्र सत्यम् ।
माकन्दानां परिमलभरः स्मर्यते यत्र तत्र,
कुन्दैरेभिर्विकसितमहो हि ! विचित्रैव सृष्टिः ॥७६॥

यत्र शिशिरे जातिः गूढं, मालती 'सुमना मालती जातिः' । इत्यमरः । गुप्तं निलीना-ऽन्तर्हिता इव स्वमात्मानं पुष्पोद्गमादिना न प्रकटयति, शिशिरे जातिपुष्पोद्गमाभावादिति भावः ।, तथा यत्र शिशिरे पद्मानां कमलानामप्यपचितिः क्षयः सत्यं निःस्ववद्दरिद्रवदभूत्, दरिद्रस्य जाड्यनिवारणावरणवस्त्राभावात्, पद्मानां हिमात् शिशिरेऽपचयो भवतीति भावः । सत्यमे-वैतत् । तत्र शिशिरे यत्र तत्र सर्वत्र माकन्दानां परिमलभरः आमोदातिशयः स्मर्यते न तु प्राप्यते शिशिरे माकन्दविकासाभावादिति भाव तत्र शिशिरे एभिरतिलघुभिः कुन्दैः माघ्यापर-नामकैः पुष्पैः विकसितं अहो ! इत्याश्चर्ये यत्र तादृशानां प्रसिद्धानामभावः तत्र लघुनो विकास इत्याश्चर्यमिति भावः। यद्वा हीति खेदे, सृष्टिर्विचित्रा गौरवलाघवविवेकरहितेति खेद इति भावः, शिशिरे कुन्दानि विकसन्तीति भावः ॥७६॥

कन्दर्पस्येति—

कन्दर्पस्य सदर्पकस्य जयिनः श्रीमद्वसन्तप्रभो !
त्याज्यं नैव कदाचनाऽपि सुहृदः साहाय्यमस्य त्वया ।

यस्माद्भाव्यचिराङ्गजः सबलवान् वैरीति पुंस्कोकिल-
स्येदृग्वाक्श्रवणादिवाऽथ सुरभिस्तूर्णं समाजग्मिवान् ॥७७॥

अथ शिशिरानन्तरम् पुंस्कोकिलस्य इतीदृशः वाचः श्रवणादिव सुरभिः वसन्तर्तुः "सुरभिश्चंपके स्वर्णे जातीफलवसन्तयो"रिति विश्वः तूर्णं समाजग्मिवान्, वसन्तकालः प्राप्त इत्यर्थः। इतीति किमित्याह श्रीमद्वसन्तप्रभो ! जयिनः लोकवशीकरणाज्जयवतः सदर्पकस्याभिमानिनः कन्दर्पस्य कामदेवस्य सुहृदः स्वमित्रस्यास्य साहाय्यं साहायकं त्वया भवता वसन्तेन कदाचनाऽपि नैव त्याज्यम्, ननु तस्य मम सहाय्येन किमिति चेत्तत्राह यस्माद्यतो हेतोः अस्य कामस्य बलवान् वैरी, तेन कामजयादिति भावः। स प्रसिद्धः अचिराङ्गजः अचिरासूनुः षोडशतीर्थङ्करो भावी भविष्यति, एवञ्च भाविन्यां तत्कृतपराजये मित्रधर्ममनुरुध्य त्वया साहाय्यकं विधेयम्, न तु त्याज्यमिति भावः, वसन्ते पुंस्कोकिलो रौति, कामश्च जागर्तीति भावः ॥७७॥

पात्रेति—

पात्राधीशस्त्रिभुवनगुरुस्तद्विमानं विमुच्य,
देव्या गर्भे श्रयति वसुधामण्डलाऽऽभूषणायाः।
पत्राणां नस्तदुपरिवृतां सत्यमाशातना स्या-
दित्यालोच्य क्षितिरुहचयाद् यत्र पत्राणि पेतुः ॥७८॥

यत्र वसन्ते क्षितिरुहचयाद् वृक्षसमुदयात्पत्राणि इत्यालोच्य इव पेतुः गलन्ति स्म, इतीति किमित्याह—पात्राणां सतामधीशः त्रिभुवनगुरुः जिनेशः तं प्रसिद्धं विमानं विमुच्य त्यक्त्वा वसुधामण्डलस्य आभूषणायाः मण्डयित्र्याः देव्या अचिराया गर्भं श्रयति, तत्तः तस्य उपरि ऊर्ध्वप्रदेशे वृतां वर्तिनां नोऽस्माकम् पत्राणामाशातनाऽविनयः स्यात्, पूज्यापेक्षयोर्ध्वदेशस्थितिरविनय इति भावः ॥७८॥

कौशुम्भमिति—

कौशुम्भं वचनं च किंशुकसुमा–भारच्छलाद् बिभ्रती,
चञ्चच्चम्पकपुष्पकुङ्कुमघनालेपस्फुरत्पाण्डिमा।
माकन्दप्रसवोत्पतद्बहुरजोवासा जिनं गर्भगं,
रङ्गाद् यत्र वनस्थली पिकरवा गातुं समागादिव ॥७९॥

यत्र वसन्ते वनस्थलीवनप्रदेशः"पलाशे किंशुकः"इत्यमरः। किंशुकानां पलाशानां सुमानां पुष्पाणां भारस्याधिक्यस्य च्छलाद् व्याजेन कौशुम्भं वसनं रक्तवस्त्रमित्यर्थः। बिभ्रती, तथा चञ्चलां विकसतां चम्पकानां पुष्पाणि एव कुङ्कुमस्य काश्मीरजस्य घनः गाढः आलेपः उद्वर्त्तनम् तेन स्फुरन् प्रकटः पाण्डिमा यस्याः सा तादृशी तथा माकन्दस्य प्रसवाणां पुष्पाणां 'प्रसवस्तु फले पुष्पे'

इत्यमरः । उत्पततामुड्डीयन्ति उड्डीयमानि बहूनि रजांसि एव वासो वस्त्रं यस्याः सा तादृशी पिकस्य कोकिलस्य इव रवो यस्याः सा पिकरवा सती रङ्गाद्धर्षात गर्भगं जिनं गातुं समागात् गानं कृतवतीव । रूपकानुप्राणितोत्प्रेक्षा ॥७९॥

**निरस्येति—**

**निरस्य जाड्यं प्रसरं पराश्रितं, समाश्रयन् धाम सुदुःसहं खलु ।**
**अथोग्रकर्मक्षयदारुणाशयः, प्रवर्तयामास तपः स्वशासनम् ॥८०॥**

अथ वसन्तानन्तरम् तपः ऊष्मागमः ग्रीष्मर्त्तुरिति यावत्, "ऊष्ण उष्मागमस्तप" इत्यमरः तथा तपति तपस्यतीति स कश्चिन्महान् तपस्वी जिनेशप्रभृतिः पराश्रितम् जनतास्थितम् जाड्यस्य शीतस्य अज्ञानस्य च प्रसरं प्रवृत्ति निरस्य दूरीकृत्य खलु निश्चयेन सुदुःसहं परतेजोऽभिभावकं धाम तेजः ग्रीष्मे सूर्यस्य प्रचण्डकिरणत्वाज्जिनेशस्य च परमतेजस्वित्वादिति भावः । समाश्रयन्, उग्राणाम् परिश्रमसाध्यानाम् अथ च दुष्परिणामानां कर्मनां कृत्यादीनां हिंसादीनां च क्षये दूरीकरणे दारुणः कठोर आशयो यस्य स तादृशः, ग्रीष्मे कृत्यादिकर्मनिवृत्तेः, जिनेन अहिंसोपदेशाच्चेति भावः । स्वशासनम् स्वप्रभावं स्वप्रवचनं च प्रवर्त्तयामास । श्लेषः ॥८०॥

**मयीति—**

**मयि प्रभोर्वत्सलता विलोक्यते, जनुर्यदन्यत्र ऋतौ बभूव ।**
**इतीव मल्लीसुमदम्भसद्यशा, बभार तेजःप्रसरं तपागमः ॥८१॥**

मयि ग्रीष्मर्त्तौ प्रभोर्जिनेशस्य वत्सलता स्नेहः विलोक्यते ज्ञायते, तत्र हेतुमाह यद्यतः अन्यत्रान्यस्मिन् ऋतौ जनिः जिनेशजन्म न बभूव किन्तु ग्रीष्मर्त्ताविव भावि, इति हेतोरिव मल्ल्याः मल्लिकायाः सुमानां पुष्पाणां दम्भेन व्याजेन सद्यशाः धवलयशाः तपागमो ग्रीष्मर्त्तुः तेजःप्रसरं तापसम्पदं बभार । तपागमे तापवृद्धिः सहेतुकत्वेनोत्प्रेक्षिता ॥८१॥

**स्वेति—**

**स्वनायकं सेवकवृद्धिसंक्षयौ, सदाऽनुयातः कथमन्यथा तपे ।**
**प्रवर्धमाने दिननायके दिनं, प्रवर्धते चापरथा न किं हिमे ? ॥८२॥**

सेवकस्य वृद्धिरभ्युदयः संक्षयोऽवनतिश्च तौ वृद्धिह्रासौ सदा स्वनायकं स्वामिनमनुयातोऽनुसरतः, स्वामिवृद्धिह्रासाभ्यां सेवकस्य अपि वृद्धिह्रासौ इति भावः, अन्यथाऽनुपपत्तिमाह—अन्यथा प्रकारान्तरे तपे ग्रीष्मे दिननायके सूर्ये प्रवर्धमाने तेजोवृद्ध्येति भावः । दिनं कथ प्रवर्धते ? ततोऽन्वयः सिध्यतीति भावः, व्यतिरेकमाह—हिमे हेमन्तर्त्तौ अपरथा सूर्यतेजोह्रासे कथं न ? प्रवर्धते, तदेवमन्वयव्यतिरेकावुक्तमर्थं साधयतीति भावः ॥८२॥

सुरैरिति

सुरैर्मदीयानि फलानि तत्क्षणं, जिनेन्द्रजन्मस्नपनोत्सवे कृते ।
कृतार्थनीयानि पुरो निवेशना-दितीव चूता ननृतुः स्फुरद्दलैः ॥८३॥

ग्रीष्मे, चूताः आम्राः, जिनेन्द्रजन्मनि स्नपनोत्सवे स्नात्रमहोत्सवे कृते करणीये समये सति सुरैः देवैः तत्क्षणं मदीयानि आम्रस्य फलानि, यथासमयत्वादिति भावः, पुरः प्रथमं निवेशनात्स्थापनात् कृतार्थनीयानि कृतकृत्यानि कृतानि करिष्यमाणानि सन्ति इति हेतोः जातहर्षादिव स्फुरद्भिः चलद्भिर्दलैः पत्रैः कृत्वा ननृतुः अन्योऽपि हि हर्षे सति नृत्यतीति भावः ॥८३॥

अथ युग्मेन जिनेशजन्माह—

दुष्पूरेष्वपि दोहदेषु तरसा संपूर्यमाणेश्वरं,
ज्ञायं ज्ञायमनुक्षणं नृपतिना तस्याः सखीनां मुखात् ।
एवं मास्सु नवस्वितेषु दिवसैः सार्धं च सार्धाष्टमै-
र्ज्येष्ठे मास्यसिते त्रयोदशतिथौ तस्यां भरण्यां च भे ॥८४॥

उच्चेषु त्रिषु केन्द्रतामुपगतेष्वन्येषु तत्सु ग्रहे-
ष्विन्दुं माघवतीव दिक् स्म महिषी सूते मृगाङ्कं सुतम् ।
पीयूषद्युतिमण्डले मलिनिमा प्राप्यः कलङ्काङ्कुरः,
संपूर्णत्वमुपेयुषि प्रतिकलं वृद्ध्या न तस्मिन् परम् ॥८५॥ युग्मम्

नृपतिना विश्वसेनेन तस्या अचिराया सखीनां मुखात्, लज्जया साक्षादनिवेदनादिति भावः । अनुक्षणं ज्ञायं ज्ञायं दोहदानि पुनः पुनः ज्ञात्वा दुष्पूरेषु अन्यैः असाध्येष्वपि दोहदेषु गर्भमनोरथेषु तरसा जवेन अरमत्यर्थं सम्पूर्यमाणेषु एवमुक्तप्रकारेण सार्धाष्टमैः अर्धाधिकाष्टमैः दिवसैः सार्धं सह नवसु नवसङ्ख्याकेषु मास्सु मासेष्वितेषु व्यतीतेषु ज्येष्ठे मासि असिते कृष्णपक्षे त्रयोदशी चासौ तिथिश्च तस्यां तस्यां भरण्यां च भे नक्षत्रे त्रिषु तत्सु चन्द्रगुरुशुक्रेषु-शुभेषु ग्रहेषु उच्चेषु उच्चस्थानस्थितेषु तत्सु अन्येषु ग्रहेषु केन्द्रतां केन्द्रस्थानं प्रथमचतुर्थ-सप्तमदशमस्थानमुपगतेषु प्राप्तेषु तत्सु माघवती पूर्वादिगिन्दुमिव महिषी अचिरा देवी मृगाङ्कं मृगलाच्छनं षोडशजिनरूपं सुतं सूते स्म, प्रतिकलम् कलया कलया कृत्वा वृद्ध्या वर्द्धनाद्धेतोः सम्पूर्णत्व-मुपेयुषि प्राप्ते पीयूषद्युतेः चन्द्रस्य मण्डले कलङ्काङ्कुरः लाञ्छनाकृतिरूपः मलिनिमा मालिन्यं प्राप्यः लभ्यः परं किन्तु तस्मिन् युगपदेव सम्पूर्णत्वमुपेयुषि जिनेश्वरे न मलिनिमा प्राप्यः, तद्धेतोः प्रति-कलं वृद्धेरेवाभावदिति भावः ॥८५॥

वपुरिति

वपुर्यथाऽऽभ्यन्तरदोषलक्षणै-र्मलैर्विमुक्तं परमेशितुस्तथा ।
तथाऽवदातं बहिरप्यभूद् मलै-र्जरायुदोषप्रमुखैर्विनाकृतम् ॥८६॥

परमेशितुः जिनेश्वरस्य वपुः शरीरम् आभ्यन्तरैरन्तरङ्गैः दोषलक्षणैः रागादिरूपैरेव मलैः यथा विमुक्तं रहितमभूत्, तथा तदा जन्मनि सति बाह्येण जरायुदोषः गर्भाशयदोषः प्रमुखैः मलैरपि विनाकृतं रहितं सदवदातं विशुद्धमभूत् । तादृशातिशयमाहात्म्यादिति भावः ॥८६॥

तदेति—

तदा सुखं दुर्गतिवासिनामपि, क्षणं महानन्दविवर्णिकाऽभवत् ।
समुल्ललास त्रिजगत्प्रकाशक-स्तदा प्रकाशः समभानुभूरिव ॥८७॥

तदा जिनजन्मावसरे, क्षणं किञ्चित्कालं दुर्गतिवासिनां नरकवासिनामपि किमुतान्यत्रवासिनामित्यपेरर्थः । सुखमनायासेनैव महानन्दस्य विवर्णिका ख्यातिरभवत्, नारका अपि महानन्दमनुभवन्ति स्मेत्यर्थः । तदा तथा जिनजन्मकाले समा सर्वा भानोः सूर्यस्य भूरिव प्रदेश इव त्रिजगत्प्रकाशकः प्रकाशः तेजःपुञ्जः समुल्ललास आविर्बभूव, यद्वा समे सर्वे भानवो मरीचयः यस्यां सा चासौ भूश्च सेव, सकलभानुमती पृथ्वीव जातमित्यर्थः ॥८७॥

दिशामिति—

दिशां दशानामपि संबभूव यः, परः प्रकाशः स बुधैर्वितर्कितः ।
न किंचिदन्यत् समवायिकारणं, न्यवीविदत् स्वस्य जनुर्विनाऽर्हतः ॥८८॥

दशानां दशसङ्ख्याकानामपि दिशां यः परोऽतिमहान् प्रकाशः संबभूव, स बुधैः वितर्कितः किमेवमभूत् ? किमस्योपादानकारणमित्यादि चिन्तितम् किन्तु, स्वस्य स्वप्रादेयस्याऽर्हतः जिनस्य जनु जन्म विना जन्मनोऽन्यत् किञ्चित्समवायिकारणं तेजस उपादानकारणं न न्यवीविदत्, विविदुः अर्हज्जन्मप्रभावादेव तादृशः प्रकाशः न तु तस्य कारणान्तरमित्येवं निश्चिकायेत्यर्थः ॥८८॥

दिवीति—

दिवि स्वयं दुन्दुभयोऽनदंस्तमां, तदा प्रणुन्ना इव पुण्यकर्मणा ।
तथाऽनुकूलाः पवना ववुः परं, निजां ब्रुवाणा इव कामरूपताम् ॥८९॥

तदा जिनजन्मनि दिवि आकाशे—"द्यौ दिवौ द्वे स्त्रियामभ्रं व्योम" इत्यमरः पुण्यकर्मणा पुण्येन प्रणुन्नाः प्रेरिता इव दुन्दुभयः स्वयं केनाप्यवादिताः अनदंस्तमाम् नेदुः । तथा पवनाः निजां स्वीयां कामरूपताम् यथेच्छरूपताम् अनुकूलत्वस्य प्रतिकूलत्वस्य वा स्वाधीनत्वं ब्रुवाणाः कथयन्त इव परमत्यन्तमेव अनुकूलाः सुखस्पर्शाः सन्तः ववुः वान्ति स्म ॥८९॥

विज्ञायेति—

विज्ञायाऽऽसनकम्पनादवधिना तीर्थेशितुः षोडश-
स्योत्पत्तिं वसुधातलादथ जिनान्ते दिक्कुमार्यस्तदा ।
अष्टावेत्य जिनं जिनस्य जननीं चानम्य भोगङ्करा-
मुख्या निर्भयमित्युदीर्य च वयं जन्मोत्सवायाऽऽगताः ॥९०॥

आसनस्य स्वविष्टरस्य कम्पनाद्धेतोः अवधिनाऽवधिज्ञानद्वारा षोडशस्य तीर्थेशितुरुत्पत्तिं जन्म विज्ञाय, अथानन्तरम् तदा दिक्कुमार्यः अष्टौ भोगङ्करामुख्याः वसुधातलादधोलोकात् जिनान्ते जिनसमीपे एत्यागत्य जिनं जिनस्य जननीञ्चानम्य निर्भयं जिनजन्मोत्सवाय वयमागता इत्युदीर्ये-त्युक्त्वा च ॥९०॥

क्वापीति—

क्वापि स्थास्यति नाऽऽनन्तरं किल रजो जातेऽर्हतीतीव ता,
यावद्योजनमाहृतेन मरुता संहृत्य भूमौ रजः ।
व्याख्यानावनिमानमेव जगतां प्रख्यातुमेवाऽऽदृता,
गायन्त्यो धवलान् जिनेश्वरगुणांस्तस्थुः समन्ताज्जिनम् ॥९१॥

अर्हति जिने जाते उत्पन्ने सति आन्तरं मानसं रजोमलं धूलिश्च क्वापि न स्थास्यतीति हेतोरिव जगतां ता अष्टौ दिक्कुमार्यः यावद् योजनं सूतिगृहादाऽऽयोजनं आहृतेन विकुर्वितेन मारुता संवर्त्तन वायुना भूमौ रजः संहृत्य क्ष्मां शोधयित्वा जगतां जगज्जीवानां व्याख्यानावनिः व्याख्यानस्य भूमिः तस्या मानं योजनप्रमाणमेव प्रख्यातुं कथितुमेवादृतास्समाचरन्त्यः धवलान् उज्ज्वलान् जिनेश्वर-गुणान् गायन्त्यो जिनं शान्तिनाथं समन्तात्परितः तस्थुः ॥९१॥

अष्टाविति

अष्टावेत्योर्ध्वलोकादथ विधिनियता मङ्क्षु मेघङ्कराद्या,
दिक्कन्या भक्तिभङ्ग्या जिनपतिजननीं चापि नत्वा च नुत्वा ।
स्वाऽऽयाने हेतुमुक्त्वा विकृतजलधराः पापमालिन्यभाजो,
मेदिन्याः पावनायै ददुरधिकतरं गन्धवार्भिश्छटास्ताः ॥९२॥

अधोलोकादिक्कुमारिकाऽऽगमनानन्तरम् ऊर्ध्वलोकाद्दिवः विधिनियताः जिनजन्मोत्सवादि-विधिकृतनियताचाराः नियोगनिश्श्रेयाः मेघङ्कराद्या अष्टौ दिक्कन्या मङ्क्षु ऐत्य भक्तिभङ्ग्या भक्तिपूर्व-कम् जिनपतेः जननीं चापि, अपिना जिनञ्चेत्यर्थः । नत्वा नुत्वा च स्वस्य आयाने आगमने हेतुमुक्त्वा पापेन कृत्वा मालिन्यभाजः मलिनाया मेदिन्याः पृथिव्याः पावनायै शुचिकरणाय ताः

दिक्कन्याः विकृताः जलधरा मेघाः याभिस्तास्ताऽऽश्यः सत्यः । वैक्रियजलधरमुत्पाद्य गन्धवारिभिः सुरभिसलिलैः छटाः सिञ्चनानि अधिकतरं नि शेषेण शुचीकरणं यथास्यात्तथा ददुः कुर्वन्ति स्म ॥९२॥

युग्मम् वृष्ट्वेति—

वृष्ट्वा पुष्पाणि यावत् सुकृतभृतहृदस्ताः स्थितास्तावदेवा-
ऽष्टाऽन्याः पौरस्त्यपूर्वादिह लघुरुचकाद् दिक्कुमार्यः समीयुः ।
हृष्टा नन्दोत्तराद्या जिनजिनजननीपादयुग्मं प्रणम्य,
सूनोस्ते चात्र रूपं परमिति सुमता दर्पणान् दर्शयन्त्यः ॥९३॥

इमा गायन्त्योऽस्थुर्जिनपतिगुणान्प्राच्यककुभि,
स्वयं दिक्कन्योऽष्टावथ सुमतयोऽपाच्यरुचकात् ।
समाहारामुख्याः करसजलभृङ्गारसुभगाः,
प्रणम्रास्तद्वत् ता यमककुभि तस्थुः प्रमुदिताः ॥९४॥

ताः ऊर्ध्वलोकाद् आगता दिक्कुमार्यः सुकृतेन शुभकर्मणा भृतं पूर्णं हृद् यासां ताः पुण्यशालिन्यः पुष्पाणि वृष्ट्वा पुष्पवर्षणं कृत्वा यावत्तस्थुः तावदेव इह जिनजन्मसूतिगृहे पौरस्त्य-पूर्वात् लघुरुचकात् पौरस्त्यलघुरुचकादित्यर्थः । अन्या उक्तेभ्य इतरा अष्टौ दिक्कुमार्य समीयुरागत-वत्यः, ताः नन्दोत्तराद्याः हृष्टाः सत्यः जिनस्य जिनजनन्याश्च पादयुग्मं प्रणम्यात्र ते तव सूनो-र्जिनस्य रूपं परमत्युत्कृष्टमितीत्थं सुमताः समर्थनपराः दर्पणान् आदर्शान् दर्शयन्त्यः, इमा नन्दोत्तराद्याः जिनपतिगुणान् गायन्त्यः प्राच्यककुभि पूर्वदिशायामस्थुः, अथानन्तरम् अपाच्यरुचका-द्दक्षिणरुचकात् सुमतयः शुभबुद्धयः स्वयमेव करे सजलैः भृङ्गारैः सुभगाः शोभासम्पन्नाः समाहारामुख्याः अष्टौ दिक्कन्यः दिक्कुमार्यः तद्वत् पूर्वोक्तदिक्कुमारीवत् प्रणम्राः कृतप्रणामाः सत्यः ताः सर्वाः प्रमुदिताः यमककुभि दक्षिणदिशि तस्थुः ॥९३॥९४॥

दिक्कन्य इति—

दिक्कन्योऽथ पराः प्रतीच्यरुचकादष्टौ समागुर्मुदे-
लादेवीप्रमुखा महाव्यजनवद्धस्ताः प्रशस्ताऽऽशयाः ।
नत्वा देव्यचिरायुतं जिनपतिं ताः सिद्धिसद्माप्तये,
कुर्वाणागुणगानमन्तिकगतास्तस्थुः प्रतीच्यां दिशि ॥९५॥

अथानन्तरम्, प्रतीच्यरुचकात् पश्चिमरुचकात् परा उत्कृष्टा अन्या वा प्रशस्ताशयाः शुभाशयाः महाव्यजनवन्तः महातालवृन्तवन्तः हस्ता यासां ताः करधृतमहाव्यजनाः सत्यः इलादेवीप्रमुखाः अष्टौ दिक्कन्यः मुदा समागुः समागतवत्यः, ताः दिक्कन्यः सिद्धिसद्माप्तये

सकलकल्याणलाभाय देवी या अचिरा तदाख्या जिनजननी तद्युतं जिनपतिं नत्वा गुणगानं कुर्वन्त्यः प्रतीच्यां दिशि अन्तिकगताः जिनसमीपस्था एव तस्थुः ॥९५॥

अष्टविति—

अष्टोदग्रुचकात् समेयुरथ दिक्कन्यस्तथाऽलम्बुशा-
मुख्याश्चामरराजिपाणिकमलाः साम्राज्यजल्पोन्मुखाः ।
एतास्तीर्थकरं विनम्य मनसा तीर्थेशमात्रा समं
कौवेर्यां ककुभि स्थिता जिनगुणान् गायन्त्य एव स्थिरम् ॥९६॥

अथानन्तरम् उदग्रुचकादुत्तररुचकात् तथा पूर्ववदेव अलम्बुशामुख्याः साम्राज्यस्य जल्पे कथने उन्मुखाः जिनसाम्राज्यं वर्णयन्त्यः चामरराजीनि पाणिकमलानि यासां तास्तादृशः चामरहस्ताः अष्टौ दिक्कन्यः समेयुरागतवत्यः । एताः दिक्कुमार्यः तीर्थेशस्य मात्रा अचिरया समं सह तीर्थकरं मनसा विनम्य जिनगुणान् गायन्त्य एव कौबेर्यामुत्तरस्यां ककुभि दिशि स्थिरं स्थिताः ॥९६॥

दिक्कन्या इति—

दिक्कन्या अपराश्चिदिग्रुचकतोऽप्येयुश्चतस्रो जग
द्दीपं तीर्थकरं वदन्त्य इव ता दीपं दधानाः करे ।
भक्त्या तीर्थकरं प्रणम्य कलितं मात्रा सुतेरामुखा
देव्यो गीतकलाविनिर्जितसुधाः स्थैर्यं विदिक्षु श्रिताः ॥९७॥

विदिग्रुचकतोऽपि सुतेरामुखाः देव्यः गीतकलाभिः स्वरमाधुर्येण विनिर्जिता सुधा याभिः तास्तादृशः तीर्थकरं जगद्दीपं भवान् जगत्प्रकाशक इत्येवं वदन्त्यः स्तुवन्त्य इव करे दीपं दधानाः सत्यः अपराश्चतस्रः दिक्कन्या एयुराजग्मुः, तथा भक्त्या मात्रा कलितं सहितं तीर्थकरं प्रणम्य विदिक्षु स्थैर्यं स्थिरतां श्रिताः तस्थुरित्यर्थः ॥९७॥

रूपाद्या इति—

रूपाद्या अपि मध्यमैकरुचकादेताश्चतस्रोऽथ ता,
वन्दित्वा चतुरङ्गुलस्थितिपरं छित्त्वैव नालं विभोः ।
भूमौ तद्विनिखाय रत्ननिचयैरापूर्य तत्रोच्चकै-
र्दूर्वापीठमरोपयन् रविहयस्पर्धाविवृद्धादरम् ॥९८॥

अथानन्तरम् मध्यमान्मध्यदिक्स्थात् एकस्मात्प्रधानाद्रुचकाद् चतस्रः रूपाद्या दिक्कन्या अपि एता आगताः ता रूपाद्याः वन्दित्वा जिनं प्रणम्य चतुरङ्गुलस्थितिपरं चतुरङ्गुलमात्रं मुक्त्वैव विभोः जिनस्य नालं बहिर्नाभितन्तुं छित्त्वा भूमौ तन्नालं विनिखाय खाते निधाय रत्नैरापूर्य्य तत्र

खातोपरि रवेः सूर्यस्य हयानामश्वानां स्पर्धायां विवृद्ध आदर आग्रहो यस्य तं तादृशम् रविहये-भ्योऽधिकहरितम् उच्चकैरुच्चं दूर्वापीठम् दुर्वाङ्कुरास्तरणमरोपयन् स्थापयामासुः ॥९८॥

याम्यामिति—

याम्यां प्राच्यामुदीच्यामपि ककुभि च ता मूलसौधादकार्षुः
सम्यग्रम्भानिकेतत्रितयमपि चतुःशालसिंहासनभ्राट् ।
अभ्यङ्गोद्वर्तने ता यमककुभि चतुःशालमध्ये निषाद्य
सत्तैलोद्वर्तनाभ्यां जिनजिनजननीगात्रयोस्तन्वते स्म ॥९९॥

ता दिक्कुमार्यः मूलसौधापेक्षया याम्यां दक्षिणस्याम् प्राच्यां पूर्वस्यामुदीच्यामुत्तरस्यामपि च ककुभि दिशि चतुःशालेन सिंहासनेन च भ्राजते इति तादृशम् रम्भाणां कदलीनिर्मितानां निके-तानां गृहाणां त्रितयमपि सम्यग् रचनाचारु अकार्षुः । तथा ता दिक्कुमार्यः यमककुभि दक्षिणदिक्स्थिते चतुःशालमध्ये निषाद्य जिनं तज्जननीं चोपवेशयित्वा सद्भ्यां प्रशस्ताभ्याम् तलमुद्वर्तोऽभ्यङ्गस्ताभ्यां जिनजिनजननीगात्रयोः अभ्यङ्गोद्वर्त्तने तन्वते कुर्वन्ति स्म ॥९९॥

चतुरिति—

चतुःशाले प्राच्ये मणिकनकसिंहासनजुषौ,
विधाप्य स्वैरं तावपि सवनचार्चिक्यसुभगौ ।
ततो दिव्यैर्वस्त्रैर्व्यतनिषत ता मण्डिततनू,
न तादृश्यः क्वापि क्रममपनयन्तीह यदि वा ॥१००॥

ता दिक्कुमार्यः प्राच्ये पूर्वदिक्स्थे चतुःशाले सवनेन स्नानेन चार्चिक्येनानुलेपनेन च सुभगौ शोभासम्पन्नौ तौ जिनजिनजनन्यौ द्वावपि स्वैरं स्वेच्छानुसारेण मणीनां कनकानां च यत्सिंहासनं तज्जुषौ तदुपरि स्थतौ विधाप्य कृत्वा मणिकनकसिंहासन उपवेश्येत्यर्थः ततो दिव्यैः वस्त्रैः कृत्वा मण्डिततनू भूषितशरीरौ व्यतनिषताकारिषत, ननु किमिति क्रमश एतत् सर्वं कृत्य-मनुष्ठितमित्यत आह—यदि वा यतः इह ईदृशेऽवसरे तादृश्यः दिक्कुमार्यः क्रमपरिपाटीम् पौ-र्वापर्यं वा नापनयन्ति त्यजन्ति ॥१००॥

नीत्वेति

नीत्वा ता द्वितयं तदुत्तरचतुःशाले विघृष्याऽरणे-
र्वह्नौ पातितदीपिते लघुहिमक्षोणीधरादाहृतैः ।
गीर्वाणैरभियोगिभिः सुरभिभिर्दिव्यैर्हुतैश्चन्दनै,
रक्षापोट्टलिकां विधाय विधिवद् पाणौ ववन्धुर्द्वयोः ॥१०१॥

ता दिक्कन्याः तज्जिनजिनजननीरूपं द्वितयं द्वयं उत्तरचतुःशाले नीत्वा विमृश्य घर्षणं कृत्वा, अरणिं निर्मथ्येत्यर्थः । अरणिः तदाख्यकाष्ठभेदात् पूर्वं पातिते पश्चाद्दीपिते ज्वालिते वह्नौ अभियोगिभिः दासकल्पैः गीर्वाणैर्देवैराभियोगिकसुरैः लघुहिमवच्छीर्षाग्रगह्वरक्षुल्लहिमाद्रेर्हैमगह्वरे-रानीतैः सुरभिभिः सुपरिमलैः दिव्यैः मनुष्यदुर्लभैः चन्दनैः श्रीखण्डकाष्ठैः हुतैरग्निसमर्पितैः तद्भस्म-भिरिति यावत्, विधिवद्यथाविधि रक्षार्थं पोट्टलिकां विधाय द्वयोः जिनजिनजनन्योः पाणौ बबन्धुः जातकस्य प्रसूतेश्च पाणौ रक्षापोट्टलिकां बध्नन्तीत्याचारः ॥१०१॥

हरिदिति—

हरित्कुमारीभिरबन्धि रक्षिका, जिनस्य मातुश्च कराम्बुजेऽपि यत् ।
तदत्र जीतं भजते निदानतां, न तस्य रक्षाऽखिललोकरक्षितुः ॥१०२॥

ननु किमिति सर्वातिशयवतो जिनस्यापि रक्षापोट्टलिकाबन्धनमिति चेत्तत्राह—हरितां दिशां-कुमारीभिः यज्जिनस्य मातुश्च जिनमातुश्चापि कराम्बुजे रक्षिका रक्षार्थपोट्टलिका अबन्धि, तदत्र विषये जीतं कल्पः तथाविधलोकाचार एव निदानतां हेतुताम् भजते, यतः अखिललोकानां रक्षितुः रक्षकस्य तस्य जिनस्य रक्षा परविहिता रक्षा न, किन्तु स्वतः तस्य रक्षा, अन्येषां सर्वे-षामेव तद्रक्ष्यत्वाद्, रक्ष्यस्य रक्षकरक्षा न युज्यते इति भावः ॥१०२॥

धरेति

धराधरायुर्भव तीर्थनायके-त्युदीर्य कर्णद्वितयीतटे प्रभोः ।
इमाः स्वयं प्रस्तरगोलकद्वयं, विशङ्कमास्फालितवत्य उद्धतम् ॥१०३॥

इमाः दिक्कन्याः तीर्थनायक! धराधरस्य पर्वतस्यायुरिवायुर्यस्य तादृशः चिरजीवी भव! इत्याशीर्वचनमुदीर्योक्त्वा प्रभोर्जिनस्य कर्णद्वितय्यास्तटे प्रान्ते स्वयमेव प्रस्तरस्य गोलकयोः द्वयम् विशङ्कम् आघातादिशङ्कारहितम् उद्धतम् दृढं च यथास्यात्तथा आस्फालितवत्यः आघातमकार्षुः, तथाऽऽचारादिति भावः ॥१०३॥

अरिष्टेति

अरिष्टमन्तः स्म नयन्ति ता जिनं, समं जनन्या जनितप्रमोदया ।
अथैकपल्यङ्कगतौ विधाय तौ, गुणोत्करोद्गानपराः स्थितिं श्रिताः ॥१०४॥

अथोपचारानन्तरम् ता दिक्कन्यः जिनं जनितप्रमोदया हृष्टया जनन्या मात्रा समं सहैव अरिष्टम् प्रसूतिगृहस्यान्तः नयन्ति स्म, तथा तौ जिनजिनजनन्यौ एकपल्यङ्के गतौ स्थितौ विधाय, एकस्मिन् पल्यङ्क एव स्थापयित्वा गुणोत्कराणां गुणगणानामुद्गाने पराः तत्पराः सत्यः स्थितिं श्रिताः स्थिता इत्यर्थः ॥१०४॥

घण्टेति

घण्टावादनपीठकम्पनमुखैश्चिह्नैर्जिनेशो जनिं,
प्रज्ञातावधिना विबुध्य मुदितः सौधर्मभर्ताऽथ सः ।
नाट्यालोकमपास्य संभ्रमवशादुत्थाय सिंहासनात् ,
सप्ताष्टानि पदान्यभीत्य विदुरस्तुष्टाव तुष्टः प्रभुम् ॥१०५॥

अथाऽनन्तरम् स प्रसिद्धः विदुरः ज्ञानी सौधर्मभर्ता सौधर्मेन्द्रः घण्टाया वादनं पीठस्यासनस्य कम्पनं च मुखं प्रधानं येषां तादृशैः चिह्नैर्लिङ्गैः प्रज्ञातेन प्रयुक्तेनावधिनाऽवधिज्ञानेन जिनेशः जिनेशस्य जनि जन्म विबुध्य ज्ञात्वा मुदितः सन् नाट्यस्यालोकमालोकनमपास्य त्यक्त्वा सम्भ्रमवशात्त्वरातः सिंहासनादुत्थाय सप्त वा अष्टौ वा तानि पदानि अभीत्य सन्मुखं समेत्य तुष्टः सन् प्रभुं जिनेशं तुष्टाव ॥१०५॥

विमानमथ पालकं समधिरुह्य शक्रोऽभित-
श्चतुष्कगुणिताऽष्टकप्रमविमानलक्षैर्वृतः ।
अतीत्य तरसा बहून् विविधवारिधिद्वीपका-
नवापपरमेशितुर्झगिति सूतिकामन्दिरम् ॥१०६॥

अथानन्तरम् शक्र इन्द्रः पालकं तदाख्यं विमानमधिरुह्य चतुष्केण चतुःसङ्ख्यया गुणितो योऽष्टकः अष्टसङ्ख्या,द्वात्रिंशत्सङ्ख्येत्यर्थः स प्रमा प्रमाणं येषां तैस्तत्सङ्ख्यकैः विमानानां लक्षैः द्वात्रिंशल्लक्षविमानैः वृतः सन् तरसा वेगेन बहूननेकान् विविधान् वारिधीन् द्वीपकांश्चातीत्यातिक्रम्य झगिति परमेशितुः जिनस्य सूतिकामन्दिरमरिष्टगृहमवाप ॥१०६॥

प्रदेति

प्रदक्षिणपुरःसरं जिनपतिं जनन्या समं,
विनम्य परभक्तितः प्रतिकृतिं विमुच्य प्रभोः ।
समं परिकरेण तां जिनपतेः पुनर्मातरं,
निमीलितविलोचनां प्रविरचय्य निद्राभरैः ॥१०७॥

जिनस्य सर्वोऽपि तनोति पूजनं, स्वशक्तिमानेन जनो जगत्त्रये ।
इति स्वचित्तेन विचिन्त्य वासव-श्चकार शक्त्या किल रूपपञ्चकम् ॥१०८॥ युग्मम्

प्रदक्षिणपुरःसरं प्रदक्षिणपूर्वकम् जनन्या समं सह जिनपतिं परभक्तितोऽतिभक्तितः विनम्य प्रभोः प्रतिकृतिं बिम्बं विमुच्य जिनस्थाने तद्बिम्बं मुक्त्वा पुनस्तथा परिकरेण परिजनेन समं- जिनपतेः तामचिराख्यां मातरम् निद्राभरैः निमीलितविलोचनां मुद्रितनेत्रां विरचय्य कृत्वा वासव

इन्द्रः, जगत्रये सर्वोऽपि जनः स्वशक्तिमानेन जिनस्य यथाशक्ति पूजनं तनोति करोतीति स्वचित्तेन विचिन्त्य शक्त्या स्वरूपविकरणशक्त्या रूपपञ्चकम् स्वशरीरपञ्चकं चकार, किलेत्यैतिह्ये ॥१०७–१०८॥

॥युग्मम्॥

रूपपञ्चकविकरणानन्तरं शक्रः किं कृतवानित्याह सौरेति

सौरभ्योत्कटपाणिसंपुटगतं चक्रेऽभ्यनुज्ञाग्रहा –
देकेन प्रभुमातपत्रमधृत स्वाराट् तथैकेन च ।
द्वाभ्यामेव च चामरे पविमहो ! अन्येन धृत्वा ततः,
स्वर्णाद्रावतिपाण्डुकम्बलशिलापीठं समासेदिवान् ॥१०९॥

स्वाराडिन्द्रः अभ्यनुज्ञाग्रहाज्जिनानुज्ञामागृह्य एकेन रूपेण प्रभुं जिनं सौरभ्येणामोदेनोत्कटे अत्युत्कटसुरभिणि पाणिसम्पुटे गतं स्थितं चक्रे तथा एकेनान्येन रूपेण च आतपत्रं छत्रमधृत, द्वाभ्यां रूपाभ्यां च चामरे चामरद्वयमधृत, अहो इत्याश्चर्ये, ततोऽन्येन पञ्चमेन रूपेण पविं वज्रं धृत्वा स्वर्णाद्रौ मेरौ अतिपाण्डुकमलशिलापीठं अतिपाण्डुकमलाख्यमासनं समासेदिवान् प्राप्तः ॥१०९॥

निजेति—

निजाङ्कपर्यङ्कविराजिनं जिनं, वितत्य सौधर्मपतिः प्रमोदवान् ।
स्वदारपूर्वाभिमुखः स्वगौरव–प्रदर्शयंस्तत्र निषेदिवानयम् ॥११०॥

प्रमोदवान् मुदितोऽयं सौधर्मपतिः जिनं निजस्याङ्कः उत्सङ्ग एव पर्यङ्कः तत्र विराजिनं वितत्य कृत्वा स्वाङ्के कृत्वेत्यर्थः, स्वदारः स्वाभार्या या पूर्वादिक्, इन्द्रस्य पूर्वदिक्पतित्वादिति भावः । तदभिमुखः सन् स्वगौरवं सर्वाधिपो जिनो मदङ्के स्थित इत्यवं स्वमहत्वं प्रदर्शयन् तत्र मेरौ शिलापीठं निषेदिवानुपाविशत् ॥११०॥

द्वितीयकल्पाधिपतिस्त्रिशूलभृ–च्चतुर्गुणैः सप्तभिरावृतोऽभितः ।
विमानलक्षैर्वृषवाहनस्तदा, समाययौ पुष्पकयानमास्थितः ॥१११॥

तदा तस्मिन् काले द्वितीयस्य कल्पस्य अधिपतिरीशः त्रिशूलभृत् वृषवाहनः ईशानेन्द्रः पुष्पकाख्यं यानं विमानमास्थितः चतुर्गुणैः सप्तभिः अष्टाविंशतिभिर्विमानानां लक्षैः अष्टविंशतिलक्ष-विमानैर्वृतः समन्वितः सन् समाययौ ॥१११॥

विमानेति—

विमानलक्षै रविसंमितैर्वृतः, सनत्कुमाराभिधकल्पवासवः ।
सुवर्णशैले सुमनोविमानगः, समागमत् तत्र पवित्रिताशयः ॥११२॥

पवित्रिताशयः निर्मलाशयः सनत्कुमाराभिधस्य कल्पस्य वासवः इन्द्रः सुमनोविमानगः सुमनो-नामविमानस्थः रविसंमितैः द्वादशभिः विमानलक्षैर्वृतः सन् तत्र सुवर्णशैले मेरौ समागमत् ॥११२॥

श्रीति—

श्रीवत्साख्यविमानगः सुरगिरौ माहेन्द्रभर्ताऽऽययौ,
लक्षैरष्टभिरावृतोऽथ विलसद्वैमानिकानां जवात् ।
नन्द्यावर्तविमानगोऽप्युपजिनं ब्रह्माधिपोऽथागमत्,
स्वानन्देन विमानिनामुपजिनं लक्षैश्चतुर्भिः समम् ॥११३॥

अथानन्तरम्, माहेन्द्रकल्पस्य भर्ता पतिरिन्द्रः श्रीवत्साख्यविमानगः विलसतां शोभमानानां वैमानिकानाम् विमानस्थानामष्टभिः लक्षैरावृतः सन् सुरगिरौ मेरावुपजिनं जिनसमीपमाययौ । अथ तथा नन्द्यावर्तविमानगः ब्रह्माख्योऽधिपोऽपीन्द्रोऽपि स्वानन्देनात्यानन्दपूर्वकम् विमानिनां चतुर्भिर्लक्षैः सन्नुपजिनमागमदाययौ ॥११३॥

लक्षेति—

लक्षार्धेन विमानिनां सममरं श्रीलान्तकाधीश्वरः,
श्रित्वा कामगवं विमानमसमं स्वर्णाद्रिमेवागमत् ।
त्रिंशत्या द्विगुणीकृतैर्दिविषदां युक्तः सहस्रैः श्रितो,
यानं प्रीतिगमं स सप्तमदिवाधीशः सुरेन्द्रोऽपि च ॥११४॥

श्रीलान्तकाधीश्वरः कामगवं तदाख्यमसममनुपमं विमानं श्रित्वा अधिरुह्य विमानिनां वैमानिकानां लक्षार्धेन पञ्चाशत्सहस्रैः समं सह अरं शीघ्रमेव स्वर्णाद्रिमगमत्, तथा स प्रसिद्धः सप्तमदिवाधीशः सुरेन्द्रोऽपि च प्रीतिगमं तदाख्यं यानं विमानं श्रितः दिविषदां देवानां त्रिंशत्या द्विगुणीकृतैः चत्वारिंशत्सहस्रैः युक्तः अगमत् ॥११४॥

विमेति—

विमानिनां षड्भिरथो सहस्रकैः, समं सहस्रारसुपर्वनायकः ।
विमानमास्थाय मनोरमं स्यात्, समाययौ स्वर्णमहीधरे मुदा ॥११५॥

अथानन्तरम्, सहस्रारस्य तदाख्यकल्पस्य सुपर्वणां देवानां नायकः इन्द्रः मनोरमं तदाख्यं विमानमास्थायाधिरुह्य विमानिनां षड्भिः सहस्रकैः समं मुदा सहर्षम् स्वर्णमहीधरे मेरौ समाययौ ॥११५॥

अथेति—

अथाऽऽनतप्राणतकल्पनायकः, शतैश्चतुर्भिः सहितो विमानिनाम् ।
श्रितो यथार्थं विमलं विमानकं, सुमेरुशैलं रभसासमासदत् ॥११६॥

अथानन्तरम् आनतप्राणतकल्पनायकः इन्द्रः यथार्थम् सार्थकं विमलं तदाख्यं विमानकं विमानं श्रितः विमानिनाम् चतुर्भिः शतैः सहितः रभसा वेगात्सुमेरुशैलं समासदत् ॥११६॥

शतैरिति—

शतैस्त्रिभिर्नाकसदां परावृतः, प्रभाभृतामाऽऽरणकाच्युतप्रभुः ।
स सर्वतोभद्रविमानमाश्रितः, समागमत् स्वर्णगिरौ मुदाऽञ्चितः ॥११७॥

सः प्रसिद्धः आरणकाच्युतकल्पयोः प्रभुरच्युतेन्द्रः सर्वतोभद्रं तदाख्यं विमानमाश्रितः प्रभाभृतां तेजस्विनां नाकसदां देवानां त्रिभिः शतैः परावृतः समन्वितः मुदाञ्चितः मुदितः सन् स्वर्णगिरौ समागमत् ॥११७॥

अन्ये इति

अन्ये विंशतिरत्र मङ्क्षु भुवनाधीशाः समायासिषु-
र्द्वात्रिंशत् परमर्धिभारकलितास्ते व्यन्तराधीश्वराः ।
सूर्याचन्द्रमसौ द्विरुक्तमहसौ ज्योतिष्कनाथौ मुदे-
त्येवं संमिलिताश्च ते किल चतुःषष्टिः सुराधीश्वरा ॥११८॥

अन्ये उक्तेभ्य इतरे विंशतिः तत्सङ्ख्याका भुवनाधीशा. भुवनपतीन्द्राः अत्र सुमेरौ मङ्क्षु शीघ्रं समायासिषुः समागतवन्तः तथा ते प्रसिद्धाः परमाणामुत्कृष्टानां ऋद्धीनां भारैरतिशयैः कलिताः समन्विताः द्वात्रिंषद् व्यन्तराधीश्वराः तथा ज्योतिष्काणां तदाख्यदेवानां नाथावधीश्वरौ द्विरुक्तमहसौ द्विगुणिततेजस्कौ सन्तौ सूर्याचन्द्रमसौ च मुदा समागतवन्तः इत्येवमुक्तप्रकारेण सुराधीश्वराः चतुष्षष्टिः किल निश्चयेन सम्मिलिताः मेरावेकत्रिताः ॥११८॥

अथेति

अथाच्युतेन्द्रस्य निदेशमात्रतः, सुरा विचक्रुश्च निदेशकारिणः ।
सहस्रमष्टोत्तरमष्टधा तदा करीरकाणां रजतादिवस्तुभिः ॥११९॥

अथ सकलेन्द्रागमनानन्तरम् अच्युतेन्द्रस्य निदेशमात्रत आज्ञां प्राप्य निदेशकारिणः आभियोगिकाः सुराः तदा अष्टधा अष्टप्रकारैः रजतादिवस्तुभिः स्वर्णादिवस्तुभिः करीरकाणाम् शान्तिकलशानामष्टोत्तरं सहस्रं प्रत्येकमष्टोत्तरसहस्रकलशान् विचक्रुः ॥११९॥

क्षीरेति—

क्षीराम्भोनिधिपुष्कराम्बुधिभवाः पद्महृदाद् भारत-
क्षेत्रैरावतवर्षतीर्थनिवहात् पाथोजपाथोमृदः ।
सिद्धार्थांश्च महौषधीश्च सहसा क्षुद्राद्धिमाद्रेस्तथा
ते स्नात्राय सुमेरुकाननचयात् पुष्पाणि भक्त्याऽऽनयन् ॥१२०॥

ते आभियोगिका देवाः क्षीराम्भोनिधेः क्षीरसमुद्रात्पुष्कराम्बुधेश्च पुष्करवरसमुद्राच्च तथा पद्महृदात् भारतक्षेत्रस्य ऐरावतवर्षस्य च तीर्थनिवहात् तीर्थसमूहात् पाथोजानि कमलानि पाथांसि

जलानि मृदः मृत्तिकाश्च तथा क्षुद्रात्लघोः हिमाद्रेः सिद्धार्थाश्च सर्षपाश्च महौषधीश्च सुमेरोः काननचयाद्वनसमूहात्पुष्पाणि च स्नात्राय स्नात्रमहोत्सवाय भक्त्या सहसा द्रागेवानयन् ॥१२०॥

अथेति—

अथ व्यमुञ्चत् कुसुमाञ्जलिं पुरा, सुरैः समं द्वादशकल्पवासवः ।
सुमैः स तैरेव सरोजमिश्रितैः, प्रदग्धकृष्णागुरुधूपधूपितैः ॥१२१॥

अथसामग्रीघटनानन्तरम्, पुरा आदौ स प्रसिद्धः द्वादशकल्पवासवो अच्युतेन्द्रः सुरैः समम् प्रदग्धानां ज्वालितानां कृष्णागुरूणां धूपैः धूपधूमैः धूपितैः सुरभीकृतैः सरोजमिश्रितैः कमलसहितैः तैः सद्य आनीतैरव सुमैः पुष्पैः कृत्वा कुसुमाञ्जलिं व्यमुञ्चद्दौ ॥१२१॥

विस्फूर्जदिति—

विस्फूर्जन्मुखपद्मकोशकलिताः संवीतदिव्यांशुकाः,
पुष्पाभ्यर्चिततत्तदग्र्यकलशान् धृत्वा कराब्जेषु ते ।
सम्यग्दैवतदेवतासु सुतरां सर्वासु तूर्यत्रिक-
व्यग्रासु प्रयतेऽथ किन्नरगणे गानं वितन्वत्यपि ॥१२२॥

तीर्थेशस्य गुणान् पठत्सु दिविषद्वैतालिकेषूच्चकै-
स्तीर्थाधीश ! जयेति चारणगणेषूच्चारयत्सु स्तुतिम्
कान्त्या शारदशर्वरीपरिवृढज्योत्स्नाजयन्तस्ततः
शक्र अच्युतवासवप्रभृतयः स्नात्रं जिनेशो व्यधुः ॥१२३॥ (युग्मम्)

अथानन्तरम् विस्फूर्जद्भिः विकसितैः मुखान्येव पद्मकोशास्तैः कलिताः शोभिताः हर्षप्रफुल्लमुखाः संवीतानि परिहितानि दिव्यान्यंशुकानि वासांसि यैस्तादृशाश्च सन्तः कराब्जेषु करकमलेषु पुष्पाभ्यर्चितान् तान् तानग्र्यान् उत्कृष्टान् कलशान् धृत्वा सर्वासु दैवतदेवतासु सुतरामतिशयेन सम्यक् तूर्यत्रिकेषु नृत्यगीतवाद्येषु व्यग्रासु व्यापृतासु सत्सु प्रयते सावधाने किन्नरगणे गानं वितन्वति कुर्वत्यपि सति दिविषदां देवानां वैतालिकेषु मङ्गलपाठकेषु तीर्थेशस्य गुणान् उच्चकैरुच्चस्वरेण पठत्सु सत्सु चारणगणेषु तीर्थाधीश ! जयेत्येवं स्तुतिमुच्चारयत्सु सत्सु च ततोऽनन्तरम् कान्त्या शारदः शारदर्तुभवः यः शर्वर्याः रात्रेः परीवृढः पतिश्चन्द्रः तस्य ज्योत्स्नाः जयन्तः अच्युतवासवप्रभृतयः अच्युतेन्द्रादयः शक्राः देवा जिनेशः जिनेशस्य स्नात्रं व्यधुः चक्रुः ॥१२२॥१२३॥युग्मम्

ये इति—

ये पुष्पस्तवकन्ति मूर्धनि मुखे कर्पूरपूरन्ति ये,
कण्ठे माणवकन्ति ये च हृदये श्रीखण्डलेपन्ति ये ।
सर्वाङ्गेषु यशश्चयन्ति च जयश्रीणां कटाक्षन्ति ये,
वार्वाहाः कलशेभ्य एव पतिताः क्षीराम्बुधेस्ते प्रभोः ॥१२४॥

ये वार्वाहः जलप्रवाहः प्रभोः जिनेशस्य मूर्धनि मस्तके पुष्पस्तवकन्ति पुष्पाणां स्तवकानि गुच्छानि इवाचरन्ति मस्तकपाताहतानां जलानां स्थूलबिन्दुवृन्दानां गुच्छकारत्ववाद्धावल्याच्चेति भावः । तथा, ये जलप्रवाहा मुखे, जिनेशस्येति सर्वत्र सम्बध्यते कर्पूरपूरन्ति कर्पूरपूरवदाचरन्ति, शैत्यात्सौरम्याच्चेति भावः । तथा ये कण्ठे माणवकन्ति, हारवदाचरन्ति गलस्योभयतो हाराकारेणाम्भःपातादिति भावः । तथा हृदये श्रीखण्डलेपन्ति श्रीखण्डलेपवदाचरन्ति शैत्यात्सौरम्याच्चैवेति भावः । सर्वाङ्गेषु यशश्चयन्ति यशश्चयवदाचरन्ति धावल्यादेवेति भावः तथा ये जयश्रीणां विजयलक्ष्मीणाम् कटाक्षन्ति कटाक्षवदाचरन्ति धावल्यादेवेति भावः । ते तादृशाः कलशेभ्यः पतिताः वार्वाहाः जलप्रवाहाः क्षीराम्बुधेः क्षीरोदधेरेव पतितः जलानामतिनिर्मलत्वाद् दुग्धसाम्यदिति भावः ॥उपमा ॥ १२४ ॥

विभाविति

विभौ त्रिषष्ट्या स्नपिते सुरेश्वरैः, परस्परालम्बितशुद्धसंवरैः ।
तदद्भुतं निर्मलतामवाप्य यद् ध्रुवासिभिर्निर्वृतिरापि तैस्तदा ॥१२५॥

सुरेश्वरैः शक्रैः त्रिषष्ट्या त्रिषष्टिसङ्ख्यकैः विभौ जिनेशे स्नपिते सति, एकस्य शक्रेन्द्रस्य त्वङ्के एव जिनेशः इति स्नपनेऽन्यापारस्त्रिषष्टयेत्युक्तामिति बोध्यम् । परस्परमालम्बितमाश्रितं शुद्धं संवरं कर्मसंवरं यैस्तैस्तादृशैः तैः ध्रुवासिभिर्देवैः निर्मलताम् निरञ्जनत्वमवाप्य यन्निर्वृतिः सुखमपि तदद्भूतमाश्चर्यम् स्नाता हि निर्मलतामाप्य निर्वृतिमेति, अत्र तु स्नपयितेति तदाश्चर्यमिति भावः, जिनेशसेवातः शुद्धान्तराः सुखमायन्तीति यावत् ॥१२५॥

वपुश्चेति—

वपुश्च संमार्ज्य सुगन्धिवाससा, विलिप्य गोशीर्षकदिव्यचन्दनैः ।
व्यभूषि पुष्पैरपि तैर्जिनस्य यत्, तदद्भुतं यत् फलमापि तत्क्षणम् ॥१२६॥

सुगन्धिना सुवासितेन वाससा जिनस्य वपुः शरीरं संमार्ज्य स्नानजलरहितं कृत्वा च गोशीर्षकैः गोरोचनैः दिव्यचन्दनैश्च विलिप्य अनुलेपनं कृत्वा तैर्देवैः यत्पुष्पैः व्यभूषि विभूषितं तं कृतमपि तदद्भूतम् यद्यतः तत्क्षणमेव फलम् जिनसेवाफलमापि ॥१२६॥

विधायेति--

विधाय सम्यक् स्नपनार्चने ततः सुराधिनाथा जिननाथमानमन् ।
जगत्त्रयीनायकभावमग्रतो, विभोर्ब्रुवाणा इव शैशवेऽपि ते ॥१२७॥

ततोऽनन्तम् सुराधिनाथाः शक्रा विभोर्जिनस्य स्नपनार्चने स्नपनपूजने सम्यग्यथाविधि विधाय ते शक्राः देवा शैशवे बाल्येऽपि अग्रतोऽग्रे जगत्त्रय्याः नायकभावमीशत्वं ब्रुवाणा इव जिननाथमानमन्नमन्ति स्म ॥१२७॥

साविति--

सौधर्मप्रभुवद् विधाय तरसेशानप्रभुः पञ्चकं,
रूपाणामकृतैककेन स जिनं स्वोत्सङ्गपर्यङ्कगम् ।
अन्येनातपवारणं विधृतवान् द्वाभ्यां सिते चामरे,
शूलं प्रोल्लुलयन् दधार पुरतोऽप्यन्येन मूलं श्रियाम् ॥१२८॥

सौधर्मप्रभुः सौधर्मेन्द्रस्तद्वत् इशानप्रभुः ईशानेन्द्रोऽपि तरसा झटिति रूपाणां पञ्चकं विधाय स ईशानेन्द्रः एककेनैकेन रूपेण जिनं स्वस्योत्सङ्गेऽङ्क एव पर्यङ्कस्तद्गम् अकृत स्वोत्सङ्गेऽस्थापयदित्यर्थः । तथा अन्येन द्वितीयेन स्वरूपेण आतपवारणं छत्रं विधृतवान्, द्वाभ्यां सिते धवले चामरे विधृतवान् तथा अन्येन पञ्चमेन स्वरूपेण श्रियां मूलं निदानं शूलं तदाख्यमायुधं प्रोल्ललयन् भ्रामयन् पुरतोऽग्रतोऽपि स्थितः दधार मूलं धृतवान् ॥१२८॥

स्फटिकेति

स्फटिकवृषभान् सुत्रामाथ व्यधत्त चतुर्मितान्,
सुकृतदलिकाद् मूर्ति प्राप्तानिवेशदिदृक्षया ।
सुरशिखरिणश्छाया येषु स्वयं प्रतिबिम्बिता,
कनकमयतामेवाऽऽचष्टाऽक्षवृत्तिविबोधिनी ॥१२९॥

अथ रूपपञ्चकविकरणाद्यनन्तरम् सुत्रामा शक्रेन्द्रः ईशस्य जिनस्य दिदृक्षया द्रष्टुमिच्छया सुकृतदलिकात् पुण्यदलिकात् मूर्ति रूपादिमत्त्वै प्राप्तानिव चतुर्मितान् चतुरः स्फटिकस्य वृषभान् बलीवर्दान् व्यधत्त, विचकार, येषु वृषभेषु स्वयं स्वत एव प्रतिबिम्बिता सुरशिखरिणो मेरोच्छाया प्रतिबिम्बम् अक्ष्णां नेत्राणां वृत्तेः विबोधिनी चाक्षुषज्ञानजनिका सती कनकमयतां वृषभाणां कनकनिर्मिततामेवाचष्ट कथितवती, स्फटिके सुवर्णप्रतिभासात्सुवर्णमया ददृशिरे वृषभा इत्यर्थः ॥१२९॥

तेषामिति

तेषामुन्नतशृङ्गभागनिरयत्पीयूषविक्षेपका-
म्भोधाराभिरमर्त्यराड् व्यरचयत् स्नात्रं जिनस्याऽष्टभिः ।

अष्टानां ककुभां ध्रुवं परिवृढैः स्वच्छाम्बुधारामिषात्,
संप्राप्तानि तदा यशांस्युपहृतान्येतानि मौलौ विभोः ॥१३०॥

अमर्त्यराट् शक्रेन्द्रः अष्टभिः अष्टसङ्ख्याकाभिः तेषां वृषभाणामुन्नतेभ्यः शृङ्गेभ्यः भागे विषाणेभ्यः निरयन्तीभिः प्रवहन्तीभिः पीयूषविक्षेपिकाभिः सुधावद्भिः अम्भसां जलानां धराभिः जिनस्य स्नात्रं व्यरचयञ्चकार तदुत्प्रेक्षते तदा यत्तदोर्नित्यसंबन्धाद् यदा स्नात्रकाले एतानि स्नात्रजलानि विभोर्जिनस्य मौलौ मस्तके अष्टानां ककुभां दिशां परिवृढैरीशैः अष्टदिक्पालैः स्वच्छानामम्बूना धाराणां मिषाद् व्याजात् उपहृतानि उपदीकृतानि स्थापितानि तदा यशांसि सम्प्राप्तानि अवाप्तानि तानि ध्रुवमित्युत्प्रेक्षायाम्, धावल्यादिति भावः ॥१३०॥

प्रक्षिप्तमिति

प्रक्षिप्तं सुरनायकैः स्वशिरसि स्नानाम्बु कैश्चित् प्रभो—
रन्यैस्तद्विनिपातुकं नयनयोराधायि यत्नादपि ।
कैश्चिच्चन्दनपङ्कवत् विनिहितः स स्नात्रपङ्कोऽलिके,
धन्यैरेव जनुःसहस्रकलुषोच्छेद्याऽऽप्यते तत्परम् ॥१३१॥

कैश्चित् सुरनायकैरिन्द्रैः प्रभोः जिनस्य विनिपातुकं पतत्तत्स्नानाम्बु स्नानजलम् स्वस्य शिरसि प्रक्षिप्तं सिक्तम् तथा अन्यैः कैश्चित् यत्नाद्यत्नपूर्वकम् नयनयोरप्याधायि प्रक्षिप्तम् तथा कैश्चिच्चन्दनपङ्कवत् स स्नात्रपङ्कः स्नानजलधूलिमिश्रणाज्जातः पङ्कः अलिके विनिहितः ननु किमित्थं तैरकारीति चेत्तत्राह—परं दुर्लभं तत्स्नात्रजलादि जनुषां जन्मनां सहस्राणां कलुषाणां पापानामुच्छेदि विनाशकं तत्स्नात्रजलादि धन्यैः तादृशाद्भुतभाग्यशालिभिरेवाऽऽप्यते ननु सर्वैरपीत्यर्थः ॥१३१॥

सौधेति

सौधर्मेन्द्रस्त्रिभुवनगुरोर्वर्ष्म संमार्ज्य गन्ध—
काषाय्याऽथो मलयजरसैर्भक्तिपूर्वं विलिप्य ।
चक्रे पूजामवधिनियतां विश्रुतामष्टभेदां,
बुद्धिस्तस्य स्खलति किमहो ! तादृशे वाऽपि कार्ये ॥१३२॥

अथो अनन्तरम् सौधर्मेन्द्रः त्रिभुवनगुरोर्जिनस्य वर्ष्म शरीरम् 'शरीरं वर्ष्म विग्रहः' इत्यमरः गन्धकाषाय्या सुगन्धिकषायवस्त्रेण सम्मार्ज्य सम्प्रोञ्छ्य भक्तिपूर्वं मलयजरसैः चन्दनद्रवैर्विलिप्य अवधिनियतामष्टभेदां विश्रुतां प्रसिद्धां पूजां चक्रे । ननु किमिति अवधिनियतैव पूजा कृता, न जातु स्खलितेति चेत्तत्राह अहो तादृशे जिनपूजारूपेऽपि कार्ये तस्येन्द्रस्य बुद्धिः स्खलति प्रमा-

धति किं ? नैवेत्यर्थः असाधारणे कार्ये चेत्प्रमाद्येत्तर्हि क्वाप्रमत्ता स्यादिति भावः ॥१३२॥ का साऽष्टभेदा पूजेत्यत आह—

गन्धैरिति—

गन्धैश्चन्दनचन्द्रकुङ्कुमसुखैर्धूपैश्च कृष्णागुरु-
प्रोद्भूतैर्गरुडाक्षतैरविकलैः पुष्पैश्च नानाविधैः ।
दीपैः स्नेहदशासमृद्धिकलितैर्वर्यैर्विचित्रैः फलैः
नैवेद्यैश्च जलैरपीति सुकृती पूजां व्यधादष्टधा ॥१३३॥

चन्दनं चन्द्रः कर्पूरः "घनसारश्चन्द्रसंज्ञः कर्पूर" इत्यमरः कुंकुमं घुसृणं च मुखं प्रधानं येषाम् तैस्तादृशैः गन्धैरनुलेपनैः कृष्णागुरुभिः हुतैः सद्भिः प्रोद्भूतैः जातैः धूपैश्च अविकलैर खण्डितैः गरुडाक्षतैः गरुडवद्धवलैरक्षतैस्तण्डुलैः नानाविधैः पुष्पैश्च स्नेहः घृतादिद्रवः दशा वर्तिः तेषां समृद्ध्याऽधिक्येन कलितैः समन्वितैः दीपैः वर्यैः सत्तमैः विचित्रैर्नानाविधैः फलैः नैवेद्यैर्मोद-कादिरूपैर्जलैरपीत्येवमष्टधा पूजाम् सुकृतीन्द्रः व्याधात् ॥१३३॥

पुरेति—

पुरन्दरोऽथाद्भुतरत्नपट्टकेऽष्टमङ्गलीं तन्दुलकैर्बभार च ।
दुरन्तकर्माष्टकभेदहेतवे प्रसिद्धसिद्ध्यष्टकलब्धये तथा ॥१३४॥

अथ पूजानन्तरम्, पुरन्दर इन्द्रः अद्भुतेऽलौकिके रत्नस्य पट्टके दुरन्तानां दुष्परिणामानां कर्माष्टकानां भेदस्य हेतवे नाशार्थम् तथा प्रसिद्धस्य सिद्धीनामणिमादीनामष्टकस्य लब्धये प्राप्तये तन्दुलकैः रूप्यतण्डुलैः अष्टानां मङ्गलानां समाहारस्ताम् अष्टमङ्गलान्यलिखत् बभार पूरयत् च ॥१३४॥

का साष्टमङ्गलीत्यत आह आदर्श इति—

आदर्शः परिदृश्य एव विदुषां भद्रासनं भद्रकृद्,
याथार्थ्येन च वर्धमान उदितः श्रीपूर्णकुम्भस्तथा ।
वर्ण्यं मत्स्ययुगं समुज्झितजडं श्रीवत्सकस्वस्तिकौ,
नन्द्यावर्त इतीरिता मुनिवरैः सा ज्ञानरत्नाकरैः ॥१३५॥

विदुषां विद्वज्जनानां परिदृश्यः दर्शनीयः आदर्शः दर्पणः एव भद्रकृत्कल्याणकृत् भद्रासनम् तथा याथार्थ्येन यथार्थतः वर्धमानः, उदितः कथितः निरावरणः समृद्धिमान् पूर्ण-कुम्भः पूर्णकलशः समुज्झितं त्यक्तं जडं जडता च यतस्तादृशं वर्ण्यं प्रशस्तं मत्स्ययु-गम् श्रीवत्सकस्वस्तिकौ नन्द्यावर्त इतीत्थं ज्ञानरत्नाकरैः ज्ञानिभिः मुनिवरैः साऽष्टमङ्गलीरिता कथिता ॥१३५॥

तत इति--

ततोऽपसृत्यामरनायको मनाक् प्रपञ्च्य चाऽऽरात्रिमुच्छलच्छिखम् ।
सुमङ्गलं मङ्गलदीपकं विभोः सहर्षमुत्तारयति स्म भावतः ॥१३६॥

ततोऽष्टमङ्गलीपूरणानन्तरम्, अमरनायकश्शक्रो मनागीषदेवापसृत्य दूरं गत्वा उच्छलन्ती उद्गच्छन्ती शिखा ज्वाला यस्य तादृशमारात्रिकं नीराजनं प्रपञ्च्य विधाय च भावतो भक्तितः सहर्षम् विभोर्जिनस्य सुमङ्गलं मङ्गलदीपम् उत्तारयति स्म ॥१३६॥

प्रणम्येति--

प्रणम्य गीर्वाणाग्रणीस्ततः समं स गीर्वाणगणेन तत्क्षणम् ।
प्रचक्रमे स्तोतुमनन्तभक्तिभाग् जिनेश्वरं चित्त्रयभास्वरप्रभम् ॥१३७॥

ततोऽनन्तरम् स गीर्वाणगणाग्रणीरिन्द्रः तत्क्षणम् गीर्वाणगणेन समं प्रणम्य अनन्तभक्तिभाक् सन् चित्त्रयेण मतिश्रुतावधिरूपेण ज्ञानत्रयेण भास्वरा प्रभा यस्य तं जिनेश्वरं स्तोतुं प्रचक्रमे ॥१३७॥

स्तुतिमेवाह जिनेति—

जिनपते ! स्तवनं विदधे तव प्रतिपदां पदमाप्तुमनश्वरम् ।
उपधिभावमपास्य निषेविताः, प्रददते प्रभवा हि समीहितम् ॥१३८॥

जिनपते ! अनश्वरम् शाश्वतम् प्रतिप्रदां ज्ञानानां पदं स्थानम्, मोक्षपदमित्यर्थः आप्तुं प्राप्तुं तव स्तवनं स्तुतिं विदधे, कुतस्तादृगाशा तवेति चेत्तत्राह हि यतः प्रभवः भवादृशाः अतिशयवन्तः उपधिभावं छलमपास्य निष्कपटमित्यर्थः निषेविताः स्तुतिपूजादिना सेविताः सन्तः समीहितं ददते ॥१३८॥

अन्विति—

अनुपमा तव मूर्तिरियं मया, ध्रुवमवैक्षि विभो ! न भवान्तरे ।
अपरथा न ममाऽपि भवान्तरं, कथमपि प्रभवेद् भवतो यथा ॥१३९॥

विभो ! मया इन्द्रेण अनुपमा तवेयं वर्तमाना दृश्यमाना च मूर्तिः भवान्तरे पूर्वजन्मनि न अवैक्षि, ध्रुवमेतत्, अपरथा अन्यथा भवान्तरे तवेदृग्मूर्तिदर्शने सति ममाऽपि कथमपि भवान्तरं जन्मान्तरं न प्रभवेत् न स्यात् भवतस्तव यथा, जन्मान्तरं न भविता तथेत्यर्थः, त्वदीदृग्रूपदर्शनान्न भवान्तरं भवति प्राणिन इत्यभिप्रायः स्तोतुः ॥१३९॥

भवेति—

भवशतार्जितकल्मषसन्ततिर्भवदवेक्षणतो जिन ! नश्यति ।
शममुपैति दवानलसंहतिर्नववलाहकवर्षणतो यथा ॥१४०॥

जिन ! भवतोऽवेक्षणतोऽवलोकनतः भवशतेषु अर्जितानां कल्मषाणां पापानां सन्ततिः नश्यति, तत्रोपमामाह—यथा नवस्य बलाहकस्य मेघस्य—"अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः" इत्यमरः । वर्षगत दवानलसंहतिः शमं शान्तिमुपैति, तथेत्यर्थः ॥१४०॥

अमृतेति—

अमृतदीधितिदीधितिसन्निभैस्तव गुणैरसमानतया श्रुतैः ।
सकललोकनिकामविसृत्वरैः, किमु कणादमतं न हतं प्रभो ! ॥१४१॥

प्रभो ! सकलेषु लोकेषु निकामतया अप्रतिहततया विसृत्वरैः प्रसरद्भिः, अत एव असमानतया अनुपमतया श्रुतैः ख्यातैः अनुपमैरित्यर्थः, तव, अमृतदीधितेश्चन्द्रस्य दीधितीनां मरीचीनां सन्निभैस्तुल्यैः गुणैः निर्मलैर्गुणैरित्यर्थः, कणादस्य तदाख्यमुनेः मतं चतुर्विंशतिर्गुणाः ते च न सर्वे सर्वत्र किन्तु विभक्ताः—यद्वा तन्मते आत्मनो बुद्धीच्छादयोऽष्टगुणाः इत्येवं रूपम् हतं खण्डितं किमु न ? अपि त्ववश्यं हतम्, भवद्गुणानामानन्त्यात्सर्वगत्वाच्चेति भावः ॥१४१॥

द्रुतेति—

द्रुतसुवर्णरसेन तवाङ्गकं, ध्रुवमिदं घटितं शुभकर्मणा ।
विकचचम्पकपुष्परसेन वा, विमलपीतसुगन्धगुणास्ततः॥१४२॥

तवेदं दृश्यमानमङ्गकं बालत्वाद्—ह्रस्वमङ्गं, बालशरीरमित्यर्थः, शुभकर्मणा कारणीभूतेन पुण्यकर्मणा द्रुतस्य विलीनस्य सुवर्णस्य रसेन द्रवेण घटितं निर्मितम्, ध्रुवमेतत्, वा अथवा विकचनां प्रफुल्लानां चम्पकपुष्पाणां रसेन घटितं ततो हेतोस्तव भवदङ्गे विमला पीतं पीतता सुगन्धः, सौरभ्यं विमलं नैर्मल्यं च गुणाः, कारणगुणा कार्यगुणानारभन्ते इति न्यायात्कार्यात्कारणानुमानादिति भावः ॥१४२॥

जिनेति—

जिन ! विमानमनुत्तरसंज्ञकं, न सुषमां दधते भवतो विना ।
गृहमणौ भवनादपसारिते, स्फुरति किं तिमिरं न निरर्गलम् ? ॥१४३॥

जिन अनुत्तरसंज्ञकं विमानम् भवतः विना, तव च्यवनेनात्रावताराद्भवद्रहितम्, सुषमां परमां शोभां न दधते, तत्र दृष्टान्तमाह भवनाद् गृहाद् गृहमणौ दीपे अपसारीते दूरीकृते सति निरर्गलमप्रतिहतं तिमिरं ध्वान्तं न स्फुरति वर्धते किम् ? अपि त्ववश्यं वर्धते तथा भवतो विना अनुत्तरविभानं प्रकासरहितमित्यर्थः ॥१४३॥

हृदयेति—

हृदयवासमलं कुरु मे विभो, परिभवन्तितमां न यथैव माम् ।
कथमपि प्रतिपक्षमुखा द्विपस्तव पराक्रमकुण्ठितविक्रमाः ॥१४४॥

विभो ! मे मम हृदये वासमलङ्कुरु स्वीकुरु हृदयरूपं वासं वासस्थानमिति वा मम हृदयस्थो भवतु भवानित्यर्थः, तत्र तव प्रयोजनाभावेऽपि ममैव प्रयोजनमित्याह यथा तत्र पराक्रमेण प्रभावेन कुण्ठितविक्रमाः प्रतिहतप्रभावाः सन्तः प्रतिघप्रमुखाः क्रोधादयः, "कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियाः" मित्यमरः द्विषः अन्तरारयः मां न परिभवन्तितमां नितरां पीडयन्त्येव ॥१४४॥

कमपीति—

**कमपि कश्चन चेद् विनिषेवते, न खलु सोऽपि कदाचन सीदति ।**
**परमहं भुवनत्रितयप्रभो !, न सुखमेमि कथं तव सेवकः ॥१४५॥**

कश्चन पुरुषः कमपि समर्थं विनिषेवते सेवते चेत्, सोऽपि खलु कदाचन न सीदती पीडामनुभवति, सेव्येन सेवकरक्षणादिति भावः परं किन्तु भुवनत्रितयप्रभो ! अहं तव सेवकः सन्नपि कथं न सुखं मोक्षसुखमेमि प्राप्नोमि इतरवत्त्वमपि मां रक्षेत्यर्थः ॥१४५॥

समेति—

**समधिगम्य परं तव दर्शनं, निखिलनास्तिकपक्षविघातनात् ।**
**अनुभवागमसाधनवद्धधी-र्विबुधराज्यमिदं चरितार्थये ॥१४६॥**

तव परं परमार्थरूपं दर्शनं सम्यग्दर्शनम् त्वदुक्ततत्त्वश्रद्धानलक्षणं समधिगम्य बुध्वा निखिलानां नास्तिकपक्षाणामनात्मवादिमतानां विघातनात्तवदर्शनेन खण्डनाद्धेतोः अनुभवेन प्रत्यक्षादिरूपेण आगमेन तव प्रवचनरूपेण च साधनेन हेतुना कृत्वा बद्धधीः दृढबुद्धिरहमिदमनुभूयमानं विबुधराज्यं देवराज्यं चरितार्थये सफलयामि, नास्तिवान मतस्य देवादिभवनीषेधात्मकस्य खण्डनात् मम राज्यं यथार्थमेव प्रकटयामीति भावः ॥१४६॥

सुकृतेति—

**सुकृतवासनया तव सेवनं, विरचयन् न कथं भववासनः ?**
**भवति नैव कुकर्मविघातने, तदहमारचयामि जिनेश्वर ! ॥१४७॥**

जिनेश्वर ! सुकृतवासनया पुण्येच्छया तव सेवनं विरचयन् कुर्वन कथं भवे वासना यस्य स तादृशः भवानुबन्धी न नैव भवति, अपि तु भवमेवानुबध्नाति, पुण्यफलस्य भवस्यावश्यम्भावादिति भावः, अहं तत्सेवनं कुकर्मणां कर्माष्टकाणां विघातने विनाशनिमित्तमारचयामि करोमि, यथा सकलकर्मक्षयतः पुनर्भवो मा भूदिति भावः ॥१४७॥

स्तवमिति—

**स्तवं वितत्येति सुपर्वनायको, जिनेशमीशानवृषाङ्कतस्ततः ।**
**करे समादाय स पञ्चरूपभागरिष्टवेश्मान्तरमाशु जग्मिवान् ॥१४८॥**

इत्युक्तप्रकारेण स्तवं वितत्य कृत्वा ततोऽनन्तरम् पञ्चरूपभाक् कृतपञ्चशरीरः स सुपर्व-नायकः शक्रेन्द्रः ईशानवृषाङ्कतः ईशानेन्द्रोत्सङ्गतः "वज्री वासवो वृत्रहा वृषा" इति–"उत्सङ्गचिह्न-योरङ्क" इति चामरः । जिनेशं करे स्वकरे समादाय आशु शीघ्रमेव अरिष्टवेश्मनः प्रसूतिगृह-स्यान्तः जगमिवान् ॥१४८॥

हृत्वेति—

हृत्वाऽवस्वापिनीं तां प्रतिकृतिमपि तामार्हतीमार्हतो द्राग्,
मुक्त्वा मातुः समीपे जिनपतिमुपधौ कुण्डले दिव्यवस्त्रे ।
न्यस्योल्लोचे च सारं विविधमणिमयं कन्दुकं लम्बमानं,
यस्मिन् दृष्टिर्विनोदं भजति भगवतस्तस्य च स्याद् न दृष्टिः ॥१४९॥

जिनेश्वराः स्तन्यपिबा भवन्ति न क्रमं विजानन्निति नाकनायकः ।
प्रभोः कराङ्गुष्ठतलेऽतिनिर्मले स्वभक्तिशक्त्या समचारयत् सुधाम् ॥१५०॥

आर्हतः अर्हतोऽयं स शक्रेन्द्रः तां पूर्वकृताम् अवस्वापिनीं निद्रां तथा तां पूर्वन्यस्ता-मार्हतीम् अर्हतः प्रतिकृतिं बिम्बमपि हृत्वा संहृत्य जिनपतिं मातुः समीपे मुक्त्वा निधाय कुण्डले दिव्ये वस्त्रे च उपधावुच्छीर्षे यस्य परिधाप्य उल्लोचे विताने "अस्त्री वितानमुल्लोच" इत्यमरः सारं श्रेष्ठमम् विविधमणिमयं लम्बमानं कन्दुकं स्वर्णगन्दुकं च, न्यस्य, यस्मिन् कन्दुके भगवतः दृष्टिर्नेत्रं विनोदं कौतुकं भजति, तत्स्यान्यस्य दृष्टिदोषश्च न स्यात्, लम्बमानं चित्रं वस्तु दृष्ट्वा बालकः क्रीडति, आगतेन च प्रथमं तद्विलोकनात्प्रथाद्बालकावलोकनाच्च दृष्टिदोषोऽपि निवर्तते, अतस्तथाकरणाचार इति भावः तथा नाकनायकः शक्रेन्द्रः जिनेश्वरः स्तन्यपिबाः मातृस्तनोद्भवदुग्ध-पातारो न भवन्तीथं क्रमम् व्यवहार जानन् सन् प्रभोर्जिनस्यातिनिर्मले करस्याङ्गुष्ठतले स्वस्य भक्त्या शक्त्या सुधाममृतं समाचारयन्, सुधासञ्चारं कृतवानित्यर्थः ॥१४९॥ ॥१५०॥युग्मम्

कोटीरिति—

कोटीः षोडश रुक्मणां द्विगुणिता रूप्याणि रत्नान्यपि,
प्रत्येकं च पृथक् पृथक् पृथुमतिर्नन्दासनानि क्रमात् ।
भद्रासनयुङ्ज्यमुल्लोचदसमं नेपथ्यवस्त्रादिकं,
स्वर्नाथस्य निदेशतो धनपतिः श्रीविश्वसेनौकसि ॥१५१॥

स्वर्नाथस्येन्द्रस्य निदेशतः आज्ञातः पृथुमतिः विशालबुद्धिः धनपतिः कुबेरः श्रीविश्वसेनस्य राज्ञः ओकसि गृहे रुक्मणां स्वर्णानां षोडश कोटीः द्विगुणिताः द्विगुणीकृताः द्वात्रिंशत्कोटीरित्यर्थः तथा रूप्याणि रत्नान्यपि च प्रत्येकं पृथक् पृथक् द्वात्रिंशत्कोटीनि क्रमात् भद्रासनयुञ्जि भद्रास-

नयुक्तानि नन्दासनानि असममनुपमं नेपथ्यस्य राजवेषस्य योग्यं वस्त्रादिकञ्चामुञ्चत् निदधौ ॥१५१॥

**अर्हदिति--**

**अर्हन्मातुरुताऽर्हतोऽशुभमहो यः किञ्चन ध्यास्यति,**
**भेत्स्यत्यर्जकमञ्जरीव नियतं तन्मस्तकं सप्तधा ।**
**एवं तारतरस्वराः खलु सुरा आघोषयामासुराः,**
**शक्रादेशनिरूपणप्रणयिनो देवेषु सर्वेष्वपि ॥१५२॥**

अहो ! आः ! महाश्चर्यमेतत् यत् शक्रस्य आदेशस्य निरूपणे पालने प्रणयिनः प्रीतिमन्तः सुराः खलु तारतरस्वराः उच्चैःस्वराः सन्तः एवं सर्वेष्वपि देवेषु विषये आघोषयामासुः एवमिति किमित्याह यः कोऽपि अर्हन्मातुरचिरायाः उताथवा अर्हतः किञ्चनाशुभमनिष्टं ध्यास्यति चिन्तयिष्यति, करणस्य तु कथैव केत्यर्थः तस्य मस्तकं नियतं निश्चयेन अर्जकस्य वृक्षविशेषस्य मञ्जरीव सप्तधा सप्तखण्डः कृत्वा भेत्स्यति विशीर्णं भविष्यति ॥१५२॥

**धात्रीति**

**धात्रीकर्मणि शर्मणि त्रिशदराड् मुक्त्वाऽप्सरःपञ्चकं**
**स्नानाभ्यञ्जनपालनापटु गतो द्वीपेऽथ नन्दीश्वरे ।**
**तत्राष्टाहमहोत्सवं विधिपराः संपाद्य राकाद्युतः,**
**स्वं स्वं धाम मुदाऽञ्चिता ययुरथो सर्वे सुपर्वेश्वराः ॥१५३॥**

अथानन्तरम् त्रिदशराट् शक्रः शर्मणि कल्याणनिमित्तं धात्री उपमाता "धात्री स्यादुपमाताऽपि" इत्यमरः तस्याः कर्मणि कृत्ये स्नाने अभ्यञ्जने पालनायाञ्च पटु निपुणमप्सरसां पञ्चकं पञ्चाप्सरसो मुक्त्वा स्थापयित्वा विनियुज्य वा नन्दीश्वरे द्वीपे गतः तत्र नन्दीश्वरद्वीपे राकादिनतः पूर्णिमामारभ्य विधिपराः विधिज्ञाः सर्वे सुपर्वेश्वराः इन्द्राः अष्टाहमहोत्सवं सम्पाद्य अथो अनन्तरम् मुदाऽञ्चिताः सहिताः सन्तः स्वं स्वं धाम स्थानं ययुः ॥१५३॥

**अथेति**

**अथ प्रभाते विकसत्प्रभाभरे व्यपेतनिद्रा समवैक्षताऽङ्गजम् ।**
**अरिष्टदीपस्य महांसि तेजसा विनिर्जयन्तं वसुधेशवल्लभा ॥१५४॥**

अथानन्तरम् विकसन् प्रसरन् प्रभाभरः यस्मिन् तादृशे प्रभाते प्रातःकाले वसुधेशवल्लभा नृपप्रिया अचिरा व्यपेतनिद्रा प्रबुद्धा सती अरिष्टदीपस्य प्रसूतिकागृहस्थदीपस्य महांसि तेजांसि तेजसा स्वप्रभया विनिर्जयन्तमङ्गजं पुत्रं समवैक्षत् ॥१५४॥

सेति

स सौविदल्लीभिरुपेत्य वर्धितः सुतप्रसूत्या वसुधासुधाकरः
ददद् वदान्यः परितुष्टः मानसे न योग्यमेतद् भवतीति वेद न ॥१५५॥

स वसुधायां सुधाकरश्चन्द्र इव विश्वसेनः सौविदल्लिभिः कञ्चुकिनीभिः उपेत्यागत्य सुतस्य प्रसूत्योत्सत्या कृत्वा वर्धितः वर्धापितः वदान्यः अनुत्तरो दाता परितुष्टमानसः सन् ददत् दानं कुर्वत् एतदपरिमितं दानं यस्मैकस्मैचिदपात्रायापि दानायोग्यमुचितं न भवतीति न वेद बुबुधे अपरिमिते दाने हि पात्रापात्रविचारो दुष्कर इति भावः ॥२५५॥

सुतेति—

सुतप्रभावं विनिशम्य नागरैः, श्रुतप्रभावं पृथिवीपतेरथ ।
विनाऽपि निर्देशमकारि सोत्सवं, विचित्रमञ्चैरपि तच्च पत्तनम् ॥१५६॥

अथानन्तरम्, नागरैः पुरवासिभिः पृथ्वीपतेः विश्वसेनस्य श्रुतप्रभावं ख्यातप्रभावं सुतस्य प्रभावमुत्पत्तिं विनिशम्य निर्देशं राजाज्ञां विनापि भक्तिहर्षातिशयात् तत्पत्तनं नगरम् विचित्रैः नानाविधैः मञ्चैः उपलक्षणत्वात्तोरणादिभिश्च सोत्सवमकारि ॥१५६॥

जिनेन्द्रेति—

जिनेन्द्रजन्मोत्सवतोषपूरितं, पुरं तदानीमपि हस्तिनापुरम् ।
मरुत्समुद्धूतविलोलकेतनैर्मरुत्वतस्तर्जयति स्म पत्तनम् ॥१५७॥

तदानीम् तस्मिन् समये जिनेन्द्रस्य जन्मनः उत्सवेन तोषेणानन्देन पूरितं हस्तिनापुरं तदाख्यं पुरम् मरुता पवनेन समुद्धूतैः कम्पितैः विलोलैः स्फुरायमाणैः केतनैः ध्वजैः कृत्वा मरुत्वतः इन्द्रस्य पत्तनममरावतीमपि तर्जयति निर्भर्त्सयति स्म ॥ "इन्द्रो मरुत्वान्मघवा विडौजाः पाकशासनः" । इत्यमरः ॥१५७॥

मुक्तेति—

मुक्तास्वस्तिकसंचयः प्रतिगृहं रेजे तरां निर्मितः,
सर्वाभिः पुरसुन्दरीभिरुदयद्हृत्संमदाभिस्तदा ।
भव्यानां सुकृतप्रसाधनविधौ न्यस्ताशयानां ध्रुवं,
जाते तीर्थकरेऽवदातयशसामुप्तानि बीजानि व ॥१५८॥

तदा तीर्थंकरे जाते जन्मोत्सवे प्रवृत्ते च सति सर्वाभिः उदयन्त आविर्भवन्तः हृदः सम्मदा हर्षा यासां ताभिरतिहृष्टाभिः पुरसुन्दरीभिः प्रतिगृहं गृहे गृहे निर्मितः मुक्तानां स्वस्तिकस्य मङ्गलचिह्नविशेषस्य संचयः राशिः रेजे तरामशोभत, किमिवेत्याह सुकृतस्य पुण्यस्य

प्रसाधनविधावुपार्जने न्यस्ताशयानां तत्परमनसाम्, अवदातयशसामुज्ज्वलयशसां भव्यानामुप्तानि रोपितानि बीजानि व इव, ध्रुवमित्युत्प्रेक्षायाम् ॥१५८॥

त्वमेवेति—

त्वमेव नाथाऽक्षतपात्रमेककः, परं गुणानामपि संपदामपि ।
इति ब्रुवाणा इव नागराङ्गनाः, समीयुरत्राऽक्षतपात्रसंयुताः ॥१५९॥

नाथ ! जिन ! एककः एकाकी त्वमेव नत्वन्योऽपीत्यर्थः सम्पदां श्रीणामपि गुणानामपि च परं सर्वोत्कृष्टमक्षतपात्रमविकलभाजनमितीत्थं ब्रुवाणाः सूचयन्त्य इव अक्षतानां तण्डुलादीनां पात्रेण भाजनेन संयुताः सहिताः नागराङ्गनाः अत्र जिनसमीपे समीयुराजग्मुः मङ्गलार्थमिति शेषः ॥१५९॥

विभो ! इति—

विभोः विधातासि समानि मातृकामुखानि शास्त्राणि जिनेति पण्डिताः ।
तदापठच्छात्रकुलैरलंकृता, अदीदृशन्नेत्य च सूतमातृकाः ॥१६०॥

विभो ! जिन ! समानि सकलानि मातृकामुखानि त्रिपदीप्रभृतीनि शास्त्राणि विधाता उपदेष्टा असीति ब्रुवन्त इव पठद्भिः छात्रकुलैरलङ्कृताः समन्विताः पण्डिताः एत्यागत्य तदा सूतमातृकाः जातकं तन्मातरश्चादीदृशन् ॥१६०॥

दिनोदेति—

दिनोदयेऽस्मै प्रभवे दिनेशिता, दिने तृतीये जनकेन दर्शितः ।
प्रभाकरत्वेन समानयोरपि, द्वयोर्विशेषं महसोः परीक्षितुम् ॥१६१॥

जनकेन पित्रा विश्वसेनेन तृतीये दिने जन्मनस्तृतीयदिवसे दिनोदये प्रातःकाले अस्मै प्रभवे जिनाय दिनेशिता सूर्यः प्रभाणाम् आकरत्वेन करत्वेन च समानयोस्तुल्ययोरपि द्वयोः प्रभाकरत्वतौल्येऽपीत्यर्थः । द्वयोः जिनसूर्ययोः महसोः तेजसोः विशेषमतिशयं परीक्षितुमिव दर्शितः, जातकस्य तृतीयदिने सूर्यदर्शनस्य विहितत्वादिति भावः ॥१६१॥

अदर्शीति—

अदर्शि तत्रैव दिने दिनात्यये, स तस्य पित्राऽस्य निशीथिनीपतिः ।
विलोकनादेव तवेश ! केवलं, कलङ्कितादूषणमस्य यात्विति ॥१६२॥

तत्र तृतीय एव दिने दिनस्यात्यये निगमे रात्रावित्यर्थः, स जिनः तस्य जिनस्य पित्रा जनकेन विश्वसेनेन निशीथिनीपतिश्चन्द्रः ईश ! जिन ! केवलं तव विलोकनादेव विलोकनमात्रत एव अस्य चन्द्रस्य कलङ्कितारूपं दूषणं यातु नश्यतु इति । हेतोरिवादर्शि, जिनदर्शनस्य सकलकलङ्कनाशकत्वादिति ध्वनिः दर्शनं तु तथाऽऽचारादिति भाव. ॥१६२॥

षष्ठीति—

षष्ठीजागरणोत्सवं व्यरचयत् श्रीविश्वसेनो नृपः,
स्वर्णालङ्कृतिपट्टसूत्रवसनैः सर्वांश्च संतोषयन् ।
गेहे यस्य समुद्गतो जिनपतिः कल्पद्रुमो जङ्गमः,
को वा विस्मयमातनोति सुमतिर्दानेन तस्याऽधिकम् ॥१६३॥

श्रीविश्वसेनो नृपः स्वर्णालङ्कृतिभिः पट्टसूत्राणां क्षौमाणां वसनैर्वस्त्रैश्च सर्वान् यथेष्टदानतः संतोषयन् निर्याचनं कुर्वन् षष्ठ्यां जन्मनः षष्ठीतिथौ जागरणोत्सवं च व्यरचयत्, तादृशदाने मृषोद्यतां परिहरन्नाह— यस्य जनस्य गेहे जङ्गमः कल्पद्रुमः सकलेच्छापूरकत्वात् तत्तुल्यः जिनपतिः समुद्गतोऽवतीर्णः, तस्य जनस्य अधिकं लोकाधिकं यथास्यात्तथा दानेन कर्मणा को वा सुमतिः मर्मज्ञः विस्मयमातनोति आश्चर्यं करोति ? न कोऽपीत्यर्थः । तादृशमहामहिमप्रभावान्न किमपि तस्य दुष्करमिति न किमपि आश्चर्यकारणमिति भावः ॥१६३॥

अथजिननामकरणमाह गर्भेति—

गर्भस्थेऽप्यशिवानि शान्तिमगमन् येनाऽत्र सर्वाण्यपि,
प्रोचे तज्जनकेन सोऽपि भगवान् श्रीशांतिरित्याख्यया ।
संबोध्यैव महाजनं निजगिरा नाम्नो विधानोत्सुकं,
प्रत्याय्य स्वसुवासिनीजनमपि प्राप्ते दिने द्वादशे ॥१६४॥

द्वादशे दिने प्राप्ते, जन्मदिनापेक्षयेतिभावः, "एकादशे द्वादशे वाऽहनि पिता नाम कुर्यादि"त्युक्तेरिति भावः । तस्य जिनस्य जनकेन पित्रा विश्वसेनेन निजगिरा स्ववचसा नाम्नः विधाने करणे उत्सुकं जातोत्कण्ठं महाजनं सम्बोध्याभिमुखीकृत्य स्वसुवासिनीजनमपि प्रत्याय्य-ज्ञापयित्वा, सर्वानुमतेनेत्यर्थः, अत्र बाले गर्भस्थेऽपि सर्वाण्यपि अशिवानि अशर्मकराणि ईतीः येन हेतुना शान्तिं विनाशमगमन्, ततो हेतोः स भगवानपि जिन शान्तिरित्याख्या प्रोचे ॥१६४॥

पिबन्निति—

पिबन् निजाङ्गुष्ठमनारतं प्रभुर्बिडौजसा संक्रमितामितामृतम् ।
अनेकधात्रीभिरनेकखेलनैः प्रपाल्यमानो ववृधे तमां क्रमात् ॥१६५॥

प्रभुः शान्तिजिनः बिडौजसा इन्द्रेण सङ्क्रमितं सञ्चारितममितममृतं यस्मिन् तादृशं निजाङ्गुष्ठमनारतं सततम् न तु जननीस्तन्यमपि पिबन् अनेकधात्रीभिः अनेकखेलनैः क्रीडनकैः कृत्वा प्रपाल्यमानः क्रमाद्ववृधे तमाम् ॥१६५॥

गुणैरिति—

गुणैः प्रवृद्धोऽपि सुधांशुनिर्मलैः स वाललीलाः कलयन् व्यराजत ।
विचेष्टितं चित्त्रयभासिनोऽपि यद् विभासते तद् न परस्य वा कथम् ? ॥१६६॥

स शान्तिजिनः सुधांशुः चन्द्र इव निर्मलैः गुणैः कृत्वा प्रवृद्धः ज्यायानपि वाललीलाः कलयन् कुर्वन् व्यराजत नितरामशोभत, तदेव समर्थयन्नाह—यद्विचेष्टितं वाललतिं परस्य सामान्यवालकस्याऽपि विभासते ज्ञानत्रयेण भासिनः विराजमानस्य जिनस्य कथं न ? अपि तु विभासत एव ॥१६६॥

उत्तान इति—

उत्तानो मणिपालने मुकुरवच्छेते कुमारः स तद्,
यत् प्राप्नोति निरन्तरं किल पुमानुत्तानशायी बलम् ।
यद्वाऽऽवेदयतीव दुर्गतिरधः क्षिप्ता मया मन्मुख-
प्रेक्षाकाङ्क्षणदक्षिणैकमनसां पुंसां स पुण्यात्मनाम् ॥१६७॥

कुमारः स शान्तिजिनः तत्ततो हेतोः मणिनिर्मिते पालने पालनासने मुकुरे दर्पणे—"दर्पणे मुकुरादर्शौ" इत्यमरः । स इवोत्तानः ऊर्ध्वमुखः शेते स्म'कुत इति यत्तत्राह—यद्यत उत्तानशायी पुमान् निरन्तरं बलं प्राप्नोति किल, ननु तस्य बलस्य स्वयं सिद्धत्वात्किमुपचारेणेति चेत्तत्राह—यद्वा स जिनः मम मुखस्य प्रेक्षायाः दर्शनस्य काङ्क्षणेऽभिलापे दक्षिणमुन्मुखावलोनैकोत्कण्ठितचेतसां पुण्यात्मनां पुसाम् दुर्गति मया जिनेन अधः नीचैः क्षिप्ता विनाशिता इत्यर्थः इतीत्थमावेदयति ज्ञापयतीव उत्तानशयनस्यैव जातके सम्भवादिति भावः ॥१६७॥

दिनेति—

दिनाधिनाथोऽपि करप्रसारणं समाचरंस्त्र्यस्यति सैंहिकेयतः ।
इतीव विश्वत्रितयाभयप्रदः प्रबद्धमुष्टिः समजायत प्रभुः ॥१६८॥

अथ बालसुलभमुष्टिवद्धतामुत्प्रेक्षते दिनाधिनाथः सूर्योऽपि करप्रसारणं किरणप्रसारणं सामाचरन् कुर्वन्, अथ च पाणिप्रसारणं कुर्वन् सैंहिकेयतः राहुतः "तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुद" इत्यमरः त्र्यस्यति बिभेति ग्रासहेतोरिति भावः, इति हेतोरिव विश्वत्रितयस्याभयप्रदः अहिंसाद्युपदेशनादिनेति भावः । प्रभुः शान्तिजिनः प्रबद्धमुष्टिः समजायत ॥१६८॥

कदापीति—

कदापि तिष्ठन् हृदयाऽऽस्यमस्तके पितुर्जनन्याश्च परिच्छदस्य च ।
विभूषणोद्भासकदेहकान्तिभृद् भवेऽपि कैवल्यसुखं ततान सः ॥१६९॥

स शान्तिजिनः विनयशालात् उष्णासिकां शोसिकां देहकान्तिं विसर्जीति स नाट्यः सन् कदापि स्वचिन्तनं पितुर्विश्वसेनस्य जनन्या अचिरायाश्च परिच्छदस्य परिजनस्य हृदये आस्ये नन्दनं च निदधत् नवं संसारेऽपि कैवल्यवत् मोक्षवत् "मुक्ति. कैवल्यनिर्वाण"इत्यमरः मुदं तत्र दधार चकार, बालक्रीडितेन निरतिशयानन्दमनुभूतम् आनन्द इति भावः ॥१६९॥

कदेति—

कदाचिदाभाषित एव नोत्तरं ददावकिञ्चिज्ज्ञ इव स्थितः प्रभुः ।
कदाचन प्रौढविदग्धवद् गिरः प्रवर्तयामास सभाऽनुरञ्जिकाः ॥१७०॥

कदाचिदाभाषितः आलपित एव अकिञ्चिज्ज्ञः अज्ञ इव स्थितः प्रभुः शान्तिजिनः उत्तरं प्रतिवचनं न ददौ विनयभावादिति भावः कदाचिच्च स्वस्ताधारगम्भनापि प्रदर्शितवानित्याह, कदाचन प्रौढविदग्धवत् प्रगल्भचतुरवत् सभाऽनुरञ्जिकाः गिरः वाचः प्रवर्तयामास जगौ १७०॥

विभोरिति—

विभोः समासाद्य पदं वसुन्धरा न रत्नगर्भत्वमनर्थकं दधौ
त्रिविष्टपस्त्रीसुभगत्वगर्वहृद् बभूव सा तेन च तेन किन्तु सा ॥१७१॥

वसुन्धरा पृथिवी विभोः शान्तिजिनस्य चरणादौ पदं तत्स्पर्शं समासाद्य अनर्थकम् मृषा-र्थकं रत्नगर्भत्वं न पृथिव्या रत्नगर्भैश्वर्यं नासीति भावः । दधौ, जिनपदो रत्नतुल्यत्वादिति भावः । किन्तु सा पृथिवी तेन शान्तिपदस्पर्शेन-सा तेन शान्तिपदस्पर्शेन सौभाग्येन वा त्रिविष्टपस्त्रीणां देवीनां सुभगत्वगर्वं सौभाग्याभिमानं हरतीति ताहृशबभूव । तासां ताहृशसौभाग्याभावादिति भावः ॥१७१॥

व्यलोकीति--

व्यलोकि लोकैः किल काकपक्षभृद् यदा तदाऽप्युच्छ्वसितं स्वचेतसा ।
प्रभुः स च स्नूयत एव यः समो, मरालपक्षेऽपि च काकपक्षके ॥१७२॥

यदा काकपक्षभृद् संस्कृतकचविशेषधारकः प्रभुः लोकैः व्यलोकि किल तदा लोकैः स्वचेतसा उच्छ्वसितं हृष्टमपि, तथा मरालस्य हंसस्य पक्षे काकस्य पक्षके चापि समः तुल्या-दरः स प्रभुः, गुणातिशयित्वादिति भावः, स्तूयते एव च, समदृष्टित्वादिति भावः ॥१७२॥

यदेवेति—

यदेव यत् क्रीडनमैहत प्रभुः सुरेन्द्रशिष्ट्या त्रिदशैः समर्पि तत् ।
विचित्ररूपैरलिनं सुरव्रजो मनोऽनुरूपेण विभोर्विचेष्टते ॥१७३॥

प्रभुः शान्तिजिनः यदा यदेव क्रीडनं क्रीडासाधनमैहत ऐच्छत, सुरेन्द्रस्य शिष्ट्या आज्ञया त्रिदशैः देवैः तदेव तत्क्रीडनं समर्पि, जिनसेवं सर्वदैव सुराणां सत्त्वादिति भावः तदेवाह—सुराणां-

व्रजः सङ्घः अनिशं सततमेव विचित्रैः नानाविधैः रूपैः लोकालभ्यैः कृत्वा विभोः शान्तिजिनस्य मनसः अनुरूपेणानुसारेण विचेष्टते प्रवर्तते स्म ॥१७३॥

इतीति--

इति क्रीडाः कुर्वस्त्रिदशनिचयैः सार्धमुचिताः,
पितॄणामानन्दं प्रतिसमयमेवोपजनयन् ।
क्रमाच्चत्वारिंशद्धनुरनुगताङ्गप्रमितिमा-
नवापत् तारुण्यं त्रिभुवनगुरुर्मेरुमहिमा ॥१७४॥

इत्युक्तप्रकाराः उचिताः स्वयोग्याः क्रीडाः त्रिदशानां देवानां निचयैर्वृन्दैः सह कुर्वन्, तथा प्रतिसमयमनुक्षणमेव पितॄणां जनकादीनामानन्दमुपजनयन् मेरुरिवात्युच्चो महिमा यस्य स महामहिमा त्रिभुवनगुरुः शान्तिजिनः क्रमात् चत्वारिंशद्धनुर्भिः अनुगता तद्दैर्घ्यसदृशदैर्घ्योपलक्षिता या अङ्गस्य प्रमितिः प्रमाणं तद्वान् सन् तारुण्यम् यौवनम् अवापत् ॥१७४॥

अपारेति

अपारसिन्दूरपरागपूरिते जगत्त्रयस्याऽपि रमा स्वमूर्धनि ।
न्यधत्त पादद्वितयं यदीशितू रसात् तदा ताम्रतलं बभूव तत् ॥१७५॥

जगत्त्रयस्य त्रिभुवनस्यापि रमा लक्ष्मीः अपारैरपरिमितैः सिन्दूरपरागैः सिन्दूरचूर्णैः पूरिते स्त्रियः सौभाग्यसूचनाय सिन्दूरं मस्तकैः कुर्वन्तीति भावः स्वमूर्धनि निजमस्तके यद्यतः तदा प्रभोस्तारुण्ये ईशितुः शान्तिजिनस्य पादद्वितयम् रसादनुरागान्न्यधत्त स्थापितवती, तस्य पादद्वितयाश्रिताः सर्वलक्ष्म्य इति भावः तत्ततो हेतोः तज्जिनपादद्वितयं ताम्रतलं रक्तवर्णतलं बभूव जिनपादयोः रक्तवर्णताऽतिशयोक्त्या समर्थिता ॥१७५॥

प्रणम्रेति

प्रणम्रगीर्वाणगणाग्रणीशिरोमणी मणीघर्षणतोऽरुणा नखाः ।
विभोर्दधन्ते स्म पदोर्दशाऽमला दिशां दशानामपि दर्पणश्रियम् ॥१७६॥

प्रणम्रानां प्रणामं कुर्वताम् गीर्वाणगणाग्रणीनां शक्राणां शिरोमणीनां मुकुटानां मणीनां घर्षणतः पुनः पुनः स्पर्शतः अरुणाः रक्तवर्णाः विभोः शान्तिजिनस्य पदोः चरणयोरमला दशनखाः दशानां तत्सङ्ख्यकानामपि दिशां दर्पणश्रियं दधन्ति स्म प्रभोर्नखाः रक्तवर्णाः दर्पणवदमलाश्चेति ॥१७६॥

अङ्गुल्य इति

अङ्गुल्यो विबभुर्मृणालमृदुला नेतुर्दशांघ्र्योर्द्वयोः,
कल्पाधीशमरुत्वतां युगपदाऽऽनन्तुं समासेदुषाम् ।

सन्मानप्रतिपत्तये समतया संवाहनाय ध्रुवं,
क्लृप्ता इत्यपि तर्कयामि महतां सर्वत्र साम्यं यतः ॥१७७॥

नेतुः ईशस्य शान्तिजिनस्य द्वयोरंघ्र्योः चरणयोः मृणालवन्मृदुलाः कोमलाः दशाङ्गुल्यः विबभुः शुशुभिरे दशसङ्ख्यत्वमुत्प्रेक्षते आनन्तुं युगपत्सहैव समासेदुषामागतानाम् कल्पाधीशानां मरुत्वतां शक्राणाम् समतया यथासङ्ख्यतुल्यतया ये सन्मानं प्रत्यायनाय संवाहनाय सेवनाय क्लृप्ताः धृताः ध्रुवम् नात्र सन्देहः कल्पाधीशशक्राणां दशसङ्ख्यत्वादिति भावः । इतीत्थमपि तर्कयामि संभावयामि समतया समानप्रतिपत्ति समर्थयति-यतो हेतोर्महता सर्वत्र साम्यं तुल्या वृत्तिः न तु मुखप्रेक्षिकयेति भाव. ॥१७७॥

प्रमादेति

प्रमादभारेण भवाम्बुधौ पतद् गृहस्थनिर्ग्रन्थजनद्वयस्य सत् ।
अजस्रमालम्बनमेव तत्परं पदाम्बुजद्वन्द्वमभूज्जिनेशितुः ॥१७८॥

प्रमादस्य भारेणातशयेन भवाम्बुधौ पततः जन्मजरामृत्युमनुभवतः गृहस्थस्य निर्ग्रन्थस्यानगारस्य जनस्य तद्वयस्य अजस्रं सततमेव सत् फलसाधकमालम्बनं पतननिवारणे आधारभूतसाधनम् परं सर्वोत्कृष्टं तज्जिनेशितुः शान्तिजिनस्य पदाम्बुजद्वन्द्वमभूत्, तच्चरणाश्रितानां भवान्मुक्तिर्भवतीति भावः ॥१७८॥

प्रकाशेति

प्रकाशभावं कलयिष्यति प्रभो रहो ! चतुर्धा समुदाय सन्ततिः ।
इतीव तद्गुल्फचतुष्टयं स्वयं निगूढभावं बिभराम्बभूव च ॥१७९॥

जिनस्य गुल्फा गुप्ता इत्याह अहो इति हर्षोद्गारे प्रभोः शान्तिजिनस्य चतुर्धा चतुष्प्रकारा । समुदायसन्ततिः साधुसाध्वीश्रावकश्राविकासङ्घः प्रकाशभावं ख्याति कलयिष्यति प्राप्स्यतीतीव हेतोः तस्य जिनस्य गुल्फचतुष्टयं पदग्रन्थिविशेषः स्वयं निगूढभावं गुप्ततां बिभराम्बभूव दधौ, गुल्फगूढता सामुद्रिकलक्षणमिति भावः ॥१७९॥

अभूवेति—

अभूव भूवल्लभवन्द्यसत्पदाऽऽश्रयौ स्त्रियावप्यतिसारसारतः ।
इतीव जङ्घे पृथुले जिनेशितुः, शुभे सुवृत्ते सुभगे बभूवतुः ॥१८०॥

स्त्रियौ स्त्रीलिङ्गशब्दप्रयोज्ये अपि अतिसारसारत अत्युत्तमत्वतः भूवल्लभैः नृपैः वन्द्यौ यौ सत्पदौ तदाश्रयौ अभूव भवेव इतिमती इव जिनेशितुः शान्तिजिनस्य जङ्घे पृथुले विशाले सुवृत्ते गोलाकारे सुभगे सुन्दरे शुभे सामुद्रिकलक्षणवत्त्वाच्छुभसूचके च बभूवतुः । जङ्घाशब्दस्य । स्त्रीलिङ्गत्वादियमुत्प्रेक्षा ॥१८०॥

भुजीति—

भुजिक्रियाऽनन्तरमेव नो स्पृशन्, प्रियं समासादयते न चान्यथा ।
इतीव गुप्ते स्वसमाधिमास्थिते जिनस्य भातः स्म सदैव जानुनी ॥१८१॥

भुजिक्रियायाः भोजनादनन्तरम् नावावां जानुनी स्पृशन्नेव प्रियमिष्टं समासादयते प्राप्नोति अन्यथा न च नैव, भोजनानन्तरम् जानुस्पर्शस्यारोग्यकरत्वमिति वैद्या इति भावः । इतीवेति हेतोरिव गुप्ते न तु उन्नते, अत एव सदैव स्वसमाधि स्वस्थतामास्थिते, स्थिरे इति यावत् । जिनस्य शान्तिजिनस्य जानुनी भातः स्म ॥१८१॥

रम्भेति—

रम्भास्तम्भा न हि जिनपतेः साम्यमूर्वोः श्रयन्ते,
संसाराब्धेस्तरणकरणव्यापृतस्य स्वतोऽपि ।
निश्चैतन्यात् सुकृतविहितौ विस्फुरच्छीतकत्वाद्-
निःसारत्वात् परिमितफलार्थप्रभूतित्ववृत्तेः ॥१८२॥

रम्भास्तमाः कदलीकाण्डाः स्वतोऽपि स्वभावत एव संसाराब्धेः तरणकरणव्यापृतस्य उद्धारकस्य जिनपतेः शान्तिजिनस्य ऊर्वोः सक्थ्नोः साम्यं तुल्यतां नहि नैव श्रयन्ते, तत्र हेतुमाह्— सुकृतस्य विहितौ विधाने निश्चैतन्यात् जडत्वात्, तथा विस्फुरन् प्रकटः शीतः शीतगुणः, यस्य तद्भावस्तत्त्वात्, अतिशीतत्वादित्यर्थः, तथा निःसारत्वादन्तर्बलरहितत्वात् तथा परिमितफलरूपो योऽर्थः, तत्प्रभूतित्ववृत्तेः तत्कारणत्वात् रम्भाफलानि हि परिमितान्येव भवन्तीति भावः, जिनोरू च सचेतनौ अनुष्णाशीतौ किञ्च ससारौ दृढौ अपरिमितफलौ चेति भावः । व्यतिरेकः ॥१८२॥

अहमिति—

अहं कलत्रं सहचारि सर्वदा, यथा कलत्राण्यपराणि नो तथा ।
इति स्वसंबद्धमहाभिमानतः, प्रभोः कलत्रं पृथुतामगाहत ॥१८३॥

अहं सर्वदा सहचारि सहवासशीलं कलत्रं श्रोणिः यथा अपराणि स्त्रीरूपाणि कलत्राणि, सर्वदा न सहचारीणि तथा नो नैव, इत्यपरकलत्रापेक्षया स्ववैशिष्ट्यरूपात् स्वसम्बद्धात् स्वस्थितान्महतोऽभिमानतः गौरवतः प्रभोः शान्तिजिनस्य कलत्रं कटिः पृथुतां विपुलतामगाहत "अथ कटः कटिः श्रोणिः कलत्र" मितिहैम' । जिनस्य श्रोणिः पृथुलेति भावः ॥१८३॥

गुणेति—

गुणाश्रयं नौमि न पूर्वकायकं, कथं कथं चोत्तरकायकं तथा ?
यथार्थवादव्ययचिन्तया प्रभोरितीव मध्यः कृशतां समाश्रयत् ॥१८४॥

गुणाश्रयं गुणयुक्तं सामुद्रिकादिशुभलक्षणयुक्तं च कायस्य पूर्वो भागः स एव तं पूर्वकायकम् कथं न नौमि स्तौमि तथा उत्तरकायकं मध्योर्ध्वकायकं गुणाश्रयं कथं वा न नौमि गुणाश्रयत्वादुभावेव स्तुत्यौ, समत्वेनैकतरपक्षपाते कारणाभावादिति भावः, इत्युक्तप्रकारया यथार्थवादस्य अथानुकूलस्तुतेः व्ययस्य लोपस्य चिन्तया इव एकस्यैव स्तुतौ गुणी सर्वोऽपि स्तुत्य इति यथार्थवादो लुप्यते इति भावः । प्रभोः शान्तिजिनस्य मध्यः कटिप्रदेशः कृशतां तनुत्वं समाश्रयत् । चिन्तितो हि कृशो भवत्येवेतिभावः । जिनस्य मध्यः कृशः इत्यर्थः ॥१८४॥

अपायीति—

अपायि लावण्यरसो वधूजनै-र्न नाभिकूपस्थित एव यैः प्रभोः ।
अपायि तेषां न यदङ्गतृष्णयो-चितं तदेवाद्भुतमन्यथा परम् ॥१८५॥

यैः वधूजनैः भार्यावर्गैः प्रभोः शान्तिजिनस्य नाभिः गभीरत्वात्कूप इव तत्र स्थितः लावण्यं रस इव स न अपायि पीतः तेषां वधूजनानाम् अङ्गतृष्णया शरीरसङ्गेच्छया यत् न अपायि विनष्टम् तदुचितमेव, नाभिलावण्यरसाऽपाने शेषाङ्गलावण्यरसे तृष्णासत्त्वमुचितमेव, नाभिलावण्यरसपाने तु तन्मात्रतस्तृप्तत्वादितरतृष्णानिवृत्तिरपि कश्चित्सम्भाव्यते, अतृप्तस्य तु सा नैव निवर्तते इति भावः तदाह—अन्यथा नाभिलावण्यरसपानेऽपि तत्तृष्णासत्त्वं परमत्यन्तमद्भुतमाश्चर्यम्, तृप्तस्य पुनस्तृष्णाऽयोगादिति भावः ॥१८५॥

इमानीति—

इमानि रोमाणि न भर्तुरङ्कके, विभान्ति किं नाम नु संविदङ्कुराः ।
कषायसंवासितमातृमानस-प्रसङ्गतः श्यामलकान्तिभागिनः ? ॥१८६॥

भर्तुरीशस्य शान्तिजिनस्याङ्ककेऽङ्के इमानि रोमाणि न, विभान्ति किन्तु संविदां ज्ञानानामङ्कुराः प्ररोहाः, नाम नु इत्युत्प्रेक्षायाम् ननु तर्हि तज्ज्ञानां निर्मलत्वादेषां कृष्णता कथमिति चेत्तत्राह—कषायैः रागाद्यैः संवासितस्य सम्बद्धस्य मातुः मानसस्य गर्भे प्रसङ्गतः सम्बन्धतः श्यामलकान्तिभागिनः श्यामाः इत्यर्थः "संसर्गजा दोषगुणा भवन्ती" त्युक्तेरिति भावः ॥१८६॥

विशालेति—

विशालवक्षःस्थलकैतवस्फुरत्कपाटविन्यासनसंनिबन्धनात् ।
सनातनं वित्तिरमानिकेतनं जिनाधिनाथस्य मयाऽनुमीयते ॥१८७॥

मया कविना जिनाधिनाथस्य शान्तिजिनस्य विशालस्य वक्षःस्थलस्य कैतवेन छलेन विस्फुरतः दृढस्य शोभमानस्य च कपाटस्य विन्यासनस्य स्थापनस्य संनिबन्धनादादरणात् सनातनं शाश्वतं वित्तिरमायाः ज्ञानलक्ष्म्याः निकेतनं गृहमनुमीयते, कपाटस्य गृहे एवोपयोगात्, कपाटवद्विशालवक्षा जिन इत्यर्थः ॥१८७॥

अगण्येति—

अगण्यकारुण्यरसौघसंभृते विवेकविभ्राजितहंससंश्रिते ।
समुन्नतेऽस्मिन् जिनहृत्सरोवरे कराक्षिवक्त्राम्बुरुहाणि रेजिरे ॥१८८॥

अगण्यस्यापरिमेयस्य कारुण्यं नामेव रसः रस इव तस्यौघेन पूरेण संभृते पूर्णे विवेक एव विभ्राजितः शोभमानो हसः तेन संश्रिते समन्विते समुन्नते उच्छ्वसिते अस्मिन् वर्ण्यमाने जिनस्य हृद् हृदयं सरोवरमिव तस्मिन् करौ अक्षिणि वक्त्रं च तानि अम्बुरुहाणि कमलानीव तानि रेजिरे ॥१८८॥

विजित्येति—

विजित्यकन्दर्पमदर्पकं विभुः स्वरूपलक्ष्म्यैव यमग्रहीज्झषम् ।
स एव सामुद्रकशास्त्रकोविदैः करे समग्रैरपि वीक्षितो जनैः ॥१८९॥

विभुः शान्तिजिनः स्वरूपस्याकृतेः लक्ष्म्या एव—विशिष्टसज्ज्ञानवैराग्यादिस्वरूपलक्ष्म्यैव न दर्पकोऽभिमानी यतः तं तादृशं महाभिमानं कन्दर्पं कामं विजित्य यं झषं 'मीनकेतनः कन्दर्प' इत्यमरः तत्केतुश्चिह्नं मीनमग्रहीदाचिच्छेद विजितस्य वसूनि हरन्तीति लोकप्रसिद्धमिति भावः, स हृतः झष एव समग्रैः सर्वैरपि सामुद्रिकशास्त्रे कोविदैः मर्मज्ञैः जनैः करे शान्ति-जिनहस्ते वीक्षितः करे मीनचिह्नमलौकिकाभ्युदयसूचकमिति सामुद्रिकलक्षणवत्त्वं सूचितम् । अति-शयोक्तिरलङ्कारः ॥१७९॥

प्रभोरिति—

प्रभोर्भुजाभ्यां विजितानि लीलया ध्रुवं मृणालानि न तानि चान्यथा ।
निलीयमन्दाक्षभरादिवानिशं जलाशयान्तः स्थितिमेव चक्रिरे ॥१९०॥

प्रभोर्जिनस्य भुजाभ्याम् मृणालानि कमलनालानि लीलयाऽतिमृदुत्वाद्दीर्घत्वाच्चानायासे-नैव विजितानि, ध्रुवं नात्र संशयः, अन्यथा कारणान्तरतः तानि मृणालानि मन्दाक्षस्य त्रपायाः भरादतिशयादिव "मन्दाक्षं ह्रीस्त्रपा व्रीडे"त्यमरः । अनिशं जलाशयान्तः तडागे निलीयात्मानं तिरोधाय स्थितिमवस्थानं नैव चक्रिरे किन्तु प्रभुभुजविजितत्वादेव अन्योऽपि पराजितो लज्जया निलीय क्वापि तिष्ठतीति भावः ॥१९०॥

आस्यमिति—

आस्यं पीयूषसिन्धुः सुवचनममृतं मौक्तिकानि द्विजाली,
बिम्बाभौष्ठप्रवालव्रततिकिशलयौ श्मश्रु तालीवनानि ।
शुण्डादण्डानुकारा शमसलिलगजस्यैव नासा विराज-
श्चक्षुर्वीचिप्रपञ्चो जयति जिनपतेर्हास्यडिण्डीरपिण्डः ॥१९१॥

वेदयति ज्ञापयति श्रीवत्सस्य शान्तिप्रभोरुरसि तच्चिह्नस्य विष्णोरुरसि स्थितत्वात्सौभाग्यसूचकत्वाच्चेतिभावः। शिरसः जिनस्य मस्तकस्य उपरि स्थितः श्रिया लक्ष्म्या देदीप्यमानः ऊष्णीषो पुरुषोत्तमत्वं समावेदयति अन्यपुरुषाणां तदभावादिति भावः उत्तमा एव तद्धारयन्ति। ननु किमिति सर्वमेव वस्तु उत्तमत्वमेव सूचयतीति चेद्विशिष्टपुण्यमेवात्र कारणमित्याह—महताम् पुण्यानामुदयेन पुण्यप्रभावेण किं वस्तु प्रसिद्धेः ख्याते. बीजं कारणं न भवेत्, अपि सर्वमपि ख्यातिबीजं भवेदित्यर्थः ॥१९४॥

दृष्ट्वेति

दृष्ट्वा शान्तेर्निरुपममिदं केशपाशं चमर्यः,
संभाव्यैतद् व्यपगतफलं स्वस्य बालप्रियत्वम्।
लज्जाऽऽक्रान्ता हिमगिरिभुवं संश्रयन्ते स्म नूनं,
युक्तं स्त्रीत्वे व्यवसितमिदं मानिनी सा हि जातिः ॥१९५॥

शान्तेः शान्तिजिनस्य निरुपममसाधारणमिदं केशपाशं दृष्ट्वा चमर्यः स्वस्य एतत्प्रसिद्धं बालप्रियत्वम् सर्वोत्तमत्वाद्धेतोः जातं केशस्नेहं व्यपगतफलम्, सर्वोत्तमत्वरूपफलहीनं सम्भाव्य विचार्य लज्जया स्वपराजयत्रपयाऽऽक्रान्ता युक्ता सती हिमगिरिभुवं हिमाचलप्रदेशं संश्रयन्ते स्म नूनम् ध्रुवमेतत्। किञ्च स्त्रीत्वे सती इदं दूरगमनरूपं व्यवसितं प्रवृत्तिः युक्तमुचितम् हि यतः सा जातिः स्त्रीजातिः मानिनी मानवती एवञ्च मानभङ्गसम्भवे तद्रक्षणाय दूरगमनमुचितमेवेति भावः उत्प्रेक्षाऽर्थान्तरेण पुष्टा ॥१९५॥

सुदुरिति

सुदुर्जयं वाडवजातवेदसा प्रतापराशिं दधतोऽपि यद्वपुः।
जिनेशितुः स्वेदलवैर्विवर्जितं विचित्रमन्यत् किमिवाऽभिधीयताम् ॥१९६॥

वाडवजातवेदसा वडवानलेन सुदुर्जयमत्युग्रत्वादनभिभवनीयं प्रतापराशिम् तापाधिक्यमथ च प्रभावातिशयम् दधतः अपि जिनेशितु. शान्तिजिनस्य यद्यतः वपुः शरीरम् स्वेदलवैः घर्मसलिलैः विवर्जितम्, अतः अन्यत् विचित्रमतिशयं किमिव केन प्रकारेणाभिधीयताम्? वर्ण्यताम् जिनातिशयस्यानिर्वचनीयत्वात् जिनस्य न स्वेद इत्यागमः। अत्र स्वेदहेतौ सत्यपि तापे तदभाव इति विरोधः अर्थान्तरेण च विरोधपरिहार इति विरोधाभासोऽलङ्कारः ॥१९६॥

वपुरिति

वपुर्जिनेन्द्रस्य सुवर्णकेतकी–पलाशसारैर्मृदुभिर्विनिर्ममे।
ध्रुवं गृहीतैः शुभकर्मणाऽन्यथा, सुगन्धि पीतं मृदुनैव तद् भवेत् ॥१९७॥

स्त्रीनेत्रहरम्, तथा अगण्यानामपरिमेयानां लावण्यानां तरलत्वविशेष्याणां निवेशस्याधिष्ठानस्य सेवधिराकरः विभोः शान्तिजिनस्य रूपं स्वरूपं समताया उपमाया अतिगमविषयः, अनुपममित्यर्थः । बभूव ॥२००॥

वसुन्धरेति—

**वसुन्धराधीशसुतायशोमतीमुखाः सुमुख्यो जनकोपरोधतः ।**
**महोत्सवेऽतुच्छतमे प्रसर्पति प्रभुः प्रभूताः प्रथिता व्यवाहयत् ॥२०१॥**

प्रभुः शान्तिजिनः जनकस्य पितुः विश्वसेनस्योपरोधतोऽनुरोधतः नतु स्वेच्छातः, अनित्ये विषयसुखे स्वस्यानीहत्वादिति भावः । अतुच्छतमे महत्तमे महोत्सवे प्रसर्पति प्रवर्त्तमाने सति सुमुख्यः (सुष्ठु मुखं यासां ताः) सुन्दर्यः प्रभूताः बह्व्यः प्रथिताः प्रसिद्धाः यशोमतीमुखाः यशोमतीप्रभृतीः वसुन्धराधीशसुताः राजकन्याः व्यवाहयत्परिणीतवान् ॥२०२॥

समेति—

**समासहस्रेष्वथ पञ्चविंशतिप्रमेषु यातेषु निमेषवत् सुखम् ।**
**न्यधत्त राज्ये नृपविश्वसेनकः प्रतापदिक्चक्रविभासकं विभुम् ॥२०२॥**

अथ विवाहानन्तरम्, पञ्चविंशतिप्रमेषु समानां वर्षाणां सहस्रेषु पञ्चविंशतिसहस्रवर्षेषु निमेषवत्क्षणमिव सुखं सुखपूर्वकं यातेषु व्यतीतेषु सत्सु नृपः विश्वसेनकः विश्वसेनः प्रतापेन दिक्चक्रस्य विभासकं प्रकाशकम्, प्रतापाक्रान्तदिङ्मण्डलं प्रभुं शान्तिजिनं राज्ये न्यधत्त स्थापयामास ॥२०२॥

तवेति —

**तवोत्तमाङ्ग ! क्रमवन्दनात् प्रभो ! ममोत्तमाङ्गस्य सदोत्तमाङ्गता ।**
**अजायतैवेति विमृश्य राट् तदा निजोत्तमाङ्गं नमयाम्बभूव सः ॥२०३॥**

प्रभो उत्तमाङ्ग ! सुरूप ! शान्तिजिन ! तव क्रमयोश्चरणयोर्वन्दनाद्धेतोर्ममोत्तमाङ्गस्य मस्तकस्य "उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रिया"मित्यमरः । सदा उत्तमाङ्गता उत्तमश्च तदङ्गमुत्तमाङ्गं तस्य भावः जिनवन्दनस्योत्तमाङ्गतातत्प्रयोजकत्वादिति भावः । अजायत एवेति, विमृश्य विचार्य स राट् राजा विश्वसेनः तदा शान्तिजिनराज्याभिषेके निजमुत्तमाङ्गं शिरो नमयाम्बभूव ॥२०३॥

सेति—

**स विश्वसेनोऽवनिपालपुङ्गवः समाचचार स्वहितं ततः स्वयम् ।**
**न हि प्रमादं परलोकसाधने बुधाः प्रकुर्वन्ति कदापि तादृशाः ॥२०४॥**

ततः शान्तिजिनराज्याभिषेकानन्तरं सोऽवनिपालपुङ्गवः नृपश्रेष्ठः विश्वसेनः स्वयं स्वहितमात्महितं तपोऽनुष्ठानादि समाचचार, तदेव समर्थयति–हि यतः तादृशाः विश्वसेनसदृशाः बुधाः परलोकसाधने प्रमादमालस्यं कदापि न प्रकुर्वन्ति ॥२०४॥

शुभेष्विति—

**शुभेषु कार्येषु नृणां विहस्तता बभूव रोमाञ्चगतोऽथ कण्टकः ।**
**स भीमरूपः शिव एव विश्रुतः प्रभौ भुवं शासति शासितद्विषि ॥२०५॥**

शासिता निर्मथिता वशीकृता द्विषश्शत्रवो येन स तस्मिन् जितारौ प्रभौ शान्तिजिने भुवं महीं शासति पालयति सति नृणां शुभेषु कार्येषु पुण्यकृतेषु विमृस्तता व्यग्रता तत्परता बभूव, न तु अनिष्टेषु कार्येषु, प्रजा शुभप्रवृत्तयो जाता इत्यर्थः । "विहस्तो व्याकुलो व्यग्र"-इत्यमरः । अथ तथा कण्टकः स्वनामप्रसिद्धः विघ्नो वा क्षुद्रशत्रुर्वा रोमाञ्चगतः हर्षादिजन्य. रोमाञ्च एव कण्टकव्यपदेश्योऽभून्नत्वन्यः कोऽपि इत्यर्थः—"कण्टकः क्षुद्रशत्रौ रामाञ्चे च द्रूमाक्षे च । (इतिविश्वप्रकाशः) । तथा भीमरूपः भयङ्कराकार' स प्रसिद्धः शिवः महादेव एव विश्रुतः प्रसिद्धः, नत्वन्योऽपि सर्वे सौम्यदर्शना अभवन्नित्यर्थः । परिसङ्ख्याऽलङ्कारः ॥२०५॥

अथदृढरथजीवच्यवनमाह दृढस्येति—

**दृढस्य जीवः सरथस्य विच्युतो यथार्थसर्वार्थमहाविमानतः ।**
**स चक्रकस्वप्ननिवेदितागमो यशोमतीकुक्षिमभूषयत् ततः ॥२०६॥**

ततः शान्तिजिने मही शासति सति स मेघरथानुजः सरथस्य दृढस्य दृढरथस्य जीवः यथार्थात् गुणनिष्पन्ननाम्नः सर्वार्थाख्यमहाविमानतः चक्रकस्य चक्रस्य स्वप्नेन निवेदितः आगमोऽवतारो यस्य स तादृशः यशोमत्याः कुक्षि गर्भमभूषयत् यशोमतीगर्भगतो बभूवेत्यर्थ' ।

अजीति—

**अजीजनत् सा तनयं नृपप्रिया, महौजसं लक्षणलक्षिताङ्गकम् ।**
**प्रभोः प्रतिच्छायिकयेव निर्मितं, प्रदीपतो दीपमिवाऽतिभासुरम् ॥२०७॥**

सा नृपस्य शान्तिजिनस्य प्रिया यशोमती प्रभोः शान्तिजिनस्य प्रतिच्छायिकया प्रतिबिम्बेनेव निर्मितम् प्रदीपतः प्रदीपितं दीपमिवातिभासुरम् तेजस्विनम् लक्षणैः सामुद्रिकलक्षणैः लक्षिताङ्गकम् समन्वितावयवम् महौजसं महाबलवन्तं तनयमजीजनत् ॥

अथ तस्य नामकरणमाह गर्भाधानमिति—

**गर्भाधानं भजति भगवत्यत्र सात्रा निरैक्षि-**
**स्वप्ने चक्रं समुदितविभाचक्रकाष्ठावभासम् ।**

**अस्माच्चक्रायुध इति सुतस्याऽस्य नामाभिधानं**
**श्रीमान् शान्तिर्व्यधित विधिवल्लोककल्पद्रुकल्पः ॥२०८॥**

अत्रास्मिन् शान्तिपुत्रे भगवति गर्भाधानं गर्भवासं भजति कुर्वति सति मात्रा यशोमत्या स्वप्ने समुदितेन विभाचक्रेण प्रभामण्डलेन काष्ठा दिशः अवभासयतीति तादृशं चक्रं निरैक्षि दृष्टमित्यस्माद्धेतोः लोकानां सकलेच्छापूरकत्वात् कल्पद्रुकल्पः कल्पद्रुमोपमः श्रीमान् शान्तिर्जिनः अस्य सुतस्य चक्रायुध इति नामाभिधानं विधिवत् सविधि व्यधित ॥२०८॥

कला-इति—

**कलाः समभ्यस्य कलागुरोः कलाः कलाविदां मानसमापयन् मुदम् ।**
**ततः समासादितमुक्तशैशवः क्रमात् स तारुण्यभरं समासदत् ॥२०९॥**

स चक्रायुधः ततो नामकरणानन्तरम् क्रमात् पूर्वं समासादितः पश्चान्मुक्तः शैशवो बाल्यावस्था येन स तादृशः किशोरः कलागुरोः कलाचार्यतः कलाः मधुराः, अपेक्षितत्वादिति भावः कलाः चतुष्षष्टिकलाः समभ्यस्य कलाविदाम् मानसं मुदं स्वकलाकौशल्यसम्पादितहर्षमापयन् तारुण्यभरं यौवनं समासदत् ॥२०९॥

नरेन्द्रेति—

**नरेन्द्रकन्या रतिरूपसंपदः परार्ध्यसौभाग्यसमृद्धिशालिनम् ।**
**स तं धनुर्वेदनिवेद्यकौशलं, विवाहयामास पिता प्रभूत्तमः ॥२१०॥**

प्रभुषु उत्तमः स पिता शान्तिजिनः परार्ध्ययाऽपरिमितया सौभाग्यसमृद्ध्या शालते इत्येवं शीलम्, प्रचुरसौभाग्यवन्तम्, धनुर्वेदे निवेद्यम् वर्णनीयं कौशलं यस्य तं तादृशं तं चक्रायुधम् रतिरिव रूपसंपद्यासां तास्तादृश्यः सुरूपाः नरेन्द्रकन्याः विवाहयामास ॥२१०॥

वसुन्धरेति—

**वसुन्धरामण्डलमस्य शासतः सतः प्रभोः शान्तिमहामहीशितुः ।**
**समासहस्रा व्यतिचक्रमुर्नृपैरुपास्यमानस्य च पञ्चविंशतिः ॥२११॥**

प्रभोरस्य शान्तिमहामहीशितुः शान्तिजिनाख्यमहानृपस्य वसुन्धरामण्डलं पृथ्वीमण्डलं शासतः सतः नृपैः उपास्यमानस्य च पञ्चविंशतिः समानां वर्षाणां सहस्राः वर्षसहस्राणि—("हायनोऽस्त्री शरत्समाः" इत्यमरकोशः, सहस्रशब्दः पुल्लिङ्गे क्लीबे च—) व्यतिचक्रमुः व्यतीयुः ॥२११॥

अथेति—

**अथाऽऽयुधागारिक एत्य सत्वरं व्यजिज्ञपत् तं प्रणिपत्य कृत्यवित् ।**
**त्वमायुधागारविभासिना त्विषां चयेन चक्रेण नरेन्द्र ! वर्ध्यसे ॥२१२॥**

अथानन्तरम्, आयुधागारिकः शास्त्रागाराध्यक्षः एत्यागत्य कृत्यविद्विधिज्ञः स सत्वरं प्रणिपत्य तं शान्तिजिन व्यजिज्ञपत्, किमित्याह—नरेन्द्र ! त्विषां प्रभाणां चयेन समूहेन आयुधागारं विभासयतीत्येवं शीलेन चक्रेण स्वयं प्रकटितेन चक्राख्यरत्नेन त्वं वर्ध्यसे प्रशस्यसे तवायुधागारे चक्ररत्नं प्रकटितमिति यावत् ॥२१२॥

**अथ चक्रमेव वर्णयति सहस्रेति—**

**सहस्रभानुस्तव शस्त्रसद्मनि, स्फुरत्सहस्रारकचक्रकैतवात् ।**
**प्रविश्य सान्निध्यमवाप्य सांप्रतं, किमु स्वयं राहुमयं जिगीषति ? ॥२१३॥**

तव शस्त्रसद्मनि शस्त्रागारेऽयं प्रसिद्धः सहस्रभानुः सूर्यः स्फुरतः प्रभासतः सहस्रारकस्य चक्रस्य तदाख्यरत्नस्य कैतवाद्व्याजात् प्रविश्य सांप्रतं तव सान्निध्यमवाप्य स्वयं राहुं स्वग्रसितारं शत्रुं जिगीषति जेतुमिच्छति किमु वितर्के इति मन्ये सर्वोऽपि हि बलवत्सान्निध्यमवाप्य स्वशत्रुं जयतीति भावः । सूर्यवत्तेजस्वि तच्चक्रमिति यावत् । उत्प्रेक्षा ॥२१३॥

**सेति—**

**स चक्ररत्नस्य नृरत्नमात्मना, व्यदीधपत् पूजनमष्टवासरान् ।**
**न किं विजानन्ति तरां हि संविदां, त्रयेण विद्योतितचेतसोऽथवा ? ॥२१४॥**

स नृरत्नम् शान्तिजिनः आत्मना स्वयमेव चक्ररत्नस्य अष्टवासरान् यावत्पूजनं व्यदीधपत्, कारयामास, विधिज्ञत्वादिति भावः, तदेवाह—अथवा, यतः संविदां ज्ञानानां त्रयेण मतिश्रुत्यवधिरूपेण विद्योतितचेतसः शुद्धहृदयाः शान्तिजिनसदृशाः किं न विजानन्ति तराम् ? अपि सर्वमेव विधिं जानन्त्येवेत्यर्थः ॥२१४॥

**अथ शान्तिजिनस्य षट्खण्डसाधनविधिं वर्णयति अष्टेति—**

**अष्टाह्निकाविरमणे सति तच्च चक्रं व्योम्ना चचाल हरितं प्रति वासवस्य ।**
**तेनैव वासरमणेर्ध्रुवमेकचक्रः ख्यातो रथः सविधदेशविवर्तिनाऽपि ॥२१५॥**

अष्टाह्निकायाः अष्टाह्निकामहोत्सवस्य विरमणे सति समाप्तौ सत्याम् तदायुधागारस्थं चक्रं च व्योम्ना आकाशमार्गेण वासवस्येन्द्रस्य हरितं दिशां पूर्वदिशामित्यर्थः, प्रति चचाल, सविधदेशे समीपदेशे विवर्त्तिना व्योम्ना गमनेन कृत्वा तेन चक्रेणैव वासरमणेः सूर्यस्य रथोऽपि एकमेव चक्रं यस्य स तादृशः, शान्तिजिनचक्रस्यैकत्वादिति भावः, ख्यातः प्रसिद्धः, ध्रुवमेवमनुमिनोमीत्यर्थ ॥ उत्प्रेक्षा ॥२१५॥

**यक्षैरिति—**

**यक्षैरधिष्ठितमधिष्ठितवित्तरक्षैस्तत् संततं दशशतीममितैः सलक्षैः ।**
**सैन्योत्थितेन रजसा ककुभां विभागानाच्छादयन्ननु ययौ जिनचक्रवर्ती ॥२१६**

जिनचक्रवर्ती जिनेन्द्रः श्रीशान्तिः सलक्षैः सावधानैः दशशतीप्रमितैः सहस्रप्रमाणैः अधिष्ठिता आश्रिता वित्तस्य धनस्य रक्षा येषु तैस्तादृशैः वित्तरक्षानियुक्तैः यक्षैः अधिष्ठितम् तच्चक्रमनु सैन्यैः उत्थितेन गमनेन कृत्वा उद्भूतेन रजसा धूलीभिः ककुभां दिशां विभागान् दशदिशा इत्यर्थः, आच्छादयन् व्याप्नुवन् सततं ययौ ॥२१६॥

**पुरेति**

**पुरस्कृताः सम्प्रति मन्दगामिनोऽप्यनेन भर्त्रा वयमेव केवलम् ।**
**इतीव वेगेन गजाः प्रतस्थिरे क्षरन्मदप्लावितरेणुसंचयाः ॥२१७॥**

अनेन भर्त्रा शान्तिजिनेन सम्प्रति मन्दगामिनः, स्थूलत्वादिति भावः, अपि केवलं वयं गजा एव, न त्वन्ये, पुरस्कृताः, अग्रेसराः कृताः, सैन्यप्रयाणे गजा एवाग्रतो भवन्तीति भावः क्षरता मदेन प्लाविता रेणुसञ्चयाः धूलिराशयो यैस्तादृशा मदस्राविणो गजाः वेगेन प्रतस्थिरे जग्मुः सर्वोऽपि पुरस्कृतः कार्येषूत्सहते इति भावः ॥२१७॥

**हिरेति—**

**हिरण्मयैः पल्ययनैर्विराजितास्तुरङ्गमा नैकविधास्ततोऽचलन् ।**
**प्रभञ्जनः खञ्जित एव यैर्ध्रुवं जवेन न स्याद् मृगवाहनोऽन्यथा २१८॥**

ततः गजाननु हिरण्मयैः सौवर्णैः पल्ययनैः—"पर्याणं तु पल्ययनं"—(इत्यभिधानचिन्तामणिः) विराजिताः नैकविधाः अनेकप्रकारास्तुरङ्गमा अचलन्, यैः तुरङ्गमैः, जवेन वेगेन कृत्वा प्रभञ्जनः महावात एव खञ्जितः गतिविकलः कृतः, तुरङ्गमाणां पवनातिगवेगत्वादिति भावः ध्रुवमेतत्, अन्यथा मृगवाहनः न स्यात्, प्रभञ्जन इत्यर्थाल्लभ्यते पद्भ्यामशक्तो हि वाहनेन सञ्चरते इति भावः ॥२१८॥

**ददाविति—**

**ददौ त्रिलोकीपतिरात्मनः पदं सनातनं नः प्रमना जगत्त्रये ।**
**इतीव चीत्कारमिषाद् निजस्तवं विनिर्मिमाणैश्चलितं रथोत्तमैः ॥२१९॥**

त्रिलोकीपतिः शान्तिजिनः प्रमनाः प्रसन्नः सन् नोऽस्माकं रथानाम् जगत्त्रये आत्मनः स्वस्य सनातनं पदं ददौ, इतीवेति मन्वान इव चीत्कारस्य चक्रादिघर्षणजन्यशब्दस्य मिषाद्-व्याजान्निजस्य स्वस्य रथस्यैव स्तवं गुणकीर्त्तनं विनिर्मिमाणैः कुर्वाणैः आत्मानं श्लाघमानैः रथोत्तमैः चलितम् प्रस्थानं कृतम् ॥२१९॥

**प्रभोरिति**

**प्रभोः प्रचेलुर्विजयश्रियोद्धटा भटाः समज्ञाग्रहणैकलम्पटाः ।**
**अनेकशः प्रासकृपाणपाणयः प्रतिप्रतीकं रचिता इवौजसा ॥२२०॥**

प्रभोः शान्तिजिनस्य विजयश्रिया उद्भटाः भटश्रेष्ठाः समज्ञायाः यशसः ग्रहणे उपार्जने एके अद्वितीयाः लम्पटाः लालसाः "यशः कीर्तिः समज्ञा च" लोलुपो लोलुभो लोलो लम्पटो लालसोऽपि च" इतिचामरः । अनेकशः बहुशः प्रासाः कुन्ताः भालाख्यास्त्रविशेषाः "प्रासस्तु कुंत" इत्यमरः कृपाणा खड्गाश्च पाणिषु येषां, तादृशाः, अत एव प्रतिप्रतीकं—"अङ्गंप्रतीकोऽवयवः इत्यमरः"—प्रत्यवयवमोजसा बलेन रचिता इव स्थिता भटा योद्धारः प्रचेलुः ॥२२०॥

मृदङ्गेति—

मृदङ्गढक्कादिकवाद्यनिस्वनै रवे रथाश्वेषु पलाय्य यत्सु च
तुरङ्ग एक क्वचनापि यद् ययौ तदत्र ते पप्रथिरे न सप्तते किम् ? ॥२२१॥

मृदङ्गढक्कादिनां वाद्यानां निस्वनैः शब्दैः कृत्वा रवेः सूर्यस्य रथस्याश्वेषु पलाय्य अभूतपूर्वशब्दश्रवणजन्यभयान्नंष्ट्वा, शब्दभयात्पलायनमश्वस्वभाव इति भाव. यत्सु गच्छत्सु सत्सु च एकः तुरङ्गः क्वचनाज्ञातप्रदेशे यद्यतो ययौ, तत्ततो हेतोः एकोनत्वात् अत्र लोके ते रवितुरङ्गमाः सप्त न पप्रथिरे ख्याताः किमिति प्रश्ने, न हि साधारणो लोकः रवेः सप्तहयाः कथमिति जानाति इति भावः ॥२२१॥

तदेति—

तदा जगन्नाथचमूमहाभराद् महीतले न्यञ्चति भोगिनां पतिः ।
फणासहस्रं धृतये विजज्ञिवान् मणिप्रभावाऽगणितोरुयातनः ॥२२२॥

तदा प्रयाणसमये जगन्नाथस्य शान्तिजिनस्य चमूनां सेनानां महतोऽसहनीयाद्भराद् भाराद् हेतोः महीतले न्यञ्चति नीचैः गच्छति सति मणिप्रभावैः अगणिता न ज्ञाता उर्वी सैन्यभरजन्या यातना तीव्रवेदना येन स तादृशः भोगिनां सर्पाणां पतिरीशः शेषनागः धृतये पृथिव्यवलम्बनाय फणानां फटानां सहस्रं विजज्ञिवान् उत्पादयामास, स्वाभाविकफणासहस्रं प्रागुक्तरीत्याध्यवसितमिति असम्बन्धे सम्बन्धरूपाऽतिशयोक्तिः ॥२२२॥

चमूसेति—

चमूसमुत्खातरजोभरैः प्रभोर्वितायमाने सति दुर्दिने घने ।
न राजहंसाः परदेशमैयरुश्चमूचराणां किमयं न विस्मयः ? ॥२२३॥

प्रभोः शान्तिजिनस्य चमूभिः सेनाभिः समुत्खातैः समुद्भूतैः रजोभरैः धूलिसञ्चयैः घने मेघे दुर्दिने मेघाच्छन्नदिने वितायमाने क्रियमाणे सति राजानो हंसा इव ते परदेशमन्यदेशं प्रति न ऐयरुः जग्मुः घनागमे हंसा एतद्देशं विहाय मानसं यान्ति दुर्बला राजनोऽपि परभीताः स्वदेशं त्यजन्ति, किन्तु शान्तिजिनसैन्यधूलिं दृष्ट्वा. दुर्दिनत्वाद्विज्ञानाभावाद हंसा इव राजानोऽपि तत्तद्देशं न त्यजन्ति स्म अयमुदन्तः—चमूचराणां सैन्यानां विस्मयः विस्मय-

जनकः किं न ? अपि तु विस्मयजनक एव चमूखातधूलिं दृष्ट्वैव नृपपलायने कर्त्तव्ये सत्यपि तन्न कृतमिति विस्मय इति भावः ॥२२३॥

गत्वेति—

गत्वा योजनमात्मशक्तिनियते श्रीचक्ररत्ने स्थिते ।
स्वामी द्वादशयोजनानि शिविरं न्यास्थद् व्यवस्थापरः ।
नास्मार्षीद् निजवेश्मनामपि जनः कश्चिच्च सेनाचर-
स्तिष्ठन् वार्धकिरत्ननिर्मितगृह-स्तोमेषु रम्येष्वलम् ॥२२४॥

योजनं योजनप्रमाणं क्षेत्रं गत्वा आत्मशक्त्या नियते नियन्त्रिते श्रीचक्ररत्ने स्थिते, गतिविरते सति व्यवस्थापरः सैन्यव्यवस्थालग्नः स्वामी शान्तिजिनः द्वादशयोजनानि द्वादशयोजनप्रमाणदेशं यावत् शिविरं, सेनानिवेशं न्यास्थत् सैन्यवासस्थानं चकार। 'निवेशः शिबिरं' इत्यमरः सेनासु चरतीति तादृशः सेनासमवेतः कश्चिज्जनश्च अलमत्यर्थं रम्येषु वार्धकिरत्नेन सूत्रधारश्रेष्ठेन निर्मितेषु गृहाणां स्तोमेषु श्रेणीषु तिष्ठन् निवसन् निजवेश्मनामपि नास्मार्षीत्, स्वगृहमपेक्ष्याऽपि अत्र सौविध्यविशेष्यलाभादिति भावः ॥२२४॥

गच्छन्निति—

गच्छन्नेवं प्रतिदिनमविच्छिन्नरूपैः प्रयाणै-
र्विश्वोत्तापं व्यपगमयितुं प्राप्तविस्तारसारः ।
पूर्वाम्भोधिं सुकृतविदुषां वन्दनीयोऽमराणां,
प्राप स्वामी रसमय इव स्वःस्रवन्त्याः प्रवाहः ॥२२५॥

एवमुक्तप्रकारेण प्रतिदिनमविच्छिन्नरूपैः निरन्तरैः प्रयाणैः प्रस्थानैः कृत्वा गच्छन् विश्वस्योत्तापं दुःखं तापं वा व्यपगमयितुं दूरीकर्त्तुं प्राप्तः विस्तारः विपुलः सारो बलमतिशयश्च येन सः, तथा विस्तरसारोऽतिविस्तृतः पटविस्तारो वा येन स शान्तिजिनः प्रवाहश्च, सुकृतविदुषाम् पुण्यवतां धीमताम् अमराणां देवानां वन्दनीयः स्वामी शान्तिजिनः रसमयः जलमयः शान्तिपक्षे गुणमयश्च, "गुणे रागे द्रवे रसः" इत्यमरः, स्वःस्रवन्त्याः गङ्गायाः प्रवाह इव पूर्वाम्भोधिं पूर्वसमुद्रं प्राप ॥२२५॥

सरेति—

सरस्वतीनामविनश्वरं पदं, स्वबन्धुवत् सद्गुणरत्नसञ्चयम् ।
समीरणप्रेरितवीचिबाहुभिः, समालिलिङ्गेव विभुं पयोनिधिः ॥२२६॥

पयोनिधिः समुद्रः सरस्वतीनां विद्यानां नदीनां च अविनश्वरं स्थिरं पदं स्थानं सद्गुणा एव रत्नानि तेषां संचयो यस्मिन् स तादृशः तम् विभुं शान्तिजिनं स्वबन्धुवत् समुद्र इव तद्-

न्धुरपि रत्नसंचयावान् सरस्वतीपदं च सम्भाव्यते इति तादृशः जिनः स्वबन्धुरेवेति भावः, समीरणेन पवनेन प्रेरितैः उत्तालीकृतैः विचयास्तरङ्गा बाहव इव तैः समालिलिङ्गेव कथमन्यथा तरङ्गोत्थानमिति भावः श्लेषपुष्टोपमा ॥२२६॥

अथोइति—

**अथो निविष्टः स च सिंहविष्टरे, स्वयं प्रभुर्मागधतीर्थसंमुखम् ।**
**जिनेन्द्रचक्रिद्वयवृत्तवर्तिनां, ललामभूतः कमनीयविग्रहः ॥२२७॥**

अथो अनन्तरम् जिनेन्द्राणां चक्रिणां च चक्रवर्तिनां च द्वयं युगलं तस्य वृत्तं चारः तत्र वर्तन्ते इति तेषां जिनेन्द्राणां चक्रवर्तिनाञ्च ललामभूतः तिलकरूपः कमनीयविग्रहः रमणीयशरीरः प्रभुः स शान्तिजिनः स्वयं पूर्वदिशि समुद्रतटात् मागधतीर्थसम्मुखम् सिंहविष्टरे सिंहासने निविष्टः उपविवेश ॥२२७॥

अवेति—

**अवस्थितो द्वादशयोजनान्तके, स्वकीयसिंहासनकम्पनादनु ।**
**समुत्पतत्क्षोभसमाकुलाशयो, व्यचिन्तयद् मागधतीर्थनायकः ॥२२८॥**

द्वादशयोजनानामन्तकेऽन्तेऽवस्थितः मागधतीर्थस्य नायकः देवः मागधकुमारनामा स्वकीयसिंहासनस्य कम्पनादनु पश्चात् समुत्पतद्भिः उत्पद्यमानैः क्षोभैः व्याकुलताभिः समाकुलः पीडितः आशयो यस्य स तादृशः अकस्मात्सिंहासनकम्पनात् क्षुब्धः सन् व्यचिन्तयत् ॥२२८॥

मागधतीर्थेशचिन्तामेवाह-मदिति—

**मत्सिंहासनकम्पमाप यदिदं निष्कम्पमेवान्वहं,**
**तत्किं मे च्यवनं किमद्भुतमहो ! विघ्नोऽपि भावी किमु ? ।**
**शत्रोरेव विचेष्टितं किमथवा कस्यापि चैतन्मम,**
**ध्यात्वैवं स च संशयापहतये प्रायुङ्क्त बोधं निजम् ? ॥२२९॥**

अन्वहं सर्वदैव निष्कम्पं स्थिरमिदं मत्सिंहासनम् एवं स्वभावे सत्यपि यद् मत्सिंहासनकंपम् कंपनमाप, किमिति वितर्के तन्मे किं च्यवनम् अहो किमद्भुतमाश्चर्यं विघ्नोऽपि विघ्नो वा किं भावी, अथवा एतत्सिंहासनकम्पनम् कस्यापि मम शत्रोरेव विचेष्टितम् किम् ? एवमित्थं ध्यात्वा वितर्क्य संशयस्यापहतये भेदनाय स मागधतीर्थेशश्च निजं बोधं प्रायुंक्त निजावधिज्ञानोपयोगं ददावित्यर्थः ॥२२९॥

अवेत्येति—

**अवेत्य तं षोडशधर्मचक्रिणं, समागतं पञ्चमचक्रवर्तिनम् ।**
**व्यचारयद् मागधतीर्थनायकः, स्वचेतसैवं पुनरुद्धचेतनः ॥२३०॥**

षोडशधर्मचक्रिणं तीर्थङ्करं पञ्चमचक्रवर्त्तिनम् तं शान्तिजिनं समागतमवेत्य ज्ञात्वा ऋद्धा सातिशया चेतना बुद्धिर्यस्य स तादृशः धीमान् मागधतीर्थनायकः पुनः स्वचेतसा एवं वक्ष्यमाणप्रकारेण व्यचारयत् दध्यौ ॥२३०॥

तद्विचारणामेवाह अहो! इति—

**अहो! धिगज्ञानमिदं ममाधुना, प्रभुत्वमेतद् धिगपि प्रसृत्वरम्।**
**विजृम्भणाद् यस्य न शान्तिमागतं, कथञ्चिदज्ञासिषमेव नायकम् ॥२३१॥**

अहो इति खेदावेदे। अधुना मम इदमऽज्ञानं धिक्, निन्दितमित्यर्थः, एतद्वर्तमानं प्रसृत्वरं वर्धमानं प्रभुत्वमिति धिक्, निन्दने हेतुमाह—यस्याज्ञानस्य प्रभुत्वस्य च विजृम्भणान्मोहादिरूपस्वप्रभावप्रकाशनाद्धेतोः कथञ्चिन्मदीयपुण्यसम्भारादितः आगतं नायकं शान्तिजिनं न अज्ञासिषम् ॥२३१॥

उपेति—

**उपासनामल्पितकल्पशाखिनः, प्रकुर्वते यस्य च कल्पवासिनः।**
**प्रभोः सपर्यामपि तस्य कीदृशी-महं करिष्यामि तनिष्ठऋद्धिकः? ॥२३२॥**

यस्य शान्तिजिनस्य अल्पितः लघूकृतः चिन्तितादप्यधिकफलदानादिना कल्पशाखी कल्पवृक्षो येन तस्य प्रभोः कल्पवासिनः वैमानिकाः देवाश्चोपासनां सेवाम् प्रकुर्वते, तस्य प्रभोः शान्तिजिनस्य तनिष्ठऋद्धिकोऽत्यल्पशक्तिः अहं मागधतीर्थेशः कीदृशीं किम्प्रकारां सपर्यामर्हणामपि करिष्यामि? मत्कृताऽर्हणाऽत्यल्पैव भवेदिति भावः ॥२३२॥

स्वेति—

**स्वसंपदोऽस्याऽप्यनुसारतः प्रभोस्तथापि भक्तिं वितनोमि सांप्रतम्।**
**महात्मनां कार्मणकर्मणि स्फुटं, विहाय भक्तिं न परं हि साधनम् ॥२३३॥**

तथापि अल्पर्द्धित्वेऽपि स्वसम्पदः अनुसारतोऽपि अनुरूपतोऽपि साम्प्रतमस्य प्रभोः शान्तिजिनस्य भक्तिम् सेवां वितनोमि करोमि, भक्तिरेव सेवायां प्रधानं, न सम्पदित्याह हि यतः महात्मनाम् पुरुषोत्तमानां तीर्थङ्करादीनां कार्मणकर्मणि कैङ्कर्ये भक्तिं विहाय परं सम्पदादिसाधनं न, स्फुटमेतत्, महात्मनां स्वयं सर्वाधिकतरर्द्धिकत्वात्तत्र भक्तेरेव योग्यतेति भावः ॥२३३॥

इदमिति—

**इदं विनिश्चित्य निजेन चेतसो, पदां समादाय समेत्य सत्वरम्।**
**पदारविन्दद्वितयं पुरः प्रभोर्ननाम नक्षत्रपथे कृतस्थितिः ॥२३४॥**

इदमुक्तप्रकारं निजेन चेतसा विनिश्चित्य उपदामुपहारं समादाय सत्वरं समेत्य प्रभोः शान्तिजिनस्य पुरः नक्षत्रपथेऽन्तरीक्षे कृतस्थितिः स्थितः सन् देवानामभूमिस्पृक्त्वादिति भावः । पदारविन्दद्वितयं शान्तिजिनपादपद्मयुगं ननाम ॥२३४॥

व्यजीति—

**व्यजिज्ञपच्चाभयदानदक्षिण ! त्वया विभो ! मत्पदमायता स्वयम् ।**
**सुरेषु रेखा मम नैव केवलं, निवेशिता किन्तु सुरेश्वरेष्वपि ॥२३५॥**

व्यजिज्ञपत् मागधतीर्थेशः न्यवेदयच्च कित्याह—अभयदाने दक्षिण ? समर्थ ! प्रभो ! स्वामिन् ! मत्पदम् मत्स्थानं स्वयमेवायताऽऽगच्छता त्वया मम केवलं सुरेष्वेव रेखा पङ्क्तिः न निवेशिता, किन्तु सुरेश्वरेष्वपि मदीया रेखा निवेशिता, सुरेश्वरपङ्क्तावेव मम पङ्क्तिरपि न्यस्तेत्यर्थः ॥२३५॥

सुरेष्वेति—

**सुरेश्वराणां न कदापि यत्पदं स्वपादपद्मैस्त्वयका पवित्रितम् ।**
**पवित्रितं देव ! ममैव तत्परं कृतः कृतार्थोऽस्मि निकृत्यपासिना ॥२३६॥**

यद्यतः निकृत्यपासिना भवबन्धननाशकेन त्वयका त्वया स्वपादपद्मैः सुरेश्वराणां पदं स्थानं कदापि न पवित्रितम्, देव ! परं किन्तु ममैव तत्स्थानं पवित्रितमित्यतः कृतार्थः कृतकृत्यः कृतोऽस्मि, सुरेन्द्रेभ्योऽपि उक्तहेतोस्तव मय्यधिकोऽनुग्रह इत्यर्थः ॥२३६॥

अत इति—

**अतः परं ते विनियोगवर्तिनां पुरस्सरोऽस्म्येष विशेषवेदितः ।**
**निदेशदानेन यदा कदाचन, प्रसादनीयः स्मृतिपूर्वकं त्वया ॥२३७॥**

अतः परमितोऽग्रे विशेषवेदितः वैशिष्ट्यम् निजागमनादिना प्रापितः एषोऽहम् मागधतीर्थेशः ते तव विनियोगवर्तिनामाज्ञास्वीकुर्वतां पुरस्सरोऽग्रेसरोऽस्मि, त्वया यदा कदाचन स्मृतिपूर्वकं स्मृत्वा निदेशदानेनाज्ञाप्रदानेन कृत्वा प्रसादनीयोऽनुग्राह्योऽस्मि ॥२३७॥

इतीति—

**इतीरयित्वा प्रणिपत्य नित्यगीः सुरस्ततोऽस्मै मणिभूषणाऽञ्चितम् ।**
**उपायनं सन्निधिमानुपानयद् न तादृशां रञ्जनमन्यदस्ति यत् ॥२३८॥**

इत्युक्तप्रकारमीरयित्वा प्रणिपत्य प्रणम्य नित्यगीः सत्यवाक्सुर. मागधतीर्थदेवः ततः प्रणामानन्तरम् सन्निधिमान् समीपस्थः सन् मणिभूषणाञ्चितम् उपायनमुपहारमुपानयदुपढौकितवान्, ननु किमिति साधारणं द्रव्यादि नोपानयदित्यत आह— यद्यतः तादृशां महतामन्यत्साधारणद्रव्यादि रञ्जनं मनःप्रीतिजनकं नास्ति महतां महद्भिरेव तृप्तिरिति भावः ॥२३८॥

विसेति--

विसर्जितः सत्कृतिपूर्वकं सुरः प्रसादभाजा स च शान्तिचक्रिणा ।
ययौ निजस्थानमनाहतक्रमं समुल्लसत्तोषपरीतमानसः ॥२३९॥

प्रसादभाजा प्रसन्नेन शान्तिचक्रिणा चक्रवर्तिना शान्तिनाथेन सत्कृतिपूर्वकम् ससत्कारं विसर्जितोऽनुज्ञातः स सुरः मागधतीर्थेशश्च समुल्लसता तोषेण हर्षेण परीतं पूर्णं मानसं यस्य स नितरां तुष्टहृदयः सन् अनाहतक्रमं क्रममनतिक्रम्य निजस्थानं ययौ ॥२३९॥

तत इति—

ततः क्षणाद्दक्षिणवार्धिरोधसि स्थितः स्थिराधीशनतक्रमाम्बुजः ।
असाधयद् मागधवत् समागधः सुरं स्वशक्त्या वरदामनायकम् ॥२४०॥

ततो मागधेशगमनानन्तरम् क्षणात्स्वल्पकालत एव स्थिरायाः पृथिव्याः अधीशैः महीशैः नते प्रणते क्रमांवुजे पादपद्मे यस्य स तादृशः समागधः मागधेन सहितः शान्तिजिनः दक्षिणवार्धेः दक्षिणसमुद्रस्य रोधसि तीरे—"कूलं रोधश्च तीरञ्चे"—त्यमरः" ! स्थितः सन् वरदामस्य तदाख्यतीर्थस्य नायकमीशं सुरं देवम् स्वशक्त्या मागधवन्मागधतीर्थेशवदसाधयत् स्ववशीचकार ॥२४०॥

सैन्यमिति—

सैन्यं पश्चिमवारिधेरनुतटं विन्यस्य शान्तिप्रभु-
र्दत्तानर्घ्यमणीविभूषणगणं शिष्टिप्रतीष्टिव्रतम् ।
संमान्यप्रतिभासमानममरं तं च प्रभासेश्वरं,
वाताधीशदिगध्वना चलितवान् श्रीसिन्धुदेवीं प्रति ॥२४१॥

शान्तिप्रभुः पश्चिमवारिधेः अनुतटम् तटे सैन्यं विन्यस्य स्थापयित्वा दत्त उपदीकृतः अनर्घ्याणाममूल्यानां मणीविभूषणानां गणो येन तं तादृशम् शिष्टौ निजाज्ञायाम् "शिष्टिश्चाज्ञा चेत्यमरः" । प्रतीष्टिः प्रीतिः व्रतं यस्य तं तादृशमाज्ञापालकं प्रतिभासमानम् प्रभासस्य तदाख्यतीर्थस्य ईश्वरमधिनायकममरं देवं तञ्च सम्मान्यानुमतं कृत्वा वातः पवनोऽधीशः पतिः यस्याः तद्दिगध्वना वायव्यदिङ्मार्गेण श्रीसिन्धुदेवीं प्रति चलितवान् ॥२४१॥

स्वामीति—

स्वामी सैन्यं न्यधित सुमतिः सिन्धुसिन्धोः प्रतीरे,
वामे वामे सविधसविधे सिन्धुदेवीगृहस्य ।
यस्मिंस्तार्णं न च जलमपि प्रायशो धन्वनीव,
सैन्यानर्हे वदनरदनश्रोत्रकाश्मल्यभित्त्यै ॥२४२॥

सुमतिः ज्ञानी स्वामी शान्तिजिनः सिन्धुसिन्धोः सिन्धुनद्याः–"सिन्धुः समुद्रे नद्यां चेति विश्वकोशः" प्रतीरे तटे "प्रतीरं च तटं त्रिष्वित्यमरः।" सिन्धुदेव्याः गृहस्य मंदिरस्य सविध-सविधे अतिसमीपे वामे रम्ये वामे वामभागे–"वामस्तु वक्रे रम्ये स्यात्सव्ये वामगतेषु चेत्य मरः" । सैन्यं न्यधित निवेशयामास सैन्यानामनर्हेऽयोग्ये यस्मिन् तटे धन्वनि मरुदेश इव–"मरुधन्वानौ इत्यमरः" । प्रायशः वदनानां मुखानां, रदनानां दंतानां, श्रोत्राणाञ्च काश्मल्यस्य कृष्णतायाः भित्यै भेदनाय दूरीकरणाय तार्णं तृणसमूहः जलमपि च न नाभूत् ॥२४२॥

शान्तिमिति—

शान्तिं स्वाभिमुखं जगत्त्रयपतिं सिंहासनस्थायिनं,
विज्ञायाऽवधिनोपदाभृतकरा श्रीसिन्धुदेवी मुदा।
आगत्य प्रणिपत्य विज्ञपयति स्मैनं प्रभुं प्राञ्जलि-
र्धन्याऽहं तव दर्शनादिह विभो! स्थास्नुर्निदेश्या सदा ॥२४३॥

जगत्त्रयपतिं शांतिं शांतिजिनं स्वाभिमुखं सिंहासनस्थायिनमवधिनाऽवधिज्ञानोपयोगेन विज्ञाय मुदा उपदाभिः भृतः पूर्णः करो यस्याः सा गृहीतोपदा श्रीसिन्धुदेवी आगत्य प्रणिपत्य प्राञ्ज-लिर्बद्धाञ्जलिः सती एवं प्रभुं शान्तिं विज्ञपयति स्म, एवमिति किमित्याह–विभो! इहात्र स्थास्नुः स्थिताऽहं तव दर्शनाद्धन्या प्रशस्या जाता, सदा निदेश्या आज्ञातव्या च त्वयेति शेषः॥२४३॥

इतीति—

इत्यालप्य समर्प्य भास्वरतरं दिव्यं विभूषाचयं,
जात्याष्टापदभूरिरत्नसदनद्रोणीघटान् सा समान्।
विश्वेशः प्रतिपद्य शिष्टिममरीं सत्कारमाप्याऽगमत्,
स्वस्थानं वृषभध्वजस्य च दिशा वैताढ्यशैलं प्रभुः ॥२४४॥

इत्युक्तप्रकारमालप्योक्त्वा सा सिन्धुदेवी भास्वरतरमतिभास्वरं दिव्यं विभूषाणामलङ्का-राणां चयं रागिमसमानऽनुपमान् समर्प्य शान्तिजिनायोपहृत्य अमरी शिष्टिमाज्ञां सत्कारञ्चाप्य स्वस्थानम् अगमत् जगाम, विश्वेशः शान्तिजिनश्च प्रभुः प्रतिपद्य सिन्धुदेव्युपहृतं स्वीकृत्य वृषभ ध्वजस्येशानस्य दिशा ईशानदिशा वैताढ्यशैलमगमत् ॥२४४॥

ज्ञात्वेति—

ज्ञात्वा स्वामिनमागतं सपृतनं वैताढ्यशैलप्रभु-
र्द्रागाऽऽगत्य विनत्य चाऽऽदित विभोः शिष्टिं कृतोपायनः ।

**चक्री चक्रमनुव्रजंश्च सबलः प्राप्तस्तमिस्रां गुहा-**
**मासीनः कृतमालकाभिधसुरं चक्रे सहेलं वशम् ॥२४५॥**

वैताढ्यशैलस्य प्रभुरीशो देवः सप्तनं ससैन्यं स्वामिनं शान्तिजिनमागतं ज्ञात्वा कृतोपायनः उपहृतोपायनः सन् द्राक् शीघ्रमागत्य विनत्य प्रणम्य च विभोः शान्तिजिनस्य शिष्टिमाज्ञामादित स्वीकृतवान् चक्री शान्तिजिनश्च सबलः ससैन्यः चक्रमनुव्रजन्—चक्रमनुगच्छन् तमिस्रां तदाख्यां, गुहां कंदरां प्राप्तः "दरी तु कंदरोवा स्त्री देवखातबिले गुहे" त्यमरः। तत्राऽऽसीनः स्थितस्सन् प्रभुः कृतमालकाभिधं सुरं सहेलमनायासेनैव वशं स्वाधीनं चक्रे ॥२४५॥

**आज्ञप्त इति—**

**आज्ञप्तः प्रभुणा चमूपतिरथो सिंधुं नदीं चर्मणा,**
**प्रोत्तीर्य स्ववशंवदं व्यरचयत् तन्निष्कुटं दक्षिणम् ।**
**तामिस्रं विहिताष्टमः स च जवादुद्घाटयामासिवान्,**
**द्वारं स्वामिनिदेशतः पृथुमतिर्दण्डेन रत्नेन तत् ॥२४६॥**

अथो—अनन्तरम् प्रभुणा—शान्तिजिनेन आज्ञप्तः चमूपतिः सेनापतिः चर्मणा चर्मरत्नेन सद्यानपात्रीभूतेन स सिन्धुं नदीं प्रोत्तीर्य दक्षिणं दक्षिणादिक्स्थं तन्निष्कुटं स्ववशवदं व्यरचयत् । तथा स्वामिनः शान्तिजिनस्य निदेशतः आज्ञप्तः विहितम् अष्टमं तदाख्यं तपो येन स तादृशः पृथुमतिर्महाबुद्धिः चमूपतिः दण्डेन रत्नेन दण्डरत्नेन तामिस्रं—द्वारम् जवात् शीघ्रमेवोद्घाटयामासिवान् ॥२४६॥

**प्रविश्येति—**

**प्रविश्य वाष्पोपरमे तदन्तरे महेभमारुह्य चमूपरिष्कृतः ।**
**निवेश्य कुम्भे मणिमेव दक्षिणे दरीतमच्छेदयति स्म चक्रभृत् ॥२४७॥**

वाष्पस्य—"बाष्प ऊष्मा" इति हैमः,, तमिस्रागुहावर्त्तिन ऊष्मण उपरमे निवृत्तौ सत्यां चक्रभृत् शान्तिजिनः महेभं गजराजमारुह्य चमूभिः सेनाभिः परिष्कृतः समन्वितः तदन्तरे तस्या तमिस्राया अभ्यन्तरे प्रविश्य दक्षिणे कुम्भे गजापसव्यकुम्भे मणिं निवेश्य स्थापयित्वा एव दर्याः कन्दरायाः तमोऽन्धकारं छेदयति नाशयति स्म ॥२४७॥

**तदेति—**

**तद्भित्त्योरपि मण्डलानि विलिखन्नेकोनपञ्चाशतं,**
**काकिन्या मणिना प्रभुः स पुरतोऽयासीत् प्रयासं विना ।**
**चक्री वर्धकिना निबद्धसरणिः क्षिप्रं निमग्नाभिधो-**
**न्मग्नाख्यं हृदिनीद्वयं परमवातारीत् तदन्तःस्थितम् ॥२४८॥**

तस्याः तमिस्राकन्दरायाः भित्त्योः कुडययोरपि काकिन्या तदाख्येन मणिना एकोनपञ्चाशतं मण्डलानि विलिखन् स प्रभुः शान्तिजिनः प्रयासं श्रमं विनैव पुरतोऽग्रतोऽयासीत्। तथा चक्री शान्तिजिनः वर्धकिना सूत्रधारेण क्षिप्रं शीघ्रमेव निबद्धसरणिः निर्मितमार्गः सन् रचितसेतुनेति भावः तस्या गुहाया अन्तः मध्ये स्थितं परं विशालं निमग्नाभिधमुन्मग्नाख्यम् च ह्रदिन्योर्नद्योर्द्वयम् अवातारीत् ॥२४८॥

**तदेति—**

**तदाऽऽत्मनैवोद्घटितं तदौत्तरं महागुहाद्वारमुपागते विभौ।**
**न चात्र चित्रं प्रतिभासते सतां शुभात्मनां यत् सकलं सुसम्भवम् ॥२४९॥**

तदा उद्धित्यवतारसमये विभौ शान्तिजिने उत्तरद्वारसन्निध उपागते तस्या औत्तरं तदौत्तरमुत्तरदिक्स्थं तमिस्राख्यमहागुहाया द्वारम् आत्मना स्वत एव उद्घटितम्, ननु एतच्चित्रम् पिहितं द्वारं कथं स्वयमेवोद्घिटितमिति चेत् तत्राह— अत्र स्वयं द्वारोद्घाटनविषये चित्रमाश्चर्यं नच नैव प्रतिभासते यवतः शुभात्मनां पुण्यवतां सतां महतां सकलं शक्यमशक्यं सर्वमेव सुसम्भवम् युज्यते, पुण्यप्रभावतो-ऽशक्यमपि शक्यं भवतीति भावः ॥२४९॥

**विजेतुमिति—**

**विजेतुमेवोत्तरभारतं पृथुं कुबेरदिग्द्वारिकयैव निःसृतम्।**
**ससैन्यमायान्तमवेक्ष्य चक्रिणं सहासमापातशका मिथो जगुः ॥२५०॥**

पृथुं विशालमुत्तरभारतं विजेतुमेव नतु केवलं पर्यटितुम् कुबेरदिश उत्तरदिशः द्वारिकया द्वारेणैव निःसृतम् गुहाबहिर्गतम् चक्रिणं शान्तिजिनं ससैन्यमायान्तमवेक्ष्य आपातशकाः शकजातीयाः जनाः मिथः परस्परं सहासम् अवज्ञासूचकहाससहितं जगुः ब्रुवन्ति स्म ॥२५०॥

**शकवाचमेवाह—अरे !**

**अरे ! चतुर्धा बलमानशालितः क एव निःशङ्कमुपैति गर्वितः।**
**बलावलेपेन परोपवर्तनं ग्रहीतुकामः क इवाभिवर्ण्यताम् ॥२५१॥**

अरे ! निकृष्टसम्बोधनमिदम्, चतुर्धा गजाश्वरथपत्तिरूपचतुःप्रकारेण बलमानेन सैन्यप्रमाणेन शालितः शोभितः चतुरङ्गबलसहितः, गर्वितः गर्वयुक्तः क एव निशङ्कं निर्भयमुपैत्यागच्छति ? अत्रागमने तु भेतव्यमेव सर्वैरिति भावः। अथवा बलस्य वीर्यस्यावलेपेन गर्वेण परस्यान्यस्योपवर्त्तनं देशं ग्रहीतुकामः वशीकर्तुकामः क इवाभिवर्ण्यताम् ? परमण्डलं विजिगीषुर्हि गर्वितश्च निन्दनीय एव न तु प्रशंसनीय इति यावत् ॥२५१॥

**बलेति—**

**बलाबलं स्वस्य परस्य वा बुधो विचार्य कार्यव्यवसायमाश्रयेत्।**
**विचारमुत्सृज्य गृहीतपौरुषः पराभवं विन्दति यद् महानपि ॥२५२॥**

बुधो–धीमान् स्वस्य परस्य प्रतिपक्षस्य वा बलञ्चाबलञ्च बलतारतम्यं विचार्य कार्यस्य विजयादिरूपस्य व्यवसायमुद्योगमाश्रयेत्कुर्यात्, अन्यथा विचारमुत्सृज्य अविचार्यैव गृहीतपौरुषः प्रयुक्तपराक्रमः महानपि पराभवं पराजयं विन्दति लभते, न बलेनैव कार्यसिद्धिः, किन्तु विचार-सहितेनेति भावः ॥२५२॥

गजैरिति–

**गजैः किमेभिर्महिषैरिवाऽमदैः खरैरिवोच्चैस्तुरगैरथापि किम्?**
**नरैरमीभिः किमु वानरैरिव, प्रवर्तमानैः परदेशलिप्सया? ॥२५३॥**

'महिषो वाहद्विषत्कासरसैरिभा'-इत्यमरवचनात् । महिषैः सैरिभैरिवाऽमदैः मदहीनैरेभिः सैन्यस्थितैः गजैः कृत्वा किम्? न किञ्चिदपीत्यर्थः । मदहीना गजाः पौरुषहीनत्वान्न युद्ध-सहा इति भावः । अथापि तथा खरैः गर्दभैरिव युद्धक्रियानभिज्ञैः उच्चैः तुरगैः किम्? न किञ्चिदपि, एतादृशानां तुरगाणां खराणामिव युद्धे अकिञ्चित्करत्वादिति भावः । परदेशस्य लिप्सया अधिकर्तुमिच्छया प्रवर्तमानैः आरम्भकर्तृभिः वानरैरिवाल्पसत्त्वैः अमीभिर्दृश्यमानैः नरैः सैन्यैः किमु? न किञ्चिदपि अल्पसत्त्वतया एवाकिञ्चित्करत्वादिति भावः ॥२५३॥

महेति–

**महाबलैः किं यदि वा महाबलै–स्तुरङ्गमैः किं यदि वा तुरङ्गमैः?**
**महारथैः किं यदि वा महारथै न सांयुगीना यदि ते महाभटाः? ॥२५४॥**

यदिमे उक्तविपरीतास्तथाप्यकिञ्चित्करा एवत्याह–यदि वा महाबलैः महापराक्रमैः महा-बलैः सैन्यसमूहैः किम्? न किमपीत्यर्थः । यदि वा तथा तुरङ्गमैः शीघ्रगामिभिः तुरङ्गमैरश्वैः किम्? न किमपीत्यर्थः । यदि वा तथा महान्तः रथा येषां तादृशैः विशालरथशालिभिः महारथै भटविशेषैः सहस्रयोधिभिः किम्? न किमपीत्यर्थः । तत्र हेतुमाह यदि ते महाभटाः योद्धारः सांयुगीनाः युद्धे हिताः युद्धाभ्यासवन्तः युद्धपटव इति यावत्, न, न सन्ति– योधानां रणकौशल्याभावे रथादिवैशिष्टयमकिञ्चित्करमेवेति भावः "सांयुगीनो रणे साधुः" इति हैमः ॥२५४॥

शाणेति–

**शाणाजीवानिवैतान् निशितबहुविधाऽस्त्राणि पाणौ दधाना–**
**नस्माकं देशसीमां समुपनिपततो धिग् मुमूर्षून् सुमूर्खान्**
**एते चोपेक्ष्यमाणा व्यसनजननवद् नाऽऽयतौ शर्मणे स्युः,**
**पञ्चत्वं प्रापयामः सुकृतपरिणतैः शक्तितस्तद् विमूढान् ॥२५५॥**

शाणैः शस्त्रादितीक्ष्णीकरणादिकर्मभिर्जीवन्तीति ते तादृशाः, शाणाजीवो हि शस्त्रादीनि तीक्ष्णानि करोति, न तु तत्प्रयोगे तदाघातसहने वा समर्थ इति भावः । तानिव निशितानि

तीक्ष्णानि बहुविधानि अस्त्राणि पाणौ दधाना नु ननु तत्प्रयोगेऽपि समर्था इति भावः अस्माकं शकानाम् देशसीमां मण्डलावधिम् समुपनिपततः सीमामुल्लङ्घ्य मण्डलान्तः प्रविशतः मुमूर्खान् मन्दबुद्धीन्, सीमोल्लङ्घनदुष्परिणामाज्ञानादिति भावः । मुमूर्षून् मृत्युमिच्छतः, मृत्युं विहायान्यफला-सम्भवादिति भावः । धिक् निन्दनीया एते स्वाहितापरिज्ञानादिति भावः । एते च समागता योधाः उपेक्ष्यमाणा नैते किमपि कर्तुं प्रभवन्तीति उपेक्षिता सन्तः आयतावुत्तरकाले व्यसनजननवत् व्यसनोत्पत्तिमिव, शर्मणे कल्याणाय न स्युः भवेयुः, यथा हि व्यसनमादौ अकिञ्चित्करमपि पश्चाद् दुरत्ययं भवति तथेत्यर्थः ततः विमूढान् मन्दमतीन् एतान् सुकृतपरिणतेः पुण्यप-रिणामरूपायाः शक्तितः स्वपराक्रमतः, न विनापुण्यं पराक्रमो भवतीति भावः । पञ्चत्वं मृत्युं प्रापयामः, निहन्म एतानित्यर्थः ॥२५५॥

विचार्येति—

विचार्य चैवं शकवीरमण्डली, विचित्रधौताऽऽयुधजातमण्डिता ।
पुरस्थसैन्येन च चक्रवर्तिनः, प्रचक्रमे योद्धुमनुक्रमेण सा ॥२५६॥

एवमुक्तप्रकारेण विचार्य च सा शकवीरमण्डली शकभटसमूहः विचित्रैः नानाविधैः धौतैः— "क्षालितैः धौतं क्षालितं" इति हैम धवलैः तीक्ष्णैश्चायुधजातैः अस्त्रसमूहैः मण्डिता सहिता सति, अस्त्राणि गृहीत्वेत्यर्थः । चक्रवर्तिनः शान्तिजिनस्य पुरस्थेनाग्रसरेण सैन्येनानुक्रमेण क्रमशः योद्धुं प्रचक्रमे प्रक्रान्ता ॥२५६॥

चमूपतिरिति—

चमूपतिर्वीक्ष्य पराङ्मुखीकृतान् , किरातवीरैः प्रभुसैनिकानिमान् ।
क्रुधाऽसिरत्नं परिगृह्य संमुखोऽश्वरत्नमारुह्य दधाव तान् प्रति ॥२५७॥

चमूपति शान्तिसेनापतिः इमान् युद्ध्यमानान् प्रभोः शान्तेः सैनिकान् किरातवीरैः शकयोधैः पराङ्मुखीकृतान् पलायनपरान् वीक्ष्य क्रुधा असिरत्नं खड्गरत्नं परिगृह्य अश्वरत्नमारुह्य तान् शक-वीरान् प्रति संमुखः सन् दधावाऽभिययौ ॥२५७॥

विभेति—

विभासमानेन च तेन तत्क्षणं, रराज रत्नत्रितयेन सा चमूः ।
यथैव शक्तित्रितयेन राजता, यथैव गुप्तित्रितयेन साधुता ॥२५८॥

तेन चमूपतिना विभासमानेन राजमानेन सता तत्क्षणं तस्मिन् काले सा चमूः सेनार-त्नानां त्रितयेन असिरूपेणाश्वरूपेण सेनापतिरूपेण च रराज शुशुभे, किमिवेत्याह—यथैव हि—"शक्त-यस्तिस्र प्रभुत्वोत्साहमन्त्रजाः" इतिहैमोक्ते"—शक्तीनां प्रभुत्वोत्साहमन्त्रजानां त्रितयेन राजता

नृपत्वम्, यथैव च गुप्तीनाम्--मनोगुप्तिवचनगुप्तिकायगुप्तीनां जिनोक्तानां त्रितयेन साधुता तथे-त्यर्थः ॥ मालोपमाऽलङ्कार. ॥२५८॥

रणेति—

रणाङ्गणे तस्य पताकिनीपतेर्न कोऽपि तस्थौ पुरतोऽभिधावतः ।
तमिस्रसंभार इवोष्णदीधितेर्गरुत्मतः सर्प इवाऽभिसर्पतः ॥२५९॥

रणाङ्गणे युद्धस्थल्याम् अभिधावतः जवेन प्रहरतः तस्य पताकिनीपतेः सेनापतेः पुरतोऽग्रतः कोऽपि न तस्थौ, अग्रे, गतः सर्वोऽपि मृतो वा पलायितो वा, क इवेत्याह--उष्णदीधितेः सूर्यस्याग्रतः तमिस्रस्य तिमिरस्य संभारोऽतिशय इव, अभिसर्पत सम्मुखं धावतः गरुत्मतो गरुडस्याग्रतः सर्प इव । मालोपमा ॥२५९॥

शालूरा इति—

शालूरा इव केचनाऽपि सरसि त्रस्ता ममज्जुर्भटा,
भुञ्जाना इव केचनाऽपि वदने न्यास्थन् स्वहस्ताङ्गुलीः ।
स्वप्राणान् परिरक्षितुं वृषभवत् तस्मिँश्च केचित् तृणं,
केऽपि क्वाऽपि निलिल्यिरे सलिलवद् दुग्धे विदग्धाशयाः ॥२६०॥

तस्मिन् रणाङ्गणे च त्रस्ताः मृत्युभीताः सन्तः केचित्कतिपयभटा योधाः शालूरा भेका इव--"भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः" इत्यमरः । सरसि--तडागे, ममज्जुः, अलक्ष्यत्वाद्यथा हतो न स्यामिति बुद्धयेति भावः। केचनाऽपि भुञ्जाना भोजनं कुर्वाणा इव वदने मुखे स्वहस्ताङ्गुलीः न्यास्थन् निवेशयामासुः, अभटान् बुद्ध्वा यथा न हन्यादिति भावः। केचिच्च स्वप्राणान् परिरक्षितुं वृषभवत्पशुवत् तृणं वदने न्यास्थन्, तृणमुखं हि वीरो न हन्तीति युद्धनीतिरिति भावः। केऽपि च विदग्धाशयाः चतुराः दुग्धे क्वापि स्थाने सलिलवत् सलिलानीव निलिल्यिरे तिरोहिताः ॥२६०॥

अनीति—

अनीकिनीनायकरत्नसायकप्रभिन्नलक्षस्य विलोकनादिति ।
विलक्षतामाप्य दिशो दिशं ययुः किरातवीरा मरुतेव पांशवः ॥२६१॥

इत्युक्तप्रकारेण अनीकिन्याः सेनाया नायकरत्नस्य सेनापतेः सायके बाणेन प्रभिन्नस्य हतस्य लक्षस्य लक्षसङ्ख्यकवलस्य वेध्यस्य वा--"वेध्यं तु लक्षं लक्ष्यं" इति हैमः । विलोकनात् विलक्षतां विषादम् लक्षसङ्ख्याशून्यताञ्चाप्य अवशिष्टा अत्यल्पाः किरातवीरा मरुता वायुना कृत्वा पांशवो रजांसीव दिशः एकदिशातः दिशमपरां दिशं ययुः भयान्न क्वापि तस्थुरित्यर्थः ।२६१।

अतीत्येति—

अतीत्य ते भूमिमनेकयोजनामवाप्य चोच्छ्वासमलुप्तचेतनाः ।
विलज्जमाना मिलिताः परस्परं विमर्शमेतादृशमाशु चक्रिरे ॥२३२॥

ते शकवीराः अलुप्तचेतनाः जीवन्तः अनेकयोजनां भूमिमतीत्योल्लङ्घ्य पलायित्वा कियद्योजनानि गत्वेत्यर्थः । उच्छ्वासं साम्प्रतं न भयमित्येवमाश्वासमाप्य च विलज्जमाना. पराजयेन लज्जिता इव सन्तः मिलिता· एकत्रिताः सन्त परस्परमाशु एतादृशं वक्ष्यमाणप्रकारं विमर्शं चक्रिरे ॥२६२॥

तेषां विमर्शमेवाह-कुकर्मेति--

कुकर्मपरिपाकतः सुकृतसंक्षयोऽजायत, ध्रुवं सपदि नः परं, कथमुपैति चात्राऽन्यथा ।
तमिस्रभरकन्दरं गिरिमतीत्य वैताढ्यकं. पराक्रमनहानिधी रिपुरनेकसैन्योत्करः? ।२६३।

कुकर्मणां परिपाकतः उदयतः सपदि साम्प्रतम् नोऽस्माकम् परमत्यन्तं सुकृतस्य पुण्यस्य संक्षयोऽजायत, ध्रुवं नात्र संशय·, तत्र हेतुमाह—अन्यथा पुण्यसत्त्वे च तमिस्रभरा गाढान्धकारा कन्दरा यस्य तं तादृशं वैताढ्यकं गिरिमतीत्योल्लङ्घ्य अनेकसैन्योत्करः सैन्यसमूहोपचित. पराक्रमस्य महानिधिः महानाश्रयः रिपुः शत्रुः अत्रास्मद्देशे कथं केन प्रकारेणोपैति निकटीभवति यदि हि पुण्यं स्यान्नात्रागन्तुं प्रभवेदरि. पुण्यप्रभावेनैव स्वदेशे शत्रोरागमनं न जायत इति भाव. पराजयः पुण्यक्षयान्यथाऽनुपपन्न इति यावत् । २६३॥

मानान्धैरिति—

मानान्धैर्विदधे मृधं विगणनां निर्वास्य सर्वात्मनः,
प्राप्तोऽस्माभिरहो न चापि विजयो भूयान् निकारोऽर्जितः ।
खड्गप्रासक्षुरीशरासनशराभ्यासोऽभवद् निष्फल-
स्तस्माद् नो मरणं विहाय शरणं नैवास्ति किञ्चित् परम् ॥२६४॥

मानान्धैः मिथ्याभिमानमूढैरस्माभिः शकवीरैः सर्वात्मना सर्वथा विगणनां विचारं निर्वास्य त्यक्त्वा अविचार्यैवेत्यर्थ. मृधं युद्धं विदधे कृतम्—"मृध प्रहरणं संयत्रणौ विग्रह" इति हैमः" । अहो ! खेदे यत् विजयः नचापि नैव प्राप्त· प्रत्युत निकार पराजय एवार्जित प्राप्त खड्गानां प्रासानां कुंतानाम् छुरीणां शस्त्रीणां शरासनानां धनुषां शराणां बाणानाञ्चाभ्यास· निष्फल. कार्यासाधकत्वात् अकिञ्चित्करोऽभवत् । तस्मात्साधनवैगुण्यतः मरणं विहाय परमन्यत्किञ्चित शरणं रक्षको नैवास्ति ॥२६४॥

धिगिति

धिग् नः पौरुषमेतदस्तु सुभटमन्यात्मनां वर्णनां,
संप्राप्याऽस्तमियाय यच्च समये सूरोदये चन्द्रवत् ।

न श्लाघ्यं वत ! जीवितं परिभवे मानोत्तमानां नृणां ।
दृष्ट्वा योऽपि पराभवं स्थिरतरं तिष्ठेत मानः स किम् ? ॥२६५॥

नोऽस्माकं शकवीराणामेतदभिमन्यमानम् पौरुषं पराक्रमं धिगस्तु, समयेऽकिञ्चित्करत्वादिति भावः तदेवह यद्यतः सूरोदये सूर्योदयसमये चन्द्रवत् समये रणावसरे असुभटं सुभटमात्मानं मन्यन्ते इति तेषां नतु वस्तुतः सुभटानामस्माकम् यत्र पौरुषं वर्णनां प्रशंसां सम्प्राप्यास्तं नाशं चन्द्रपक्षेऽस्तगततां चेयाय प्राप बतेति--खेदे मानोत्तमानां मानिनां नृणां परिभवे पराजये, सति जीवितं श्लाघ्यं प्रशस्यं न, तत्र हेतुमाह पराभवं पराजयं दृष्ट्वाऽपि यो मानोऽभिमानः स्थिरतरं तिष्ठेत, स मानः किम् ? निरसार इत्यर्थः । मानी हि जये सति स्थिरः, पराजये तु नष्ट एवेति भावः ॥२६५॥

हुतेति—

हुताशनान्तर्विशनात्मघातनाऽद्रिसङ्गसंपातविषाऽशनादिभिः ।
म्रियामहे तद् रुचिरं चिरं भवेद् न पत्तिमात्रस्य पराभवे स्थितिः ॥२६६॥

हुताशनस्याग्नेरन्तर्विशनेनाग्निप्रवेशेन, आत्मना स्वयमेव घातनेन स्ववधेन अद्रिसङ्गसम्पातेन भृगुपतनेन विषस्याशनेन भक्षणेनेत्येवमादिभिः प्रकारैः कृत्वा म्रियामहे मृत्युं यामः, तद् रुचिरं वरम्, किन्तु पत्तिमात्रस्य सैन्यमात्रस्य पराभवे पराजये सति चिरं स्थितिर्जीवनं न भवेन्न प्रियमित्यर्थः ॥२६६॥

अथेति—

अथाऽस्ति दुर्वारविरोधिसाधने महानुपायो निरपायसंश्रयः ।
सदा समाराध्य कुलैकदेवता घनाघनाराधनसाधुसाधनम् ॥२६७॥

अथ पुनश्च दुर्वारस्य दुर्जयस्य विरोधिनः शत्रोः साधने प्रतीकारे सदा समाराध्यायाः सेव्यायाः कुलस्य स्वगोत्रस्य एका अद्वितीया देवताः एव घनाघनजलमुचां मेघकुमाराणां आराधनरूपं साधूत्तमं साधनमेव निरपायः निरुपद्रवः संश्रयः आश्रयणं यस्य तादृशः निर्दोषः महान् कार्यसाधक उपायस्तद्रूपोऽस्ति कुलदेवताप्रसादनमेव शत्रुप्रतीकारोपाय इत्यर्थः ॥२६७॥

पर्येति—

पर्यालोच्येति सर्वे सविधमुपगता रोधसः सिन्धुसिन्धो-
र्नग्नत्वोत्तानशायिव्रतविधृतिपरास्तस्थुरेकाग्रचित्ताः ।
तुष्टास्तद्गोत्रदेव्यः सपदि जलमुचोऽथाष्टमान्ते समेयु-
र्यद्वा नो दुष्करं स्यात् किमपि च तपसां भावनाभावितानाम् ॥२६८॥

इत्युक्तप्रकारेण पर्यालोच्य विचार्य सर्वे शकवीराः सिन्धुसिन्धोः सिन्धुनद्याः रोधसस्तीरस्य सविधम् समीपमुपगताः सन्तः एकाग्रचित्ताः स्वकुलदेवताऽऽराधनमात्रलग्नचित्ताः नग्नत्वस्य दिगम्बरत्वस्य उत्तानशायिनश्च व्रतस्य धारणपरायणाः सन्तस्तस्थुः शकानां कुलदेवतासाधने तथैवोपचारादिति भावः । अथानन्तरमष्टमस्य व्रतस्यान्ते तुष्टाः तदाराधनप्रसन्नाः–'स्तद्गोत्रदेव्यः तेषां शकानां कुलदेवताः तद्रूपा जलमुचः मेघकुमाराः देवास्सन्ति, सपदि तत्कालमेव समेयुः आगच्छन्ति स्म व्रतेन देवतास्तुष्यन्तेवेत्याह–यद्वा यतः तपसां भावनया भावितानां तपोनिष्ठमनसाम् किमपि च देवताप्रसादनादि दुष्करम् दुःसाध्यं नो नैव स्यात्, तपसा सर्वमेव सिद्ध्यतीति भावः ॥२६८॥

देवा इति–

**देवा मेघमुखा दिवि स्थितिभृतः प्रोचुः किरातानिदं,**
**वत्साः ! सेवनवत्सलाः स्थलमृते किं कारणं नः स्मृतौ ? ।**
**ते बद्धाञ्जलयः प्रणम्रशिरसस्तानेवमावेदयन्,**
**वैताढ्याद्रिमतीत्य कश्चन महाधामा समागादिह ॥२६९॥**

मेघमुखाः देवाः युध्वा तु स्थलं भूमिमृते विहाय दिवि आकाशे स्थितिभृतः स्थिताः संतः देवानामभूमिस्पृक्त्वादिति भावः । किरातान् शकानिदं प्रोचुः, इदमिति किमित्याह–सेवने वत्सलाः प्रीतिमन्तः ? वत्साः ! नः अस्माकं स्वेष्टदेवतानां स्मृतौ व्रताराधनादिना स्मरणे किं कारणम् ? तद्वदतेत्यर्थः ते शकाः बद्धाञ्जलयः प्रणम्रशिरसश्च सन्तः तान् देवान् प्रति एवमावेदयन्, एवमिति किमित्याह–कश्चनाज्ञातनामगोत्रादिः महाधामाऽतितेजस्वी वैताढ्याद्रिमतीत्योल्लङ्घ्येह मन्मण्डले समागात् ॥२६९॥

ततः किमित्याह–अनेकेति–

**अनेकपस्येव महामहीरुहान् समूलमुन्मूलयतः किरातकान् ।**
**तदीयपत्तेर्वयमुद्धृताः परं कथञ्चनाऽपि प्रबलस्य देवताः ॥२७०॥**

देवताः ! महामहीरुहान् विशालवृक्षान् अनेकपस्य गजस्येव–"गज–द्वीप–कर्यनेकपाः"- इति हैमः–" किरातकान् शकानस्मान् समूलमुन्मूलयतो नाशयतः परमत्यन्तं प्रबलस्य बलवतः तदीयपत्तेः तत्सैन्यस्य सतः वयम् कथञ्चनाऽपि महता कष्टेन पलायनादिना उद्धृताः अवशिष्टाः स्म ॥२७०॥

ननु तत्रास्माभिर्देवैः किं करणीयमितिचेत्तत्राह प्रसद्येति–

**प्रसद्य तद् रक्षत सद्य एव नः स्वसेवकान् दीनमुखान् कृतार्थनान् ।**
**पराभवात् पान्ति निजाश्रितं न ये बलेन तेषां प्रबलेन किं श्रिया ? ॥२७१॥**

तत्ततो हेतोः सद्य एव प्रसद्य प्रसन्ना भूत्वा कृतार्थनान् विहितप्रार्थनान् दीन-मुखान् दीनान् स्वसेवकान् नः शकान् रक्षत यथा न तेन विनाशिताः स्यामेति यावत्। उचितं चैतद्युष्माकमित्याह ये बलिनः पराभवादापदः निजाश्रितं न पान्ति, तेषां प्रबलेनात्युत्कृष्टेन बलेन पराक्रमेण श्रिया ऐश्वर्येण च किम्। निरर्थकमेव तत्सर्वम्, बलादेः आश्रितरक्षणा-दिरेवोपभोग इत्यर्थः ॥२७१॥

निशम्येति—

निशम्य विज्ञप्तिमिमां तदीरितामुदाहरन् मेघमुखा दिवौकसः।
यदङ्घ्रिपूजाप्रवणा विडौजसो न कोऽपि तत्राऽपकृतिक्रियाक्षमः ॥१७२॥

तैः शकैरीरितां कथितामिमामुक्तप्रकारां विज्ञप्तिं निशम्य मेघमुखाः तन्नामानो दिवौ-कसो देवा उदाहरन् जगुः, किमित्याह विडौजसः शक्रा अपि यस्य अङ्घ्रयोश्चरणयोः पूजायां प्रवणाः तत्पराः तत्र तस्मिन् जने कोऽपि देवादिरपि अपकृतिक्रियायां प्रतीकारचेष्टायां क्षमो योग्यो न नैवास्ति ॥२७२॥

तथापीति—

तथापि युष्मत्कुलदेवता वयं भवत्समाराधनतोषिताशयाः।
अमुष्य विघ्नाचरणेन निश्चितं प्रकुर्महेऽरं भवतां समीहितम् ॥२७३॥

तथापि तत्प्रतिकारासामर्थ्येऽपि युष्माकम् कुलदेवताः वयम् भवतां समाराधनेन कृत्वा तोषिताशयाः प्रसन्नाश्च, अतः अमुष्य भवद्वैरिणः विघ्नाचरणेनापकारकरणेन कृत्वा भवतां समीहितम्, इष्टमरं शीघ्रं निश्चितं यथास्यात्तथा प्रकुर्महे, देवो हि तुष्टः यथाकथञ्चिदपि समीहितं करोत्येवेति भावः ॥२७३॥

इतीति—

इति प्रपन्ने सति तैः पदानतैः पयोदवृन्दं गगने विकृत्यते।
पयोददेवाः किल चक्रवर्तिनस्तदैव सैन्योपरि वृष्टिमादधुः ॥२७४॥

इत्युक्तप्रकारेण पदानतैः कृतप्रणामैः तैः शकैः प्रपन्ने स्वीकृते सति ते पयोददेवाः मेघमुखा नागकुमारा देवाः तदा एव, किलेत्यैतिह्ये, गगने पयोदवृन्दं मेघसमूहं विकृत्य विकुर्व्य चक्रवर्तिनः शान्तेः सैन्यानामुपरि वृष्टिमादधुश्चक्रुः ॥२७४॥

**ननु स्वस्य तत्प्रतीकारासामर्थ्यं जानन्तोऽपि विकुर्वणां कृतवन्तो (कुर्वन्ति स्म) किमिति विरूपं चेष्टितवन्तो देवा इतिचेत्तत्राह जिनेन्द्रेति—**

जिनेन्द्रमाहात्म्यमनन्तमद्भुतम्, सुरैर्विजानद्भिरपि स्वरूपतः।
जलानि वर्षद्भिरनेकशस्तदा, जडाशयत्वं प्रकटीकृतं न किम्? ॥२७५॥

सुरैः देवैः मेघकुमारैः स्वरूपतः याथातथ्येनानन्तमद्भुतमलौकिकञ्च जिनेन्द्रस्य शान्तिजिनस्य माहात्म्यं सामर्थ्यं विजानद्भिरपि सद्भिः अनेकशः बहुशः जलानि वर्षद्भिः तदा तस्मिन् काले जडाशयत्वं मन्दबुद्धित्वं प्रकटीकृतं किं न, अपि त्ववश्यमेव प्रकटीकृतम्, स्वासामर्थ्यं जानन्नपि जडं विहाय नान्यः कोऽपि प्रवर्तते किञ्च मेघानां डलयोरैक्याज्जलाशयत्वमुचितमेवेति भावः ॥२७५॥

सैन्येति—

सैन्यप्लावनवासनाव्यवसितं पूरं समीक्ष्याऽम्भसां,
पुंरत्नेन करेण सत्त्वकरुणापाथोजिनीभानुना।
स्पृष्टं द्वादशयोजनानि ववृधे चर्माख्यरत्नं तदा,
श्लाघ्यः किं न महात्मनां हि महिमा विश्वत्रयोद्द्योतकः? ॥२७६॥

अम्भसां देववृष्टानां जलानां पूरं प्रवाहं सैन्यानां प्लावनस्य जलमग्नकरणस्य वासनयेच्छया व्यवसितं प्रवृत्तं समीक्ष्य सत्त्वेषु प्राणिषु करुणैव पाथोजिनी कमलसमूहस्तस्य (कमलिनी तस्याः) भानुना विकासकत्वाद्रक्षकत्वाच्च सूर्यतुल्येन पुंरत्नेन पुरुषोत्तमेन शान्तिजिनेन करेण स्वहस्तेन कृत्वा तदा पूरागमनसमये स्पृष्टम् कृतस्पर्शम् चर्माख्यरत्नं चर्मरत्नं द्वादशयोजनानि यावद्ववृधे प्रस्तीर्णम्, एवम्भवने च तन्महिमैवाधिकृत इत्याह–हि यतः महात्मनां शान्तिनाथचक्रवर्तिसदृशानां पुरुषोत्तमानां विश्वत्रयस्योद्द्योतकः प्रकाशको महिमा श्लाघ्यः प्रशस्यो लोकातिशायी किं न, अपि तु लोकातिशाय्येव महात्मनो महिमाऽचिन्त्यप्रभाव इति यावत् ।२७६।

तत्रेति—

तत्रारुरोह चतुरङ्गसमग्रसैन्यं, शान्तिप्रभोः समधिगम्य नियोगमाशु।
तद् वारिपूरमुपरि स्थितिमाततान, यत् तर्क्यते प्रवहणं वरुणोपनीतम् ।२७७।

तत्र चतुरङ्गात्मकं हस्त्यश्वरथपदातिरूपं समग्रं सर्वमेव सैन्यमाशु शान्तिप्रभोः नियोगमादेशं समधिगम्य प्राप्य आरुरोह तच्चर्मरत्नञ्च वारिपूरमुपरिजलप्रवाहोपरि स्थितिमाततान स्थितम्, यच्चर्मरत्नम् वरुणेन जलदेवेनोपनीतमुपहृतं प्रवहणं नौः तर्क्यते, मन्यते वरुणोपहृतपोतवत्तद्भमासे इत्यर्थः ॥२७७॥

द्वादशेति—

द्वादशप्रमितयोजनायतिच्छत्ररत्नमपि चर्मरत्नवत्।
स्पृष्टमात्रमथ चक्रिपाणिना सैन्यचक्रमुपरि स्थितं स्थिरम् ॥२७८॥

एवमधःस्थितजलाद्रक्षणमभिधाय वृष्टे रक्षणमाह–अथानन्तरम् चक्रिपाणिना शान्तिजिनेन चक्रवर्तिहस्तेन चर्मरत्नवत्स्पृष्टमात्रमेव स्पर्शनत एव छत्ररत्नमपि द्वादशप्रमितानि योजनानि याव-

दायति विस्तृतं सत् सैन्यचक्रमुपरि सैन्यसमूहस्योपरिष्टात् स्थिरं यथास्यात्तथा स्थितम् यथा न वृष्टिः सैन्योपरि निपतेदिति भावः ॥२७८॥

मयीति—

मयि प्रभौ जाग्रति मा बहिष्टनं, तमोऽपि बाधिष्ट जनं कदाचन।
इतीव चक्री मणिरत्नमुन्नताऽऽतपत्रदण्डोपरि तत्क्षणं दधौ ॥२७९॥

मयि शान्तिजिने प्रभौ जाग्रति रक्षोद्यते सति जनं सैन्यं बहिष्टनं बाह्यं तमोऽन्धकारोऽपि कदाचनापि मा बाधिष्ट पीडयतु इति बुद्धया इव चक्री शान्तिजिनः तत्क्षणम् उन्नतस्यातपत्रस्य छत्रस्य दण्डस्योपरि मणिरत्नं दधौ यथा तत्प्रकाशेन तमोनाशो जायतामिति भावः ॥२७९॥

अथ तदाहारसम्पत्तिमाह गेहेति—

गेहरत्नकरणेन रसोप्ताः शालयो दिनमुखे सति तत्र।
घस्र एव फलिता गलितार्धे सैनिकैर्बुभुजिरे प्रतिघस्रम् ॥२८०॥

गेहरत्नस्य करणेन दिव्यभोजनापादनक्षमेण गृहिरत्नविधानेन कृत्वा तत्र चर्मरत्ने दिनमुखे प्रभाते सति शालयः व्रीहयः—तदुपलक्षितसर्वजातीयधान्यसमस्तस्वादुसहकारादिफलसकलशाकविशेषाश्च—रसायां पृथिव्यामिवोप्ताः क्षिप्ताः सन्तः गलितार्धे व्यतीतार्धे घस्रे दिने एव तस्मिन्नेव गतार्द्धे दिवसे फलिताः फलसम्प्रयुक्ताः सैनिकैः प्रतिघस्रं प्रतिदिनं बुभुजिरे भोजयन्ति स्म भक्षिताः, एवञ्च न तेषां भोजनकष्टमभ्यमूञ्जिनमाहात्म्यादिति भावः। चर्मरत्ने च सुक्षेत्रइवोप्तानि दिवामुखे। सायं भोज्यान्यजायन्त, गृहिरत्नप्रभावतः।१। इति प्रथमपर्वण्युक्तम् ॥२८०॥

वारीति—

वारिपूरतरदद्भुतचर्म-रत्नमध्यमधिशय्य ससैन्यः।
वासरान् गमयति स्म स सप्त, तारयन्निव जनं भवसिन्धोः ॥२८१॥

स शान्तिजिनः ससैन्यः सैन्यसहित एव वारिपूरे जलौघे तरतः उपरि स्थितवतः—प्रासादमध्ये स्वस्थस्थित इव स्थित्वा, अद्भुतस्यालौकिकस्य चर्मरत्नस्य मध्यमधिशय्याश्रित्य भवसिन्धोः जनं तारयन् पारं गमयन्निव सप्त वासरान् गमयति व्यत्याययति स्म ॥२८१॥

तत इति—

ततो भ्रुकुटिभीषणा विधृतहेतयो यक्षकाः
सुरानिदमवादिषुः प्रभुजुषो व्रजित्वा द्रुतम्।
अरे! घनकुमारकाः किमिदमात्मबोधे जड़ा!
भवद्भिरसुरैरिव व्यवसितं प्रभावच्युते? ॥२८२॥

ततः शान्तौ चर्मरत्ने स्थितवति सति भ्रकुटिभिः भ्रुवां रोषजनितैः कौटिल्यैः कृत्वा भीषणा भयङ्करा विधृतहेतयः गृहीतायुधाः प्रभुजुषः शान्तिजिनसेविनः यक्षका यक्षाः द्रुतं अजित्वा गत्वा सुरान् मेघकुमारान् इदमवादिषु', इदमिति किमित्याह–अरे ! आत्मबोधे स्वरूपपरिचये जडा अल्पधियः घनकुमारका' मेघकुमारकाः कुत्सिता मेघकुमाराः भवद्भिरसुरैरिवानुचिताचरणपरायणैः इदम् जिनापकाररूपम् प्रभावच्युते प्रभावरहिते सति यद्वा निमित्तसप्तमी स्वमहत्वनाशनिमित्तं–इदम् स्वमहत्वनाशाय व्यवसितम् कृत किम् ? जिनापराधे भजतां प्रभावच्युतिः सम्भाव्यते इत्यर्थः ॥२८२॥

विधीति—

**विधीयमानादुरनर्थकारणं, महात्मभिः सार्धमहो ! विरोधिता।**
**तथाहि पक्षक्षतिमापिरेऽद्रयो, महाविरोधेन हरेः प्रवादिवत् ॥२८३॥**

बलवद्विरोधिता दुरन्तेत्याह अहो ! इति खेदे, महात्मभिः उत्तमैः सार्धं विधीयमाना विरोधिता विरोधः दुष्टस्यानर्थस्य कारणमस्ति, तत्र दृष्टान्तमाह–तथाहि यथा हरेरिन्द्रस्य महता विरोधेन विद्वेषेण अद्रय' पर्वताः प्रवादिवत् वादे पूर्वपक्षिवत् पक्षाणां पतत्राणाम् अथ च स्व-स्वीकृतसिद्धान्तानां क्षतिं खण्डनमापिरे प्राप्ताः, पुरा पर्वताः सपक्षा आसन्, इन्द्रेण हि स्वविरोधात्तेषां पक्षाच्छिन्ना इति पौराणिकाः ॥२८३॥

शान्तेर्महत्त्वमेवाह वहन्तीति—

**वहन्ति मालामिव यस्य शासनं निजेन मूर्ध्नाऽखिलपाकशासनाः।**
**अनन्तवीर्यप्रचयेन चक्रिणा, सुधीर्विरोधं विदधाति तेन कः ? ॥२८४॥**

यस्य शान्तिचक्रिणः शासनमाज्ञाम् अखिलाः पाकशासनाः शक्राः निजेन स्वीयेन मूर्ध्ना मस्तकेन मालामिव प्रीत्या वहन्ति स्वीकुर्वन्ति, तेन अनन्तानां वीर्याणां सामर्थ्याणां प्रचयेन–अनन्तानि च वीर्याणि अनन्तवीर्याणि तेषां प्रचयः समूहो यस्य तेन शारीररूपेण चक्रिणा शान्तिचक्रिणा कः सुधीः धीमान् विरोध विदधाति ? न कोऽपि, किन्तु भवादृशा मूर्खा एवेत्यर्थः ॥२८४॥

वयमिति—

**वयं न मन्तुं भवतामतः परं, सुराः सहिष्यामह एव भासुराः।**
**इतीरितास्तैः समहार्षुराविला, बलाहकानां पटलं तदैव ते ॥२८५॥**

सुराः ! मेघकुमाराः ! अत' चेतवाणीतः परं पश्चात् भासुराः तेजस्विनो वयं यक्षा' भवतां मेघकुमाराणां मन्तुमपराधं "–आगोऽपराधो मन्तुश्चे" त्यमर' । नैव सहिष्यामहे, किन्तु प्रतिकरिष्याम', तै' यक्षै' इत्युक्तप्रकारेण ईरिताः कथितास्ते मेघकुमाराः आविलाः भयाद्विह्वलाः सन्तः तदैव बलाहकाना मेघानां पटलं समूहवैकुर्विकं समहार्षु' संहरन्ति स्म ॥२८५॥

सार्वेति—

सार्वभौमपरभागवर्णनाकौमुदीप्रकटनेन ते ततः ।
म्लेच्छमानसनिवासनिश्चलं मानतापमपनिन्युरञ्जसा ॥२८६॥

ततो विकुर्वणा संहरणानन्तरम्, ते मेघकुमाराः सार्वभौमस्य सर्वभूमेरीश्वरस्य चक्रिणः शान्तेः परभागस्य गुणोत्कर्षस्य "परभागो गुणोत्कर्ष इति हैमः" वर्णनायाः स्तुतिरूपायाः कौमुद्याः चन्द्रिकायाः प्रकटनेन कृत्वा म्लेच्छे मलिने मानसे निवासेन स्थित्वा निश्चलं स्थिरं मानमहङ्काररूपं तापं घर्ममञ्जसा स्वल्पश्रमेणैवापनिन्युरपाकुर्युः,कौमुद्युदये हि तापनाश उचित एव, सुरास्तं विगर्वाः सन्तः तुष्टुवुरित्यर्थः ॥२८६॥

अथो इति—

अथो किराता मणिकाञ्चनोत्करै-रनर्घ्यचित्राभरणैरपि प्रभुम् ।
भृशं लुठन्तः पदपद्मयोः पुरो वितेनिरे प्रीतमरीणभक्तयः ॥२८७॥

अथो-अनन्तरम् किराताः शकाः अरीणा अशून्या पूर्णा भक्तिर्येषां तादृशाः सन्तः पदपद्मयोः शान्तिचरणकमलयोः पुरः अग्रतः भृशमतिशयेन लुठन्तः प्रणमन्तः प्रीतं स्तवनन-मनादिभिः प्रसन्नं प्रभुं शान्तिचक्रिणं मणीनां काञ्चनानाञ्चोत्करैः राशिभिः अनर्घ्यैः चित्रैर्बहुविधै-राभरणैरपि च वितेनिरे सिषेविरे ॥२८७॥

समिति—

संमान्यैतानुपहृतनयः पृष्ठहस्तप्रदाना-
च्चक्री सेनापरिवृढमहारत्नसंप्रेषणेन ।
लोकान् पुत्रानिव विगणयन् साधयामास सिन्धो-
रौदिच्यं श्रीगृहमविकटं स्वौजसा निष्कुटं तम् ॥२८८॥

उपहृतनयः पुरस्कृतनीतिः राजनीतिज्ञ इत्यर्थः, चक्री शान्तिजिनः पृष्ठे हस्तस्य प्रदानादा-रोपणात्, एतान् किरातान् सम्मान्य सत्कृत्य सेनापरिवृढेषु सेनापरिवृढस्य सेनानायकस्य सेनापतेः सेनापतिषु महारत्नस्य तद्रूपस्योत्तमस्य तद्रूपमहारत्नस्य सप्रेषणेन "नायको नेता प्रभुः परिवृढो-ऽपि च" इत्यमरः तद्रूपस्योत्तमस्य सेनापतेः संप्रेषणेन कृत्वा लोकान् किरातप्रजाः पुत्रानिव विगणयन् मन्यमानः सन् अविकटम्—अविकटं यथास्यात्तथा श्रीगृहं लक्ष्मीगृहरूपं धनसम्पन्नम् तम् सिन्धोस्तदाख्यनद्याः औदीच्यमुत्तरस्थं निष्कुटं स्वस्य ओजसा प्रतापेन साधयामास वशीकृतवान् ॥२८८॥

पतमिति—

एतं क्षुद्रहिमाद्रिनामकगिरिं कुर्वन्तमभ्रापगा-
सिन्ध्वोरन्तरमाकुलं कलकलैः सेनासमूहोद्भवैः ।

रत्नैः पद्मनदाम्बुभिर्विभुमसौ गोशीर्षकैश्चन्दनैः,
संतुष्टो हिमवत्कुमार उरुधीरभ्यर्चयामासिवान् ॥२८९॥

एवमुक्तप्रकारेण ऋम्वापगासिन्ध्वोः गङ्गायाः सुरनिम्नगा गङ्गात्यर्थः तस्याः सिन्धोश्चान्तरम् मध्यस्थम् क्षुद्रहिमाद्रिनामकगिरिम् सेनासमूहोद्भवैः कलकलैः कोलाहलैः आकुलं व्याप्तं कुर्वन्तम्, ससैन्यं तत्र गतमिति यावत् विभुं शान्तिनाथम् उरुधीः विशालबुद्धिः सन्तुष्टः असौ हिमवत्कुमारः पद्मनदस्य हिमाद्रिस्थितपद्मनदस्याम्बुभिर्जलैः गोशीर्षकैः चन्दनैः गोरोचनाद्यैः रत्नैश्चाभ्यर्चयामास ॥२८९॥

स्वामीति—

स्वामी जवादृषभकूटमहामहीध्रं, गत्वैव काकिणिमणिं परिगृह्य धीरः ।
शान्तिश्चिरं जयति पञ्चमचक्रवर्ती-त्येतल्लिलेख स निजेन करेण वर्णान् ॥२९०॥

धीरः स स्वामी शान्तिचक्री जवाद्वेगादृषभकूटे तदाख्ये महति महीध्रे पर्वते गत्वा काकिणिनामधेयं मणिं परिगृह्य निजेन करेणैव पञ्चमचक्रवर्ती शान्तिश्चिरं जयतीत्येतान् वर्णान् लिलेख ऋषभकूटे एवेति प्रत्यासत्त्या लभ्यते ॥२९०॥

विस्मेति—

विस्माययन् सकलसैनिकमानसानि भास्वत्प्रतापकलितेन पराक्रमेण ।
भूमीभृतः प्रतिनिवृत्य रथस्थ एव वैताढ्यमाप पुनरेष ततः क्रमेण ॥२९१॥

ततः एष शान्तिचक्री भूमीभृतः ऋषभकूटपर्वतात्प्रतिनिवृत्य भास्वता तपता प्रतापेन कलितेन सहितेन पराक्रमेण सकलानां सैनिकानां मानसानि विस्माययन् विस्मितानि कुर्वन् रथस्थो रथारूढ एव पुनः वैताढ्यमाप प्राप ॥२९२॥

तत्रेति—

तत्र प्रमोदपरिपूरितचित्तवृत्तिविद्याधराधिपतिभिः स्वयमभ्युपेतम् ।
संपूज्य चैनममराचलचूलिकायां वैताढ्यभूमिभृदमानि समुच्चसानुः ॥२९२॥

तत्र वैताढ्ये स्वयमभ्युपेतमागतमेनं शान्तिचक्रिणममराचलस्य सुमेरोश्चूलिकायां शिखरे सम्पूज्य प्रमोदेन परिपूरितचित्तवृत्तिभिः विद्याधराधिपतिभिः वैताढ्यभूमिभृत् वैताढ्यपर्वतः समुच्चं सानु प्रस्थो यस्य स तादृशोऽमानि मन्यते स्म, स्वयमुच्चो वैताढ्यसानुः शान्तिसङ्गेन समुच्चोऽमानीत्यर्थः । एतदेव समुच्चत्वं यन्महात्मसमागम इति भावः ॥२९२॥

चक्रीति—

चक्री गङ्गातटमुपगतः सेवितो भक्तिपूर्वं,
गङ्गादेव्या विरचितमहाप्राभृतप्राज्यभङ्ग्या ।

सेनान्याऽथ प्रथितयशसाऽसाधयत् साधुधाम्ना,
गाङ्गं रङ्गद्भटपरिवृतो निष्कुटं चोत्तरं सः ॥२९३॥

गङ्गायास्तटमुपगतः चक्री शान्तिनामा गङ्गादेव्या विरचित उपहृतो यो महाप्राभृतः विशिष्टोपहारः तद्रूपा प्राज्या प्रचुरा भङ्गी विधिर्यथाविधिस्तया कृत्वा तथा सत्या भक्तिपूर्वं सेवितः पूजितः अथानन्तरम् रङ्गद्भिः अनुरक्तैः भटैः परिवृतः स शान्तिः साधुधाम्ना महौजसा प्रथितयशसा ख्यातकीर्तिना सेनान्या सेनापतिना कृत्वा गाङ्गम् गङ्गाया उत्तरं निष्कुटं देशमसाधयद्वशीकृतवाँश्च ॥२९३॥

श्रीति—

श्रीशान्तिप्रभुरोजसामधिनिधिः खण्डप्रपाताभिध-
दर्यां नायकनाट्यमालममरं कृत्वा वशे स्वस्य च ।
सेनान्याऽतिविभासिदण्डमणिनोद्घाट्याऽविशत् तां गुहां,
तेजोऽस्त्यर्यम चक्ररत्नमनु यान् न्यायं नृणां दर्शयन् ॥२९४॥

ओजसामधिनिधिः तेजोनिधिः श्रीशान्तिप्रभुः खण्डप्रतापाभिधाया दर्यां गुहाया नायकं पतिं नाट्यमालं तदाख्यममरं सुरं स्वस्य वशे कृत्वा च अतिविभासी महातेजस्वी दण्डमणिः दण्डरत्नं तेन कृत्वा सेनान्या—(सेनापतिद्वारा अतिविभासी महातेजस्वी यो दण्डमणिर्दण्डरत्नं तेन कृत्वा) सेनापतिना तां गुहामुद्घाट्य तेजसाऽतिक्रान्तोऽर्यमा सूर्यो येन तम् चक्ररत्नमनु पश्चाद् यान् गच्छन् नृणां न्यायं नीतिं दर्शयन् शिक्षयन् अविशत्प्रविष्टवान् ॥२९४॥

काकिणीति--

काकिणीमणिनिदानमण्डलैः संहरंस्तिमिरमण्डलं विभुः ।
तेजसा मणिभवेन पूर्ववत् संचचार स च तत्र कन्दरे ॥२९५॥

काकिणीमणिः निदानं मूलं येषां मण्डलानां एकोनपञ्चाशत्सङ्ख्यकैः कृत्वा विभुः स शान्तिः तिमिरमण्डलमन्धकारसमूहं संहरन् नाशयन् मणिभवेन मणिरत्नजेन तेजसा कृत्वा तत्र कन्दरे खण्डप्रपाताभिधे पूर्ववत् संचचार ॥२९५॥

उत्ततारेति—

उत्ततार तरसा स निमग्नोन्मग्ननामसरितौ सह सैन्यैः ।
पद्यया प्रथमयाऽप्यनवद्यः सर्वमेव महतां सुघटं यत् ॥२९६॥

स शान्तिरनवद्यः उत्तमः प्रथमया मुख्यया पद्यया रचितसेतुमार्गेण सैन्यैः सह तरसा वेगेन निमग्नोन्मग्नानाम्न्यौ सरितौ नद्यावुत्ततारोल्लङ्घयामास, ननु किमिति उत्तरणे विघ्नो न जात-इति चेत्तत्राह-यद्यतः महताम् पुरुषोत्तमानां सर्वं तरणादि सुघटमनुकूलस्थितं भवति ॥२९६॥

आत्मेति—

आत्मनोद्धटितदक्षिणलक्ष्मीद्वार एव निरगात् स गुहायाः ।
चन्द्रमा इव तमांसि निहन्ता पूर्वभूमिधरदीर्घगुहायाः ॥२९७॥

स शान्तिचक्री पूर्वभूमिधरस्योदयाचलस्य दीर्घाया गुहायास्तमांसि निहन्ता विनाशनशीलः चन्द्रमा इव गुहायाः खण्डप्रपातगुहायाः आत्मना स्वयमेव उद्घटितायाः निरर्गलतामापायाः दक्षिणस्याः लक्ष्मीद्वारः लक्ष्मीद्वारतः एव निरगात् निःसृतवान् ॥२९७॥

गङ्गेति—

गङ्गातीरनिवासिनः समभवन् नैसर्पमुख्याः प्रभो-
र्गङ्गाऽऽस्यस्थितिशालिनोऽपि निधयो वश्याः प्रसिद्धा नव ।
गाङ्गं दक्षिणनिष्कुटं स पृतनाधीशेन शिष्टिश्रिता,
म्लेच्छाकीर्णमसाधयद् बलवतां त्वेषां ततो दुर्जयम् ॥२९८॥

गङ्गातीरनिवासिनः नैसर्पमुख्याः नैसर्पादयः गङ्गाया आस्ये मुखे स्थितिशालिनः स्थिताः प्रसिद्धाः नव निधयः प्रभोः शान्तेः वश्या अधीनाः समभवन् जाताः । ततोऽनन्तरम् स शान्तिः शिष्टिश्रिता निदेशवर्त्तिना पृतनाधीशेन सेनापतिना कृत्वा त्वेषामन्येषां बलवतां दुर्जयम् जेतुमशक्यं म्लेच्छैराकीर्णं व्याप्तं दक्षिणं निष्कुटं देशमसाधयत् ॥२९८॥

षडिति—

षट्खण्डानि विभुर्विजित्य भरतस्यैवं प्रतापानल-
ज्वालाजालसमुच्चयेन सकलं प्लुष्ट्वाऽभिमानं द्विषाम् ।
व्यावृत्तः स्वपुरं विवेश विलसत्पौराङ्गनाभिर्मुदा,
लाजोत्क्षेपनिरुञ्छनेषु सरसं व्यातन्यमानेष्वयम् ॥२९९॥

विभुः शान्तिः एवमुक्तप्रकारेण भरतस्य तदाख्यक्षेत्रस्य षट्खण्डानि विजित्य स्ववशे कृत्वा प्रताप एवासह्यत्वादनलः तस्य ज्वालाजालानां समुच्चयेन राशिना द्विषां शत्रूणां सकलमभिमानं प्लुष्ट्वा दग्ध्वा शत्रुगर्वं खण्डयित्वेत्यर्थः निहत्येत्यर्थः व्यावृत्तः परावृत्तोऽयं शान्तिः विलसन्तीभिः शोभमानाभिः पौराङ्गनाभिः पौरस्त्रीभिः मुदा हर्षेण सरसं सानुरागं यथास्यात्तथा लाजानामुत्क्षेपेषु निरुञ्छनेषु च व्यातन्यमानेषु क्रियमाणेषु सत्सु स्वपुरं विवेश स्वपुरप्रवेशं कृतवान् ॥२९९॥

केतनैरिति—

केतनैः पवनचञ्चलभागैर्नागरैर्विनिहितैः प्रतिहट्टम् ।
तर्जयत् सुरपुरं यदि वाऽभात् सोऽविशद् गजपुरं तदधीशः ॥३००॥

अधीशः स्वामी स शान्तिः प्रतिहट्टं प्रतिविपणिश्रेणि नागरैः विनिहितैः स्थापितैः पवनेन कृत्वा चञ्चलभागैः चञ्चलैः केतनैः ध्वजैः कृत्वा सुरपुरं स्वर्गं तर्जयद्भर्त्सयदिवाभात् प्रतिभाति स्म, तद् हस्तिनापुरमविशत् प्रविवेश ॥२००॥

सुरेति—

सुरासुरैस्तस्य च चक्रवर्तिता-पदाभिषेको विधिवद् विनिर्ममे ।
नृपैः समं संमदपूर्णमानसै-रशेषतीर्थोपहृतैर्मृदम्बुभिः ॥३०१॥

सुरैरसुरैश्च नृपैः समं सह संमदेन पूर्णमानसैः सद्भिः अशेषेभ्यः सर्वेभ्यस्तीर्थेभ्य उपहृतै-रानीतैः मृद्भिरम्बुभिश्च विधिवद्यथाविधि तस्य शान्तेश्चक्रवर्तितापदस्याभिषेको विनिर्ममे चक्रे ॥३०१॥

समिति—

संवत्सरा द्वादश जग्मुरेषकां, भव्याभिषेकोत्सवमेव कुर्वताम् ।
आसीत् पुरं तावदमन्दसंमदं शुल्केन दण्डेन करेण चोज्झितम् ॥३०२॥

एषकामेषां सुरादीनाम् भव्यमुत्कृष्टमभिषेकस्योत्सवमेव कुर्वतां सताम् द्वादश संवत्सरा जग्मुर्व्यतीयुः तावत्तदवधि अमन्दसंमदमतिहर्षसङ्कुलं पुरं हस्तिनापुरं शुल्केन वस्तुनो मूल्येन जकात इति ख्यातेन राजग्राह्यभागेन वा दण्डेन अपराधस्य निग्रहेण करेण कर्षकादिभ्यो राज-ग्राह्यभागेन चोज्झितं रहितमासीत्, तावद्विना मूल्यमेव क्रय्यं वस्तु मिलति स्म, तथा दोषेऽपि सति न केऽपि दण्डिता भवन्ति स्म, कररहिताश्च प्रजा आसन्नित्यर्थः ॥३०२॥

यक्षाणामिति—

यक्षाणां समभूत् सहस्रयुगलं बद्धोद्यमानां प्रभो-
रङ्गानामवनस्थितौ निरुपमं सौन्दर्यमाक्रामताम् ।
रक्षाव्यापृतिलालसा नहि परे तस्य श्रुतास्तादृशः,
प्रोक्ता चक्रभृतः स्थितिः पुनरियं षट्खण्डभूमीशितुः ॥३०३॥

प्रभोः शान्तिचक्रिणः अङ्गानाम् अवनमेव स्थितिः तस्यां, रक्षणक्रियायामित्यर्थः बद्धो-द्यमानाम् उद्यमतत्पराणाम् निरुपममसाधारणं सौन्दर्यमाक्रामताम् प्राप्नुवताम् गच्छताम् अनुपम-सौन्दर्यशालिनां यक्षाणाम् सहस्रयुगलं समभूत्, सहस्रद्वयसङ्ख्यकाः अभिरूपाः यक्षाः शान्त्य-ङ्गरक्षका अभवन्नित्यर्थः । हि यतः तस्य शान्तिचक्रिणः तादृशः यक्षतुल्याः परे यक्षभिन्नाः रक्षाव्यापृतौ रक्षणक्रियायाम् लालसाः रागवन्तः न श्रुताः प्रसिद्धाः किन्तु यक्षा एव तादृशाः प्रसिद्धा इति भावः नन्वन्येषामप्येतादृशा अङ्गरक्षका भवन्ति किन्न भवन्ति ? किमिति चेत्तत्राह— इयमुक्तप्रकारा स्थितिः मर्यादा षण्णां खण्डानां भूमीशितुः चक्रभृतः पुनरेवार्थे चक्रिण एवेत्यर्थः प्रोक्ता नान्यस्येत्यर्थः ॥३०३॥

एकैकेनेति—

एकैकेन सहस्रकेण परितः प्रत्येकमाभासितै-
र्यक्षाणामधिपश्चतुर्दशभिराभाति स्म रत्नैर्विभुः ।
रागादेत्य सरस्वतीभिरचलाश्लेषं श्रिताभिर्मुहुः
पारावार इवाऽपरार्थविभवो मर्यादयाऽऽलम्बितः ॥३०४॥

अधिपश्चक्री विभुः शान्तिः परितः प्रत्येकम् यक्षाणामेकैकेन सहस्रकेण आभासितैः शोभमानैः चतुर्दशभिः रत्नैः कृत्वा आभाति शोभते स्म । प्रत्येकं रत्नं सहस्रेण यक्षेण रक्षितं तादृशैः प्रसिद्धैः चतुर्दशभी रत्नैः शान्तिः शोभते स्मेत्यर्थः । मुहुः पुनः रागात् गुणानुरागादेत्यागत्य सरस्वतीभिः चतुर्दशविद्याभिः अथ च नदीभिः, अचलं स्थिरमाश्लेषं संसर्गं श्रिताभिः आश्रिताभिः अथ च वेलातटाद्यवधिना, आलम्बितः सहितः, मर्यादापालकः, अथ च मर्यादाऽनुल्लङ्घकः इति चार्थः । न परोऽधिको यस्मात्तादृशोऽर्थविभवः वस्तुसमृद्धिर्यस्य स तादृगः, एकत्र चक्रित्वादन्यत्र रत्नाकरत्वाच्चेति भावः । अत एव, पारावार इव समुद्र इव, आभाति स्मेति सम्बध्यते, श्लेषमूलोपमा ॥३०४॥

निधिभिरिति—

निधिभिर्नवभिः समाश्रितः प्रभुरङ्गैरिव दृक्सुखावहैः ।
अथवा महतामुपासनाद् गुरुतां प्राप्तुमतन्द्रिता न के ? ॥३०५॥

प्रभुः शान्तिचक्री नवभिः नवसङ्ख्यकैः निधिभिः नैसर्पादिभिः दृक्सुखावहैः लोचनप्रियैः अङ्गैरिव समाश्रितोऽभवत्, ननु किमिति नवनिधय एनं शिश्रियुरिति चेत्तत्राह—अथवा यतः महतांमहात्मनामुपासनात्सेवां विधाय गुरुतां महत्त्वं प्राप्तुं के न अतन्द्रिता अनलसाः, सोद्योगा इति यावत्, अपि तु सर्व एव, स्वमहत्वलाभायैव निधय एनं महान्तं शिश्रियुरिति महामहिमा अयमिति भावः ॥३०५॥

अन्तरिति—

अन्तःपुराणां च सहस्रकैश्चतुःषष्ट्याऽऽश्रितः संश्रितकल्पपादपः ।
नागैर्हयैश्चापि रथैर्मदोद्धतैः कोटयाऽऽवृतः षोडशलक्षहीनया ॥३०६॥

संश्रितः कल्पपादपः कल्पवृक्षः यं स तादृशः कल्पवृक्षस्यापि सेव्यः, ततोऽप्यधिकशक्तिशालित्वादिति भावः, शान्तिचक्री. अन्तःपुराणामवरोधानाम् चतुष्षष्ट्या सहस्रकैः चतुष्षष्टिसहस्रपुरस्त्रीभिः आश्रितश्च, अभूदिति शेषः । तथा, मदोद्धतैः मत्तैः नागैः गजैः "मतङ्गजो गजो नाग" इत्यमरः । हयैरश्वैः रथैश्चापि षोडशलक्षहीनया षोडशलक्षन्यूनया कोट्या कोटिसङ्ख्यया, चतुरशीतिलक्षैरित्यर्थः, आवृत आसीत् ॥३०६॥

ग्रामा इति—

ग्रामाः षण्णवतिप्रमाः समभवन् कोटयः प्रभोः पत्तिवद्,
द्वात्रिंशच्च महीभुजामिव सहस्राणि ध्रुवं नीवृताम्।
सूदानां च शतत्रयं गुणवतां जज्ञे त्रिषष्ट्युत्तरं
तस्य श्रेणिपदप्रसिद्धिविभृतः प्रश्रेणयोऽष्टादश ॥३०७॥

तस्य प्रभोः शान्तिचक्रिणः षण्णवतिप्रमाः कोट्यः षण्णवतिकोटिप्रमाणा ग्रामाः करवन्तः समभवन् तथा पत्तिवत् सैनिकवन्निदेशाधीनानाम् महीभुजामिव निवृतां देशानाम्—'देशो जनपदो निवृदिति' हैमः; द्वात्रिंशद्सहस्राणि च ध्रुवमभवन् आज्ञावर्तिनां राज्ञां देशानाञ्च द्वात्रिंशत्सहस्राण्यभवन्नित्यर्थः। सूदानां गुणवतां त्रिषष्ट्युत्तरशतत्रयं जज्ञे अभूवन्। तथा प्रश्रेणयो—श्रेणिपदप्रसिद्धिं बिभ्रतीति तथा बिभ्रतोऽष्टादश समभवन्—अष्टादशश्रेणीश्चैवमाहुः—

" कुंभार १ पट्टइल्ला २ सुवण्णकारा ३ य सूवकारा ४ य।
गंधव्वा ५ कासवगा ६ मालाकारा ७ य कच्छकरा ८ ॥ ३७॥
तंबोलिया ९ य एए नवप्पयारा नारुआ भणिया।
अह णं णवप्पयारे कारुअवण्णे पवक्खामि ॥ ३८॥
चम्मयर १ जंतपीलग २ गंच्छिय ३ छिंपयग ४ कंसकारा य ५।
सीवग ६ गुआर ७ भिल्ला ८ धीवर ९ वण्णाइं अट्ठदस ॥ ३९॥ "
इत्युक्तं काललोकप्रकाशे एकत्रिंशत्सर्गे ॥ ३०७॥

अष्टेति—

अष्टादशाङ्कगुणिताब्धिसहस्रसंख्यान्यासन् प्रभोरनुपमानि महापुराणि।
द्रोणादिभूतपदकानि मुखानि लक्षं न्यूनं पुनर्भवति तद् दशभिः शतैश्च ॥३०८॥

प्रभोः शान्तेः अष्टादशरूपेणाङ्केन गुणितो योऽब्धिः चत्वारः द्वासप्ततिरिति यावत्, तावत्सहस्रसङ्ख्यानि महापुराणि आसन्, तथा, द्रोणः द्रोणशब्दः आदिभूतं पदं येषां तानि मुखानि द्रोणमुखानि लक्ष लक्षसङ्ख्यकं भवति, पुनः किन्तु तल्लक्षं दशभिः शतैः सहस्रेणेत्यर्थः, न्यूनं रहितं च नवनवतिसहस्राणीत्यर्थः ॥३०८॥

श्राद्धेति—

श्राद्धव्रतैर्गुणितवार्धिसहस्रकाणि नेतुर्बभूवुरपराण्यपि पत्तनानि।
तावन्ति कर्वटमडम्बकवाच्यनाम्नां संमीलितान्यपरिमेयसमृद्धिभाजाम् ॥३०९॥

नेतुः शान्तिचक्रिणः अपराण्यन्यान्यपि श्राद्धस्य श्रावकस्य व्रतैः गुणितो यो वार्धिः चतुःसङ्ख्या तावत्सहस्रकाणि अष्टाचत्वारिंशत्सहस्राणि बभूवुः तथा, अपरिमेयसमृद्धिभाजामग-

णितसम्पत्तिशालिनाम् कर्वटमडम्बकवाच्यानि नामानि येषां तेषां कर्वटानां मडम्बकानाञ्च तावन्ति पत्तनसमसङ्ख्याकानि अष्टचत्वारिंशत्सहस्रकाणि संमीलितानि बभूवुः ॥३०९॥

जाग्रदिति—

जाग्रत्प्रभाप्रसररत्नमुखाकराणां, स्वामी स्म पालयति विंशतिमासहस्रान् ।
विज्ञातशक्तिरपि षोडश खेटकानां, सम्बन्धकीर्तनभृतां च चतुर्दशाऽपि ॥३१०॥

विज्ञातशक्तिः प्रसिद्धसामर्थ्यः स्वामी शान्तिप्रभुः जाग्रतः भासमानाः प्रभाप्रसराः प्रभावविस्तारा येषां तादृशानाम् उज्ज्वलकान्तीनाम् रत्नं मुखं प्रधानं येषां तादृशानामाकराणाम् खनीनाम् रत्नाद्याकाराणाम् आसहस्रान् विंशतिं विंशतिसहस्राणि पालयति स्म तथा खेटकानां धूलिप्राकारोपेतानां षोडशसहस्रान् तथा सम्बन्धकीर्तनभृताम् चतुर्दशसहस्राँश्चापि पालयति स्म ॥३१०॥

षडिति—

षट्पञ्चाशतमन्तरोदकगिरां स्वामी शशास स्वयं,
राज्यानां कुलवासिनां पुनरयं चैकोनपञ्चाशतम् ।
षट्खण्डानि यथावदेव भरतस्यैवं प्रभुः पालयं-
श्चक्रित्वे गमयाम्बभूव समयं राज्याप्तिवत् भोगभृत् ॥३११॥

पुनस्तथा अयं स्वामी शान्तिचक्री स्वयमेव अन्तरोदकगिरां अन्तर्द्वीपानां षट्पञ्चाशतम्, कुलवासिनां राज्यानाञ्चैकोनपञ्चाशतम् शशास पालयामास, तथा, प्रभुः शान्तिः एवमुक्तप्रकारेण भरतस्य षट्खण्डानि यथावद्विधिवदेव पालयन् चक्रित्वे राज्याप्तिवत् राज्यप्राप्तिवत् भोगभृत् सुखमनुभवन् समयं पञ्चविंशतिसहस्रवर्षमितं गमयाम्बभूव व्यतीयाय ॥३११॥

ते इति—

ते लोकान्तिकनामविश्रुतिमिताः सारस्वताद्याः सुरा,
मत्वाऽथाऽऽसनकम्पतोऽवधिविदा दीक्षाक्षणं स्वामिनः ।
एत्य व्यज्ञपयन् प्रणम्य च विभुं सर्वीयमाज्ञापरा-
स्तीर्थं तीर्थपते ! प्रवर्तयतरामित्याश्रितप्रीतयः ॥३१२॥

अथ ते प्रसिद्धाः लोकान्तिकनाम्ना विश्रुतिं ख्यातिम् इताः गताः सारस्वताद्याः सुराः देवाः आसनस्य कम्पतः कम्पनात् अवधिविदाऽवधिज्ञानेन स्वामिनः शान्तेः दीक्षायाः क्षणं कालं मत्वा ज्ञात्वा एत्य सर्वीयं सर्वेभ्यो हितकरं विभुं शान्तिं प्रणम्य च आश्रितप्रीतयः प्रीताः सन्तः आज्ञापराः निदेशवर्तिनः तीर्थपते ! तीर्थं प्रवर्त्तयतरामितीत्थं व्यज्ञपयन् ॥३१२॥

सुरेष्विति

सुरेषु विज्ञप्य गतेषु तेष्वथ प्रदाय सांवत्सरिकीं तथांहतिम् ।
न्यधत्तचक्रायुधमादिमं सुतं महेन राज्ये जगतीपतिर्निजम् ॥३१३॥

अथ तेषु सुरेषु विज्ञप्य गतेषु सत्सु जगतीपतिः शान्तिः सांवत्सरिकीमंहतिं दानं 'दानमुत्सर्जनं त्यागः........निर्वपणमपवर्जनमंहतिः' इति हैमः । प्रदाय, तथा, आदिमं, ज्येष्ठं चक्रायुधं तदाख्यं निजं सुतम् महेनोत्सवपूर्वकं राज्ये न्यधत्त स्थापयामास ॥३१३॥

गीरिति—

गीर्वाणैरिन्द्रमुख्यैर्मनुजपरिवृढैश्चारु चक्रायुधाद्यै-
र्दीक्षास्नानं प्रकृत्याऽप्यमलतमतनुः कारितस्तीर्थतोयैः ।
श्रीश्रीखण्डैर्विलिप्तो वरमणिशिविकां रत्नसिंहासनाङ्कां,
सर्वार्थाख्यां समर्थः प्रतिघमुखरिपुच्छेदनेऽध्यारुरोह ॥३१४॥

इन्द्रमुख्यैः गीर्वाणैः देवैः चारुभिश्चक्रायुधाद्यैः मनुजपरिवृढैः नृपैश्च तीर्थतोयैः तीर्थजलैः दीक्षास्नानं दीक्षाऽभिषेकोत्सवं प्रकृत्य कारयित्वा अमलतमः अतिनिर्मलस्तनुः शरीरं यस्य स तादृशः कारितः तथा, श्रीश्रीखण्डैः शोभामानैः श्रीखण्डचन्दनैः विलिप्तोऽनुलिप्तः सन् समर्थः शक्तिसम्पन्नः शान्तिः प्रतिघमुखाः क्रोधादयो ये रिपवः आन्तरारयस्तेषां छेदने छेदननिमित्तम् रत्नसिंहासनाङ्काम् रत्नसिंहासनयुक्ताम् वरमणिश्रेष्ठमणियुक्तां सर्वार्थाख्यां शिविकामध्यारुरोह ॥३१४॥ ( वरा मणयोः यस्यां ताम् )

प्रथममिति—

प्रथममवहंस्तामानन्दाद् नरा बहुमानत-
स्तदनु विबुधाधीशाः सादिक्रमेण यथाक्रमम् ।
त्रिदिवसदना दैत्यास्तार्क्ष्या भुजङ्गकुमारका,
न हि विदधते सन्तः केऽपि क्रमव्यतिलङ्घनम् ॥३१५॥

सादिक्रमेण प्रथममादिः तदनु द्वितीय इत्येवंक्रमेण यथाक्रमम् क्रममनुल्लङ्घ्य तां शिबिकाम् प्रथमं प्राक् बहुमानतः मानपूर्वकम् आनन्दान्नतु बलात् नरा अवहन् तदनु तत्पश्चाद्विबुधाधीशाः, ततः त्रिदिवसदना देवा, दैत्याः तार्क्ष्याः भुजङ्गकुमारकाः एते सर्वे यथाक्रमं शिबिकामवहन्, ननु किमिति क्रमश एवावहन्निति चेत्तत्राह—हि यतः सन्तः केऽपि क्रमस्य व्यतिलङ्घनं व्यतिक्रमं न विदधते कुर्वते क्रमत्यागोऽसन्ननाचार इति भावः ॥३१५॥

प्रभुः शान्तिः जगत्त्रयस्यापि वर्णिनीः स्त्रियोऽपहाय त्यक्त्वा यां सिद्धिवर्णिनीं परिणेतुं वशी-कर्तुमुद्यतः प्रवृत्तः ॥३२०॥

अपक्षेति—

अपक्षपातित्वविशेषदर्शनात्, प्रभुत्वमेतस्य सखि ! प्रशस्यते ।
नरेन्द्रचक्रित्वरमाङ्गभोगवद् व्रतश्रियं यः परिरप्स्यते प्रभुः ॥३२१॥

सखि ! अपक्षपातित्वविशेषस्य एक आग्रहातिशयाभावस्य दर्शनात् एतस्य शान्तिप्रभोः प्रभुत्वं प्रशस्यते श्लाघ्यम्,तदेव हि प्रभुत्वं यन्न पक्षपातीति भावः । अपक्षपातित्वमेवाह—यः प्रभुः शान्तिः नरेन्द्रस्य चक्रित्वस्य च रमाया लक्ष्म्या अङ्गस्य स्रक्चन्दनादेर्भोगवत् अनुभववत्, व्रतस्य श्रियं लक्ष्मीं परिरप्स्यते आश्रययिष्यते, राज्यव्रतश्रियोः समभावोऽयमिति भावः ॥३२१॥

इतीति—

इतीदृशीः पौरमृगीदृशां कथा, नयन् श्रुतौ श्रोत्रसुखाः सुखाश्रयः ।
सदाफलैः शाखिभिराकुलं विभुर्वनं सहस्राम्रवणं समासदत् ॥३२२॥
(षड्भिः कुलकम्)

पौरमृगीदृशां पुरस्त्रीणामितीदृशीरुक्तप्रकाराः श्रोत्रसुखाः कर्णप्रियाः कथाः वार्त्तालापाः श्रुतौ नयन् शृण्वन् सुखाश्रयः आत्मानन्दमग्नः विभुः शान्तिप्रभुः सदाफलैः सर्वदा फलवद्भिः शाखिभिः वृक्षैः आकुलं पूर्णं सहस्राम्रवणं तदाख्यं वनं समासदत्प्राप ॥३२२॥

भाते इति—

भाते गायदिवोरुकोकिलकुलैर्यत् पञ्चमोद्गारिभि-
र्वातान्दोलितवल्लरीचलदलैर्नृत्यत् प्रमोदादिव ।
मल्लीपुष्पविलोचनैर्विकसितैर्व्यालोकितुं स्वामिनं
हर्षारूढसहस्रलोचनतुलां धर्तुं व्यवस्यद् ध्रुवम् ॥३२३॥

यत्सहस्राम्रवणम् प्रमोदात्स्वाम्यागमनहर्षात् पञ्चमं तदाख्यं स्वरमुद्गिरन्त्युच्चरन्तीत्येवं शीलैः उरुभिर्विशालैः कोकिलानां कुलैः कृत्वा गायदिव, वातैः वायुभिः आन्दोलिता या वल्लर्यो लताः तासां चलैः कम्पमानैः दलैः पत्रैः कृत्वा नृत्यदिव, तथा, विकसितैः मल्लीनां पुष्पाण्येव लोचनानि तैः कृत्वा स्वामिनं व्यालोकितुं द्रष्टुम् हर्षस्य आरूढेनातिप्रकटतया, भावप्रधानो-निर्देशः, आरूढतयेत्यर्थः । सहस्राणि लोचनानि यस्य तस्येन्द्रस्य तुलामुपमां धर्तुं ग्रहीतुं व्यव-स्यद् ध्रुवम्, चेष्टदिव भाते प्रतिभाति ॥ एतेन वने कोकिलाऽऽलापः मन्दो वायुः पुष्पसमृ-द्धिश्चोक्ता ॥३२३॥

तत इति—

ततो वनान्तः शिविकावरोहणं, वितत्य विश्वैकविभूषणप्रभुः।
प्रतिप्रतीकं स विभूषणव्रजं मुमोच रोमोऽञ्चमधिश्रयन् स्वयम् ॥३२४॥

ततो वनप्राप्त्यनन्तरम् विश्वस्य एको मुख्योऽद्वितीयो वा विभूषणः प्रभुः स शान्तिः शिविकायाः अवरोहणमुत्तरणं वितत्य कृत्वा, रोमाञ्चं पुलकमधिश्रयन् रोमाञ्चितो भवन् प्रतिप्रतीकं प्रत्यवयवं विभूषणव्रजम् आभरणराशिं मुमोच तत्याज ॥३२४॥

कृष्णेति—

कृष्णज्येष्ठचतुर्दशीतिथिदिनप्रान्ते यमर्क्षे सति
स्वामी सिद्धनमस्क्रियाप्रथमकं षष्ठं प्रपन्नस्तपः।
कन्दान् मोहमहातरोरिव कचांस्तान् पञ्चभिर्मुष्टिभि-
र्मूलात् संसृतिकूलमाश्रित इव प्रोन्मूलयामासिवान् ॥३२५॥

कृष्णज्येष्ठचतुर्दशीतिथिदिनस्य प्रान्ते ज्येष्ठकृष्णचतुर्दशीतिथिदिनचरमयामे यमर्क्षे सति यमदैवतके ऋक्षे नक्षत्रे सति भरणीगते शशिनि प्रसन्नः स्वामी शान्तिः सिद्धानां नमस्क्रिया नमस्कारः प्रथमं यस्य तादृशं सिद्धनमस्कारपूर्वकम् षष्ठं तपः प्रपन्नोऽङ्गीकृतः सन् मोह एव महातरुः तस्य कन्दानिव तान् शिरस्थान् कचान् केशान् पञ्चभिः मुष्टिभिः कृत्वा संसृतेः संसारस्य कूलं परतटमाश्रितः भवं तितीर्षुः प्राप्त इव मूलात् प्रोन्मूलयामासिवान् लुञ्चितवान् ॥३२५॥

प्रेति—

प्राव्राजीत् प्रभुमन्वगेव वसुधेशानां सहस्रं तदा,
प्रापुर्नैरयिका अपि प्रियसुखाऽऽस्वादं तदा च क्षणम्।
सुत्रामा सिचयाञ्चले विभुकचानादाय दायादव-
च्चिक्षेप क्षणमात्रकेण सुकृती क्षीराम्बुराशौ स्वयम् ॥३२६॥

प्रभुं शान्तिम् अन्वगमनुसरदिव तदा शान्तिप्रभुव्रतग्रहणसमये वसुधेशानां राज्ञां सहस्रं प्राव्राजीत् दीक्षां गृहीतवान्। तदा नैरयिका नारका अपि क्षणं क्षणमात्रम् प्रियस्येष्टस्य सुखस्याऽऽस्वादमनुभवं प्रापुः अन्येषां तु कथैव केति भावः। सुकृती पुण्यवान् सुत्रामा शक्रः सिचयस्य स्ववस्त्रस्याञ्चले प्रान्ते दायादवद् सगोत्रेणेव स्वयमात्मनैव विभोः शान्तेः कचान् लुञ्चितान् वालानादाय क्षणमात्रकेण झटित्येव क्षीराम्बुराशौ क्षीरोदे समुद्रे चिक्षेप प्रावाहयत् ॥३२६॥

लोकानामीति—

लोकानां तुमुलेऽतुलेऽथ हरिणा स्वीयाङ्गुलीसंज्ञया,
व्यासिद्धे विधिवद् विभुः स विदधे सामायिकोच्चारणम्।

स्यूतं चन्द्रकरैरिवातिविमलं सूक्ष्मं महाकोमलं
स्कन्धांशे विबुधेश्वरः स निदधे श्रीदेवदूष्यं प्रभोः ॥३२७॥

अथानन्तरम् हरिणा शक्रेन स्वीयायाः अङ्गुल्याः संज्ञयाङ्कितेन ऽयासिद्धे अतुलेऽनुपमे लोकानां तुमुले निषिद्धे स विभुः शान्तिः विधिवद्विधिपूर्वकम् सामायिकस्योच्चारणं विदधे चकार तथा, स विबुधेश्वरः शक्रः प्रभोः शान्तेः स्कन्धांशे स्कन्धदेशे वामस्कन्धे इति यावत् चन्द्रकरैः चन्द्रिकाभिरिव स्यूतं निर्मितमतिविमलं सूक्ष्मं महाकोमलमतिश्लक्ष्णं श्रीदेवदूष्यं वस्त्रं निदधे स्थापितवानिति ॥३२७॥

ज्ञैरिति--

ज्ञैरभ्यूहितमेव तद्विनिहितं स्कन्धे प्रभोस्तार्किकैः,
किं पुण्याभ्युदयो यशःसमुदयो ध्यानं सितं वा किमु ?।
मत्यादित्रयसंजिगीषु किमिदं तुर्यं मनःपर्यय-
ज्ञानं वाऽभ्युदितं चिराद् बहिरिवाऽप्राप्तप्रवेशं स्थितम् ॥३२८॥

तार्किकैः तर्कनिपुणैः ज्ञैः विद्वद्भिः अभ्यूहितं तर्कितमेव, किमित्याह--प्रभोः शान्तेः स्कन्धे विनिहितं स्थापितं तद्देवदूष्यम् पुण्यस्याभ्युदयः किम् ? यशःसमुदयः यशोराशिः वा किम् ? सितं शुक्लं ध्यानं वा किम् ? प्रागप्राप्तप्रवेशम्, अत एव चिराद्बाल्यादारभ्यैव बहिःस्थितमिव पूर्वभवगतं मत्यादित्रयं मतिश्रुतावधीन् संजिगीषु तदुत्कृष्टत्वादभिभवितुमिच्छु तुर्यं चतुर्थं मनःपर्य-यज्ञानं वा अभ्युदितं प्रकटितं किम् ? सर्वत्र किमिति वितर्के ॥३२८॥

दीक्षामिति--

दीक्षामक्षयसौख्यदानरसिकां, स्वीचक्रुषोऽस्यप्रभो-
र्गीर्वाणप्रभवो ललाटविलुल-द्धस्तप्रशस्ताम्बुजाः ।
चक्रुः स्तोत्रमशेषविघ्नविपिन-प्लोषक्रियोषर्बुधं,
कैवल्यामृतवार्धिवर्धनविधौ, पीयूषरोचिःप्रभम् ॥३२९॥

अक्षयस्याविनाशिनः सौख्यस्य सुखस्य दाने रसिकामनुकूलामाप्रह्वतीं दीक्षाम् स्वीचक्रुषः गृहीतवतोऽस्य प्रभोः शान्तेः ललाटेषु विलुलन्तः संयुक्ताः हस्ता एव प्रशस्तानि अम्बुजानि येषां ते तादृशाः मस्तकन्यस्तहस्ताः कृताञ्जलयो गीर्वाणप्रभवः शक्राः अशेषाणां सकलानां विघ्ना-नामपायानां विपिनस्य वनस्य प्लोषक्रियायां दहने उषर्बुधमग्निम् तद्रूपमित्यर्थः, कैवल्यं मोक्ष एवा-मृतवार्धिः अमृतसमुद्रः तस्य वर्धनविधौ वर्धने पीयूषरोचिःप्रभम् चन्द्रतुल्यं स्तोत्रं चक्रुः ॥३२९॥

स्तोत्रमेवाह नो इति—

नो शक्नोति तव स्तवं रचयितुं सुत्राममन्त्री गुरु-
दैत्यानां गुरुरप्यबोधकलितः काव्यप्रकाशे तव ।
चाञ्चल्यं रसनाऽपि नः प्रथयति त्वद्वर्णने यत् प्रभो-
भक्तिस्तत्र जिनाऽपराध्यति तरां त्वत्पादपद्माश्रया ॥३३०॥

तव शान्तिप्रभोः स्तवं रचयितुम् स्तोत्रं विधातुम् सुत्राम्णां शक्राणां मन्त्री गुरु-र्बृहस्पतिः नो शक्नोति क्षमते, तथा, दैत्यानामसुराणां गुरुः शुक्रोऽपि तव काव्यस्य त्वत्कीर्तन-रूपस्य प्रकाशे रसनया प्रकटने अबोधकलितोऽज्ञ एव, अगम्यत्वात्तवेति भावः । यत्पुनः त्वद्व-र्णने स्तुतौ नोऽस्माकं शक्राणां रसना जिह्वा चाञ्चल्यं प्रथयति प्रकटयति कर्तुं प्रवर्त्तते, तत्र प्रभो ! जिन ! शान्तेः तव पादपद्ममेवाश्रयो यस्याः सा भक्तिरेव अपराध्यति तराम् अविन-यमाचरति, असमर्था अपि वयं त्वद्भक्तिवशादेव स्तोतुं प्रवृत्ताः स्मेत्यर्थः ॥३३०॥

चक्रित्वेऽधिगते नवस्वपि निधिष्वेतेषु रत्नेष्वलं संप्राप्तेषु चतुर्दशस्वपि गृहे वृद्धिं विलोक्याऽखिलाम् । चक्रित्वेइति--

चक्रित्वेऽधिगते नवस्वपि निधिष्वेतेषु रत्नेष्वलं
संप्राप्तेषु चतुर्दशस्वपि गृहे वृद्धिं विलोक्याऽखिलाम् ।
आजन्मामकृतिप्रपन्ननिवसन्मत्यादिवित्तित्रय !
न्यूनत्वापगमाय नूनममग्रश्चारित्रमेतत् प्रभो ! ॥३३१॥

आजन्म जन्मत एवारभ्य प्रकृत्या स्वभावत एव प्रपन्नं प्राप्तं निवसन्तीनां स्थितानां मत्यादिवित्तीनां मतिश्रुतावधीनां त्रयं येन तत्सम्बोधने, प्रभो ! स्वामिन् ! शान्ते ! चक्रित्वेऽ-धिगते प्राप्ते, तथा. नवस्वपि नवसङ्ख्याकेष्वपि नैसर्पादिषु निधिषु एतेषु प्राप्तेषु सत्सु तथा चतुर्दशसु रत्नेष्वप्यलं सम्प्राप्तेषु सत्सु अखिलां सर्वप्रकारां वृद्धिमभ्युदयं गृहे विलोक्यापि एतत्सद्यः स्वीकृतं चारित्रं विरतिम् न्यूनत्वापगमाय, व्रतप्राप्तिमात्रमवशिष्टमभूत्तदपि मा भूदित्येतदर्थ-ममग्रः स्वीकृतवानसि, अधुना सर्वथा पूर्णता ते जातेति भावः ॥३३१॥

हिंसेति—

हिंसाऽपासनमात्रसारचयितुं मिथ्यावचः सर्वथा,
त्यक्तुं पालयितुं परस्वविषयव्यावृत्तलौल्यं मनः ।
निःशेषं च परिग्रहं निरसितुं दीक्षेश ! कक्षीकृता,
चेष्टन्ते न निरर्थकं कथमपि प्रायो हि युष्मादृशाः ॥३३२॥

सम्प्रति शान्तेर्दीक्षाग्रहणं स्तौति ईश स्वामिन्! त्वया हिंसायाः अपासनमात्रम् सर्वप्रकारेण निवारणमारचयितुं कर्त्तुम्, तथा मिथ्यावचोऽसत्यं सर्वथा त्यक्तुम् परस्यान्यस्य स्वे वित्ते विषये व्यावृत्तमसम्पृक्तं लौल्यं चापल्यं यस्य तादृशमदत्ताऽऽदानेच्छारहितं मनः पालयितुं तादृशवृत्तिस्थमेव रक्षितुम्, तथा निःशेषं सर्वप्रकारं परिग्रहं निरसितुं त्यक्तुञ्च दीक्षा तादृशचतुर्महाव्रतग्रहणरूपा कक्षीकृता स्वीकृता, न तु स्वर्गलब्ध्याद्यर्थम् निःस्पृहत्वादिति भावः। ननूक्तफलार्थं दीक्षा कथं गृहीतेत्यत आह— हि यतः प्रायः। युष्मादृशाः वीतरागाः कथमपि निरर्थकं निष्प्रयोजनं न चेष्टन्ते कुर्वन्ति, अत उपरोक्तं फलमेव कल्प्यते इति भावः ॥३३२॥

प्रव्रज्येति—

**प्रव्रज्या भवताऽऽदृता जिनपते जानीमहे सर्वतः,**<br>**शौर्यं स्वस्य जगत्त्रयेऽपि विदितं कर्तुं च लोकोत्तरम्।**<br>**कन्दर्पः प्रविहाय दर्पमखिलं संसेवनीयं सदा,**<br>**तं च स्वं जनकं मनः क्वचन यद् युष्मद्भिया लीयते ॥३३३॥**

जिनपते! शान्तिजिन! भवता जगत्त्रयेऽपि सर्वतः सर्वत्र स्वस्य स्वसम्बन्धिलोकोत्तरमलौकिकं शौर्यं विदितं प्रसिद्धं कर्त्तुम् प्रव्रज्या आदृता गृहीता जानीमहे, तदेतदनुमिनोमि तत्र हेतुमाह— यद्यतः भवतोऽतिशूरत्वाद्धेतोः, युष्मद्भिया कन्दर्पः कामदेवः अखिलं दर्पं सकलविजयगर्वम् सदा संसेवनीयम् पितृसेवनस्य पुत्रधर्मत्वादिति भावः, तं प्रसिद्धं स्वं जनकं मनश्च कामस्य मनोभवत्वादिति भावः। प्रविहाय त्यक्त्वा क्वचनाज्ञातस्थाने लीयते निलीयते तिरोहितवान्, कथमन्यथा न दृश्यते इति भावः। कामो जितो भवतेति यावत् ॥३३३॥

साम्राज्यमिति—

**साम्राज्यं प्रविहाय जीर्णतृणवद् युष्मादृशस्तादृशं,**<br>**चारित्रं प्रतिपद्यते यदनघः संसारपारं गमी।**<br>**क्षेत्रज्ञं प्रतिषेद्धुमक्षमतमो युक्तेरभावादसौ,**<br>**तल्लौकायतिकः करोतु किमघं लोकं परं वा विदन्? ॥३३४॥**

अनघो निष्कलङ्कः संसारपारंगामी भवपरम्परां तितीर्षुः युष्मादृशः भवादृशः तादृशमतिविशालं साम्राज्यं जीर्णतृणवत् प्रविहाय यश्चारित्रं प्रतिपद्यते स्वीकरोति तत्ततो हेतोः असौ लौकायतिकः चार्वाकः युक्तेरभावात् स्वपक्षसाधकतर्काभावात् क्षेत्रज्ञमात्मानम्, "क्षेत्रज्ञ आत्मा पुरुषः" इत्यमरः। प्रतिषेद्धुं भूतातिरिक्त आत्मा नास्तीत्येवं निषेद्धुमक्षमतमोऽत्यन्तमसमर्थः वा तथा परं लोकं स्वर्गादिरूपं विदन् स्वीकुर्वन् किमघं किंनाम पापं करोतु? न किमपि पापं कर्तुं प्रवर्ततामित्यर्थः। भवदाचरणेनात्मनः परलोकस्य च सिद्धतया युक्त्यन्तराभावाच्च चार्वाकोऽपि तत्स्वीकुर्वन् पापान्नि-

वर्तेत एवेत्यर्थः उक्तस्वीकारनास्तिकतया पापाङ्गत्वादिति भावः ॥ नास्तिकोऽपि भवता वशी-कृत इति भावः ॥२३४॥

दृष्ट्वेति—

दृष्ट्वा माध्यमिको भवन्तमपि किं नो जाज्वलीति क्रुधा,
त्वत्सेवाप्रतिबद्धशुद्धमनसोऽप्यस्मान् समालोक्य वा ? ।
सिद्धान्तप्रतिपत्तिसक्तहृदयो नैव प्रमाणप्रमा-
मुख्यां स्वीकुरुते प्रवृत्तिमपि यो दुष्कर्मभिर्लालितः ॥२३५॥

माध्यमिकः शून्यवादी बौद्धविशेषोऽपि भवन्तं दृष्ट्वाऽपि तव वीतरागस्य सेवायां प्रतिबद्धं समासक्तम् अत एव शुद्धम् विकाररहितं सम्यक्त्वयुक्तं मनो येषां तादृशान् अस्मान् देवार्चकांश्च समालोक्य वा क्रुधा सर्वशून्यवादस्य प्रत्यक्षेण खण्डनजन्यकोपेन किं नो जाज्वलीति पुनः पुनर्ज्वलति अपि तु ज्वलत्येव. स्वसिद्धान्तभङ्गे कोपस्य साहजिकत्वात्, एतेन तेषां रागद्वेषवत्त्वं सूचितम् । ननु दुराग्रहं मुक्त्वा सम्यक्त्वमेव तेनापि किं न गृह्यते इति चेन्न स्वसिद्धान्ताभिनिवेशात् अभिमानसत्त्वे च न सारग्रहणसम्भव इत्याह— यः माध्यमिकः दुष्कर्मभिरशुभानुबन्धिकर्मभिः लालितः वशीकृतः. अत एव सिद्धान्तस्य स्वसिद्धान्तस्य प्रतिपत्तौ स्वीकारे सक्तमेकतानं हृदयं यस्य स तादृशः सिद्धान्ततारतम्यविवेकशून्यः अत एव प्रमाणप्रमाप्रमुख्याम् प्रमाणज्ञानाधीनामपि प्रवृत्तिं वार्तां "वार्ताप्रवृत्तिर्वृत्तान्तः" इत्यमरः । नैव स्वीकुरुते शून्यवादिनां मते प्रमाणास्वीकारादिति भावः यो हि प्रमाणं न स्वीकरोति तस्य सारग्रहणे प्रवृत्तिर्न सम्भवति, सारस्य प्रमाणाधीनत्वात् एवञ्चाप्रामाणिकास्ते इति भावः ॥२३५॥

ज्ञाने इति—

ज्ञाने मौनमिति न्यगादि विदुषा केनापि शक्तौ क्षमा-
ऽपीत्येतद्द्वितयं त्वयि प्रथमतः साक्षाच्च साक्षात्कृतम् ।
यद्वा कानि भवन्ति नैव बहुधा रत्नानि रत्नाकरे ,
तेषां स्यादुपयोग एव महतां नानासमृद्धिस्पृशाम् ॥२३६॥

केनाऽपि विदुषा सुधिया ज्ञाने सति मौनम् वाग्मिता, न तु वाचालता, इति, शक्तौ सामर्थ्ये सति क्षमा अपराधसहिष्णुताऽपीत्येतद्द्वयं न्यगादि. ज्ञाने सति मौनं शक्तौ च क्षमा भूषणमित्यर्थः । तथा च कालिदासः—"ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः । गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव" इति । तद्द्वयमपि प्रथमतः दीक्षाग्रहणात्पूर्वम् एव साक्षात् स्वतश्च साक्षात्कृतं दृष्टम् । नैतत्त्वयि कृत्रिमतयावदेव वा इत्याह— यद्वा रत्नाकरे सागरे कानि

रत्नानि बहुधा अनेकप्रकाराणि नैव भवन्ति ? अपि तु भवन्त्येव, किन्तु तेषां रत्नानाम् नाना-समृद्धिस्पृशाम् अनेकलब्धिभाजां महताम् त्वादृशानाम् उपयोगो नियोग एवावसरे स्यात् न च तत्कृत्रिममेतावदेव वा; क्षमादिगुणानामाकरो भवानिति यावत् ॥३३६॥

अस्माकमिति—

अस्माकं नयनानि नाथ ! सफलीभूतानि भूयांस्यपि,
प्राप्तानल्पसमाधियोगिसुलभत्वद्रूपसंप्रेक्षणैः ।
ज्ञानं केवलमाप्य दुर्लभतमं धर्मोपदेशामृतैः,
सत्यं पावयितासि तात ! सकलश्रोत्राणि नस्त्वं कदा ? ॥३३७॥

नाथ ! स्वामिन् प्राप्ताऽनल्पसमाधयो यैस्तादृशैः योगिभिः सुलभैः प्राप्यैः तव रूपस्य स्वरूपस्य सम्प्रेक्षणैः कृत्वा अस्माकमिन्द्राणां भूयांसि सहस्राण्यपि नयनानि सफलीभूतानि, तव-दर्शनैः नयनबाहुल्यं सफलं मन्ये इत्यर्थः तात ! त्वं कदा दुर्लभतमम् केवलं ज्ञानमाप्य सत्यं निश्च-येन धर्मोपदेशामृतैः नोऽस्माकं सकलानि श्रोत्राणि कर्णानि—कदा पावयितासि पवित्रीकर्त्ता भवि-ष्यसि ? पावयिता पवित्रीकर्त्तासि ? तदाशास्महे वयमित्यर्थः ॥३३७॥

इत्थमिति—

इत्थं सर्वे सुरपरिवृढाः शान्तिनाथं जिनेन्द्रं
नुत्वा नत्वा प्रमदकलितास्तेऽथ नन्दीश्वरेऽपि ।
गत्वा कृत्वा बहुतरमहाष्टाहिकामृद्धिपूर्वं,
भातं स्थानं निजनिजमयुर्नित्यकल्याणभावाः ॥३३८॥

सर्वे सुरपरिवृढाः सुरेन्द्राः इत्थमुक्तप्रकारेण जिनेन्द्रं शान्तिनाथं नुत्वा स्तुत्वा नत्वा प्रणम्य च प्रमदकलिताः प्रसन्नाः, अथानन्तरम् नित्यकल्याणभावाः शुभाशयास्ते सुरेन्द्राः नन्दीश्व-रेऽपि गत्वा बहुतराम् महाष्टाहिकाम् अष्टाहिकामहोत्सवं कृत्वा, भातं प्रकाशितं निजनिजस्था-नमयुरगमन् ॥३३८॥

आसीदिति—

आसीत् श्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः,
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विज्ञानभाजां गुरुः ।
तच्छिष्येण कृते चतुर्दश इतः श्रीशान्तिवृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽयमीक्ष्यः सताम् ॥३३९॥

नवरम्, निगदसिद्धमेवैतत् ॥३३९॥

इतिश्रीमन्मुनिभद्रसूरिकृत शान्तिनाथचरिते शासनसम्राट्-सूरिचक्रचक्रवर्ति-परमसद्गुरु-श्रीमद्विजयनेमिसूरीश्वर-पट्टालङ्कारावातन्यायवाचस्पतिशास्त्रविशारदविरुदाचार्यश्रीविजय-दर्शनसूरीश्वरसन्दब्धप्रबोधिनीव्याख्यायां चतुर्दशः सर्गः ॥



अर्हम्

## अथ पञ्चदशः सर्गः

**सर्गादौ सकलकल्याणमूलत्वाद्वर्ण्यत्वाच्च चरितनायकं श्रीशान्तिमेव स्तौति-सद्विति**

**सद्बुद्धिप्रमुखैर्विभासितो, विज्ञानैः स चतुर्भिराश्रितैः ।**
**सौधर्मेडिव लोकपालकैः, श्रीशान्तिप्रभुरस्तु वः श्रिये ॥१॥**

सद्बुद्धिः प्रमुखं येषु तैः सम्यग्ज्ञानप्रभृतिभिः सम्यङ्मतिज्ञानप्रभृतिभिर्वा जिनानां जन्मतः ज्ञानत्रयवत्त्वम्, दीक्षानन्तरञ्च मनःपर्यायज्ञानोत्पत्तिरिति चतुष्टयवत्त्वमित्यत', चतुर्भिः मतिश्रुत्य-वधिमनःपर्यायात्मकैः आश्रितैः स्वस्मिन् स्थितैः विज्ञानैः ज्ञानैः लोकपालकैः चतुर्भिः लोकपाला-ख्यैः सुरैः सौधर्मेट् सौधर्मेन्द्र इव विभासितः शोभमानः स गृहीत व्रतः श्रीशान्तिप्रभुः वः श्रोतॄणां श्रिये अभ्युदयायास्तु भवतु, उपमाऽलङ्कारः ॥१॥

**स्वामीति—**

**स्वाम्यैर्यापथिकीं ततः श्रयन्नव्राजीद् दिवसे द्वितीयके ।**
**श्रीमद् मन्दिरनाम पत्तनं, प्रालेयाचलतुङ्गमन्दिरम् ॥२॥**

ततः व्रतग्रहणानन्तरम् द्वितीयके द्वितीये दिवसे, ऐर्यापथिकीमीर्यापथविशुद्धवृत्तिं तां श्रयन् स्वामी श्रीशान्तिप्रभुः श्रीमत् लक्ष्मीसपन्नं प्रालेयाचलः हिमालयः स इव तुङ्गमुच्चमन्दिरं भवनं यस्मिन् तादृशं मन्दिरनाम पत्तनं नगरमव्राजीत् ॥२॥

**प्रभुविषये तत्रत्यलोकोत्कण्ठामाह-अस्माकमिति**

**अस्माकं भवनानि पारणं, कृत्वाऽयं यदि पावयेदिति,**
**स्वस्वागारवहिः स्थिता सदा, पौरा मार्गममार्गयन् प्रभोः ॥३॥**

यदि अयं शान्तिप्रभुः पारणं कृत्वा अस्माकं भवनानि पावयेत्पवित्रीकुर्यादिति बुद्धया पौराः नागराः सदा स्वस्य अगारस्य गृहस्य वहिःप्रदेशे स्थिताः सन्तः प्रभोः शान्तिप्रभोः मार्गम्, आगमनमार्गममार्गयन् अन्वेषयन्ति स्म, एतेन लोकानां प्रभुविषये आदरातिशय उत्कण्ठा च सूचिता ॥३॥

सर्वानिति—

सर्वांस्तानतिपत्य स प्रभुः, सौधं प्राप सुमित्रभूपतेः ।
आकृष्टस्ततपुण्यसंपदा, कल्पद्रुः परमस्य जङ्गमः ॥४॥

स प्रभुः शान्तिः तान् स्वस्वागारबहिःस्थितान् सर्वान् पौरान् अतिपत्य अतिक्रम्य अस्य सुमित्रभूपतेः ततया विस्तृतया पुण्यसम्पदा आकृष्टः जङ्गमकल्पद्रुः । सौधं प्रासादं प्राप जगाम ॥४॥

आयन्तमिति—

आयन्तं समवेक्ष्य तं नृपोऽभ्युत्थायाऽभ्युपगत्य संभ्रमात् ।
त्यक्तच्छत्रपवित्रचामरः, प्राणंसीत् परमेश्वरं मुदा ॥५॥

तं परमेश्वरं शान्तिमायन्तमागच्छन्तं समवेक्ष्य सम्भ्रमात्, हर्षत्वरावशात् त्यक्तं छत्रं पवित्रे धवले चामरे च येन स तादृशः अभ्युत्थाय अभ्युत्थानं कृत्वा अभ्युपगत्य समीपं सम्मुखमेत्य च मुदा सहर्षं प्राणंसीत् ननाम ॥५॥

सुमित्रस्य स्वभाग्यस्तुतिमाह प्राप्यमिति—

प्राप्यं वित्तमनेकपुण्यतश्चित्तं श्रेयसि तत्र कस्यचित् ।
पात्रं पात्रमहो ! गुणश्रियां, सम्पन्नं त्रितयं ममाधुना ॥६॥

वित्तं धनमनेकपुण्यतः पुण्यपुञ्जप्रभावात्प्राप्यम्, लभ्यम्, अपुण्यवन्तो दरिद्रा एव भवन्तीति भावः । तत्रापि धनलाभे सति कस्यचिदेव श्रेयसि कल्याणसाधनदानकर्मादौ चित्तं मनः, प्रवर्तते इति शेषः गुणश्रियां क्षमादिगुणानां ज्ञानादिलक्ष्मीनां पात्रमास्पदं पात्रं सच्चारित्रपात्रं अनेकपुण्यतः प्राप्यमित्यनुकर्षणीयम् अहो ! इति हर्षाश्चर्ये, अधुना शान्त्यागमनतः मम सुमित्रस्य त्रयं निरवद्याहारद्रव्यतद्दानपरिणतिशान्तिप्रभुरूपरत्नपात्रात्मकं पात्रं सम्पन्नम् ॥६॥

पूर्वश्लोकशेषमेवाह तदिति—

तद् धन्योऽहमिति स्वचेतसा, संचिन्त्योत्पुलकः प्रमोदतः ।
तीर्थेशं प्रतिलाभ्य पायसै-र्भूपः कारयति स्म पारणम् ॥७॥

तत्त्रितयलाभतः अहं सुमित्रः धन्यः प्रशस्योऽस्मीतीत्थं स्वचेतसा सञ्चिन्त्य प्रमोदतः हर्षतः उत्पुलकः सरोमाञ्चः भूपः सुमित्रभूपः तीर्थेशं शान्तिप्रभुं पायसैः परमान्नैः "पायसं परमान्नं च क्षैरेयी" इति हैमः । प्रतिलाभ्य पारणं कारयति स्म ॥७॥

प्रोच्चैरिति—

प्रोच्चैः शारदकौमुदीसितक्षैरेयीभृतपाणिसंपुटः ।
इत्यावेदयति स्म वा जिनः, शुक्लध्यानमिदं करे मम ॥८॥

वा अथवा शारदी शरदृतूद्भवा या कौमुदी चन्द्रिका तद्वत्सितया धवलया क्षैरेय्या पायसेन भृतं पूर्णं कारणे कार्योपचार इदं पायसं शुक्लध्यानमेवेतीत्थं तीर्थकराणां पाणिपात्रत्वात्, पाणिसम्पुटं यस्य स तादृशः। जिनः शान्तिप्रभुः मम शान्तेः करे इदं पायसं शुक्लध्यानमेव, पायसं शुक्लध्यानबुद्ध्यैव भावयामीत्यर्थः। इतीत्थं प्रोच्चैरावेदयति स्म ॥८॥

तारमिति—

तारं दुन्दुभयोऽनदन्नथ, प्रावृट्कालवलाहकस्वनाः ।
पुण्यौघं भुवनेषु विश्रुतं, कुर्वाणा इव मित्रभूपतेः ॥९॥

अथ शान्तिकृतावेदनानन्तरम्, प्रावृट्काले वर्षर्तौ वलाहकस्य मेघस्य स्वन इव स्वनो येषां ते तादृशाः मेघगम्भीरस्वराः दुन्दुभयः मित्रभूपतेः पुण्यौघं पुण्यराशिं भुवनेषु लोकेषु विश्रुतं ख्यातं कुर्वाणा इव तारमुच्चस्स्वरेणानदन् नदन्ति स्म। अत्र दुन्दुभिनादस्य भुवनव्यापकत्वेन संभावनादुत्प्रेक्षा ॥९॥

गीर्वाणा इति—

गीर्वाणाः परितुष्टमानसा, रत्नानां किल वृष्टिमादधुः ।
सौधे तस्य महार्घतामिवाऽतुल्यां प्रापयितुं तदा ध्रुवम् ॥१०॥

तदा शान्तिप्रभुपारणकाले परितुष्टमानसा गीर्वाणाः तस्य सुमित्रभूपस्य सौधे प्रासादे अतुल्यां सातिशयां महार्घतां महामूल्यत्वं महापूज्यत्वं वा "मूल्ये पूजाविधावर्घ "इत्यमरः" । प्रापयितुं सम्पादयितुं ध्रुवमित्युत्प्रेक्षायाम्, प्रापयितुमिवेत्यर्थः । रत्नानां वृष्टिम् आदधुश्चक्रुः, किलेत्यैतिह्ये ॥१०॥

सौधमिति—

सौधं तद् महनीयमादराद्, देवानामपि यत्र तीर्थकृत् ।
एतीति त्रिदशास्तदङ्गणे, कुर्वन्ति स्म सुमौघवर्षणम् ॥११॥

यत्र यस्मिन् सौधे तीर्थकृत् तीर्थङ्करप्रभुः एति आगच्छति तत्सौधम् देवानामपि, किम्पुनरन्येषाम् आदरादादरपूर्वकम् महनीयं पूजनीयमिति हेतोः, त्रिदशा देवाः तस्य सौधस्याङ्गणे चत्वरे "अङ्गणं चत्वराऽजिरे" इत्यमरः। सुमानां पुष्पाणामोघस्य राशेः वर्षणं कुर्वन्ति स्म ॥११॥

संताप इति—

संतापो भवपातसंभवो, मा भूदस्य मनस्विनः परम् ।
इत्युर्वीन्द्रनिकेतनं सुराः, सिञ्चन्ति स्म सुगन्धवारिभिः ॥१२॥

अस्य मनस्विनः उदारमनसः सुमित्रभूपस्य भवे पातादर्थाज्जन्मनः संभवो यस्य तादृशः संतापः दुःखं मा भूदिति हेतोः सुराः उर्वीन्द्रस्य भूपस्य निकेतनं गृहं सुगन्धिवारिभिः सुगन्धि-जलैः परमतिशयेन सिञ्चन्ति स्म ॥१२॥

**अस्माकमिति—**

**अस्माकं भवदात्मवासनाः, संक्रामन्तु महीन्द्र ! कर्हिचित् ।**
**अस्वप्नाः प्रभुपारणक्षणे, चेलोत्क्षेपमितीव चक्रिरे ॥१३॥**

महीन्द्र ! सुमित्रभूप ! कर्हिचित्कदापि भवतस्तवात्मनो वासनाः भावनाः अस्माकमस्मासु संक्रामन्तु वयमपि त्वादृशभावनावन्तो भवाम इति सूचयन्निव अस्वप्नाः देवाः प्रभोः शान्तिजि-नस्य पारणक्षणे चेलोत्क्षेपं वस्त्रोत्क्षेपं चक्रिरे ॥१३॥

**इतीति—**

**इत्यानन्दपरीतनागरात्, तस्माद् मन्दिरपत्तनादयम् ।**
**संतोषेण विधाय पारणामन्यत्र व्यहरज्जिनेश्वरः ॥१४॥**

इत्युक्तप्रकारेण आनन्देन परीताः आप्लुताः नागराः यस्मिन् तस्मात् तस्मान्मन्दिराख्या-त्पत्तनात् अयं जिनेश्वरः शान्तिजिनः सन्तोषे संतोषपूर्वकं पारणां विधायान्यत्र व्यहरद्विहारं कृतवान् ॥१४॥

**आक्रान्ता इति—**

**आक्रान्ता जिनपादपङ्कजैर्नोल्लङ्घ्याऽस्तु धरा नृणामियम् ।**
**इत्याधायि नृपेण पारणाभूमौ तत्र च रत्नपीठकम् ॥१५॥**

जिनस्य शान्तिजिनस्य पादपङ्कजैराक्रान्ता पारणक्षणे अधिष्ठिता इयं धरा मही नृणाम् माऽस्तु उल्लङ्घ्या इमां भगवत्पारणामहीं केऽपि जना नोल्लङ्घयन्तु इति बुद्ध्या नृपेण मित्रभूपेन तत्र पारणाभूमौ रत्नपीठकं रत्नमयपीठं आधायि विरचितं ॥१५॥

**धर्म इति—**

**धर्मः कुत्रचन प्रवर्तते, कस्मिन् नाप्युपवर्तते न्विति ?**
**विज्ञातुं व्यहरद् विभुर्भुवं, विज्ञानां न मुधा प्रवृत्तयः ॥१६॥**

धर्मः अहिंसासत्यादिरूपः कुत्रचन स्थाने प्रवर्तते कस्मिन् न्विति वितर्के, नापि उपवर्तते प्रवर्तते इति विज्ञातुं विभुः—शान्तिजिनः भुवं महीं व्यहरत् विहरति स्म, न तु यदृच्छया, तदेवाह—विज्ञानां सज्ज्ञानवता सुधा निष्प्रयोजनं प्रवृत्तयः न भवन्तीति शेषः ॥१६॥

अथ तस्य विहारकालिकचर्यामाह निद्रामिति—

निद्रां नैव बभाज कर्हिचिज्जानन् मौनमसेवत प्रभुः ।
निःसङ्गो निषसाद न क्वचिद्, निन्ये वत्सरमेवमेककम् ॥१७॥

प्रभुः शान्तिजिनः कर्हिचित्कदापि निद्रां नैव बभाज न शयितवान्, तथा, जानन्, अपि मौनमसेवत, तत्र तत्र तत्तद्विशेष्यं जानन्नपि ध्यानतत्परत्वान्न ब्रूते स्मेत्यर्थः । क्वचित् निःसङ्गः विषयव्यासङ्गमुक्त इत्यर्थः । न निषसादोपविवेश, एवमुक्तप्रकारेण दुष्करं तपः कुर्वन् एकैकमेकं वत्सरं वर्षम् निन्ये क्षपयति स्म ॥१७॥

अथ शान्तेः हस्तिनापुरगमनमाह राज्यमिति—

राज्यं चक्रिपदं ततो व्रतं, तुर्यं ज्ञानमिदं समासदम् ।
यस्यां जन्मभुवीत्यवेत्य स, प्रापत् तामथ हस्तिनापुरम् ॥१८॥

अथानन्तरम् यस्यां जन्मभुवि जन्मभूमौ राज्यं चक्रिपदं चक्रवर्त्तित्वम् ततस्तदनन्तरम् व्रतमिदं तुर्यं चतुर्थं ज्ञानं मनःपर्यायज्ञानञ्च समासदं प्राप्तम् इतीत्थमवेत्य विचार्य स शान्तिप्रभुः तां स्वजन्मभूमिं हस्तिनापुरम् तदाख्यं नगर प्रापदगमत् ॥१८॥

अथ तत्र शान्तिजिनस्य केवलज्ञानप्राप्तिमाह—युग्मेन साहस्रेति

साहस्राम्रवणाभिधे वने, तस्मिन् नन्दितरोस्तलेऽमलम् ।
शुक्लध्यानमधिश्रितस्तपः, षष्ठं चापि विघातिकर्मकः ॥१९॥
पौषे मासि सिते तिथौ नवम्याख्याते भरणीगते विधौ
ज्ञानं पञ्चममाप केवलं, लोकालोकविभासकं विभुः ॥२०॥

तस्मिन् हस्तिनापुरे साहस्राम्रवणाभिधे वने उद्याने नन्दितरोर्नन्दीवृक्षस्य तले अमलं विशुद्धं शुक्लध्यानम् षष्ठं उपवासद्वयात्मकं तपश्चापि अधिश्रित आस्थितः वि–विगतं वि नष्टं घातिकर्म ज्ञानावरणादिचतुष्टयं यस्य स तादृशः गतं विनष्टं घातिकर्म विघातिकर्म यस्य स तादृशः कृतघातिकर्मक्षय' विभुः शान्तिजिनः पौषे मासि स्थिते शुक्लपक्षे नवमीत्याख्याते नवम्यासंज्ञके तिथौ विधौ चन्द्रे भरण्यां तदाख्यनक्षत्रे गते स्थिते सति लोकश्चालोकं च तयोर्विभासकं प्रकाशकम् लोकालोकविषयकम् पञ्चमं केवलं तदाख्यं ज्ञानमाप ॥१९–२०॥

अथ तत्काले लोककल्याणमाह आलोकेनेति—

आलोकेन विसर्पिणाऽमितः, सर्वा एव दिशश्चकासिरे ।
वाता वान्ति सुखाः स्म तत्क्षणं, प्रापुः शर्म च नारका अपि ॥२१॥

तत्क्षणं तस्मिन् प्रभोः केवलज्ञानप्राप्तिकाले अभितः सर्वतो विसर्पिणा प्रसरता आलोकेन प्रकाशेन सर्वा एव दिशः चकासिरे प्रकाशिता बभूवुः, तथा वाताः, वायवः सुखाः सुखस्पर्शाः वान्ति स्म, अवहन् तथा, नारकाः अपि, किम्पुनरन्ये शर्म सुखं प्रापुश्च ॥२१॥

**अथेन्द्रासनकम्पमाह पीठानीति—**

**पीठानि प्रचकम्पिरे तदा शक्राणां सुखलालितात्मनाम् ।**
**शङ्के पञ्चमवित्प्रभावना-प्रस्थानेशवियोगशङ्कया ॥२२॥**

तदा शान्तेः केवलप्राप्तिकाले सुखैः लालितात्मनाम् सुखैकमग्नानां शक्राणाम् पीठान्यासनानि प्रचकम्पिरे, तदेवोत्प्रेक्षते, शङ्के मन्ये, यत् पञ्चमविदः केवलिनः प्रभावनार्थम्, केवलज्ञानमहोत्सवार्थं प्रस्थानेन गमनेन कृत्वा य ईशस्य तदासनस्य पत्युः शक्रस्य वियोगः विरहः तच्छङ्कया, प्रचकम्पिरे अन्योऽपि हि भाविदुःखशङ्कया कम्पते इति भावः ॥२२॥

**अथ तत्र देवानामागमनमाह—सेन्द्रा इति—**

**सेन्द्रास्तत्र सुराः समागमन्, हर्षोत्कर्षभृतोऽथ वाहनैः ।**
**जात्याष्टापदतुल्यलोचन-भ्राज्यष्टापदसिंहगोमुखैः ॥२३॥**

शान्तिनाथकैवल्यज्ञानोपत्तिस्थाने अथानन्तरम् हर्षोत्कर्षभृतः सातिशयहृष्टाः सेन्द्राः—सुराः जात्येनोत्तमेनाष्टापदेन कनकेन तुल्यैः लोचनैर्भ्राजन्ते इत्यवंशीलैः अष्टापदसिंहगोमुखैर्वाहनैः अष्टापदाः तदाख्यपशवः सिंहाः गावो बलिर्वदाश्च मुखाः प्रधाना येषु तादृशैः वाहनैः कृत्वा समागमन् ॥२३॥

**अथ देवकर्तृकभूमिसम्मार्जनमाह देवा इति—**

**देवास्तत्र मरुत्कुमारका, हर्षाद् योजनमात्रभूतले ।**
**धन्यमन्यहृदः समन्ततः, पुण्यानामुदये रजोऽहरन् ॥२४॥**

तत्र केवलज्ञानोत्पत्तिस्थाने मरुत्कुमारकाः पवनकुमाराख्या देवाः धन्यं मन्यन्ते हृदयानीति ते तादृशाः धन्या वयं यदयमवसरः प्राप्त इत्येवं मन्वानाः सन्तः हर्षाद् हर्षपूर्वकम् पुण्यानामुदये उदयनिमित्तम् योजनमात्रे भूतले रजः धूलिमहरन् सम्मार्जयन्ति स्म ॥२४॥

**अथ तत्र भूमौ सुगन्धिजलसिञ्चनमाह सिञ्चन्तीति—**

**सिञ्चन्ति स्म सुगन्धिवारिभिस्तां भूमिं जलभृत्कुमारकाः ।**
**पुंसां तत्र निषेदुषां ध्रुवं, संतापाऽपनिनीषयाऽभितः ॥२५॥**

जलभृत्कुमारकाः मेघकुमाराः तां भूमिं सुगन्धिवारिभिः सिञ्चन्ति स्म, तत्रोपेक्षते, तत्र योजनमितं तत्र भूमौ अभितः सर्वतः निषेदुषाम्, उपविष्टानां पुंसां जनानाम् संतापस्य घर्मस्यापनिनीषयाऽपनेतुमिच्छया ध्रुवं शङ्के ॥२५॥

तासु तोरणादिश्रेणीषु उच्चैरुपरि प्रदेशे असौ वर्ण्यमाना गारुत्मतरत्नमयी मरकतमणिनिर्मिता "गारुत्मतं मरकतमश्मगर्भो हरिन्मणि"रित्यमरः। मकरावली तथा तेन रूपेण अभात् शोभते स्म, यथा जिनस्य शान्तिजिनस्य देशनैव पीयूषाम्बुनिधिः अमृतसमुद्रस्तस्मिन् मम मकरस्य न भीर्भयमितीत्थं जाननेवाभात् ॥३०॥

**तस्या इति—**

**तस्या ऊर्ध्वविभागमाश्रिता, रेजे छत्रचतुष्टयी भृशम् ।**
**संघस्याऽपि चतुर्विधस्य यत्, स्थास्याम्यूर्ध्वमिदं मदादिव ॥३१॥**

तस्याः, तोरणश्रेण्या ऊर्ध्वविभागमाश्रिता उपरिस्थिता छत्राणां चतुष्टयी छत्रचतुष्कम् यद् यतः चतुर्विधस्य साधु-साध्वी-श्रावक-श्राविकारूपस्य सङ्घस्य अपि ऊर्ध्वमुपरि स्थास्यामीतीत्यस्मात्प्रकारान्मदादभिमानादिव भृशं रेजे शुशुभे ॥३१॥

**ध्वजं वर्णयति उद्धूता इति—**

**उद्धूता मृदुना नभस्वता, रेजुस्तोरणमूर्धसु ध्वजाः ।**
**पापं वेक्ष्यति नात्र केवलं, संज्ञां दातुमिवोद्यता इति ॥३२॥**

तोरणानां मूर्धसु उपरि रोपिताः मृदुना मन्देन नभस्वता पवनेनोद्धताः कम्पिता ध्वजाः अत्रस्थाने केवलमेकमात्रं पापं न वेक्ष्यति प्रवेशमाप्स्यसीति संज्ञां सूचनां दातुमुद्यता तत्परा इव स्थिता रेजुः । उत्प्रेक्षा ॥३२॥

**अष्टाविति—**

**अष्टौ माङ्गलिकानिऽतोरणाऽधस्तादुच्चधरासनोच्चये ।**
**प्रत्येकं विदधुर्दिवौकसः, सिद्धीरासयितुं श्रुता इव ॥३३॥**

तोरणानामधस्थादधोभागे दिवौकसो देवाः उच्चैर्धरा पृथ्वी एवासन तस्योच्चये स्थण्डिले अष्टौ माङ्गलिकानि अष्टमङ्गलविधानि श्रुताः प्रसिद्धाः सिद्धीः अणिमादिसिद्धीः प्रत्येकमासयतुमुपवेशयितुमिव विदधुर्विन्यस्तवन्तः ॥३३॥

**अथ तत्र वप्रनिर्माणमाह—क्ष्मापीठ इति**

**क्ष्मापीठेऽथ समुन्नते व्यधुः, शालं कल्पनिवासिनोऽमराः ।**
**रत्नैरच्छतमैर्जिनेशितुर्भक्त्या शक्तिवशादिवाशयैः ॥३४॥**

अथाष्टमङ्गलस्थापनानन्तरम् कल्पनिवासिनोऽमराः देवाः जिनेशितुः शान्तिजिनस्य भक्त्या हेतुना, शक्तिवशात्स्वसामर्थ्यतः समुन्नतेऽत्युच्चे क्ष्मापीठे महीपीठे आशयैः रत्नैः स्वाभिप्रायैरिवाच्छतमैः स्वच्छैः कृत्वा शालम् अभ्यन्तरप्राकारं व्यधुर्निर्ममुः ॥उपमा ॥३४॥

तत्र कपिशीर्षं वर्णयति—तस्मिन्निति

तस्मिन् सा कपिशीर्षमण्डली, नानारत्नमयी व्यराजत ।
देवानां स्वसमीक्षणे यथाऽक्लेशं दर्पणमण्डलायितम् ॥३५॥

तस्मिन् शाले सा प्रस्तुता कपिशीर्षाणां मण्डली नानारत्नमयी नैकविधमणिरत्ननिर्मिता सती व्यराजत शुशुभे । सा केत्याह—यया कपिशीर्षमण्डल्या देवानां—स्वसमीक्षणे स्वरूपावलोकनेऽक्लेशमनायासमेव दर्पणमण्डलायितम् दर्पणमण्डलवदाचरितम् ॥३५॥

अथ तत्र द्वितीयप्राकार निर्माणमाह—ज्योतिष्का इति

ज्योतिष्का वरणं च तद्बहिश्चक्रुः स्वर्णमयं द्वितीयकम् ।
तीर्थाधीश्वरपर्युपासनारागैरेव हृद्यं विनिर्मितम् ॥३६॥

ज्योतिष्का देवा. तस्मात् शालाद् बहिः बहिःप्रदेशे मध्यभागे द्वितीयकमपरम् स्वर्णमयं हृद्यं स्वमनसाम् तीर्थाधीश्वरस्य श्रीशान्तिजिनस्य पर्युपासनासु सेवासु ये रागाः प्रेमाणः तैरेव विनिर्मितमिव वरणं प्राकारम् "प्राकारो वरण. शाल." इत्यमरः चक्रुश्च ॥३६॥

अथ तत्र कपिशीर्षकं वर्णयति—तत्रेति

तत्राऽभात् कपिशीर्षसन्ततिर्भास्वद्रत्नमयी तमो घ्नती ।
सर्वद्वीपदिनेशमण्डली. हर्तुं यद् मिलिताऽपि नाऽशकत् ॥३७॥

तत्र प्राकारे भास्वद्रत्नमयी कान्तिमद्रत्ननिर्मिता अत एव तमोऽन्धकारं घ्नती नाशयन्ती कपिशीर्षसन्ततिः कपिशीर्षकसमूहः अभात् राजते स्म. कीदृशं तमो इत्याह यत्तमः हर्तुं नाशयितुम्, सर्वेषां द्वीपानां दिनेशानां सूर्याणां मण्डली समूह. मिलिता एकत्रिताऽपि सती नाशकन्नसमर्था. सूर्यो हि बाह्यं तमो हरति, इयं तु बाह्यमान्तरं चेति व्यतिरेको ध्वन्यते ॥३७॥

अथ बहिर्वर्तितृतीयप्राकारविधानमाह—आतेन इति

आतेने भवनाधिपैर्बहिर्वप्रो रूप्यमयस्तृतीयकः ।
शक्तिं प्राप्तुमिनात् क्षमाधृतो. शेषः कुण्डलनामिवाऽऽगतः ॥३८॥

भवनाधिपैः भवनपतिदेवैः बहि. वप्रः तृतीयकः रूप्यमय. आतेने, निर्मित, यः वप्र. शेषः शेषनाग. क्षमाधृतौ पृथ्वीधारणार्थम्. शेष पृथ्वीं स्वमस्तके वहतीति पौराणिकः । इनात्स्वामिनः शान्तिजिनात् शक्तिं सामर्थ्यं प्राप्तुम् कुण्डलनां कुण्डलाकारत्वमागत. प्राप्त इव स्थित लक्ष्यते स्मेति शेष । उत्प्रेक्षा ॥३८॥

**अथ तत्रापि कपिशीर्षं वर्णयति—विभ्रेजे इति**

**विभ्रेजे कपिशीर्षसंततिस्तस्मिन् हेममयी महाद्युतिः ।**
**ताराणामुपवेशनाय या, पीठश्रेणिरिवातिभास्वरा ॥३९॥**

तस्मिन् तृतीयप्राकारे हेममयी स्वर्णनिर्मिता अत एव महाद्युतिः अतिभास्वरा कपि-शीर्षसंहतिः विशेषेण भ्रेजे शुशुभे या कपिशीर्षसंहतिः ताराणाम्, नक्षत्राणाम्, अत्युच्चत्वादिति भावः । उपवेशनाय अतिभास्वरा, पीठश्रेणिः आसन् पंक्तिरिव स्थिता विभ्रेजे स्थिता लक्ष्यते स्मेति शेषः ॥३९॥

**अथ तत्र द्वारवर्णनमाह—द्वाराणीति**

**द्वाराणि प्रतिवप्रमावभुश्चत्वार्येकसमानि मानतः ।**
**अत्र द्वादशपर्षदः सुखं, वेक्ष्यन्तीति कृताऽऽकृतेरिव ॥४०॥**

प्रतिवप्रं प्रतिप्राकारं मानतः प्रमाणतः एकसमानि तुल्यानि, तुल्यप्रमाणानीत्यर्थः । चत्वारि चतुःसङ्ख्यकानि द्वाराणि अत्र चतुर्द्वारमध्ये द्वादश पर्षदः द्वादशप्रकाराः सुखं वेक्ष्यन्ति सुखं यथा स्यात्तथा—वेक्ष्यन्तीति बुद्ध्या कृता आकृतिः स्वरूपस्थितिर्येन तस्मादिव सभ्यप्रवेश-मपेक्ष्य कृतान्मानादित्यर्थः आवभुः शोभन्ते स्म ! तादृशानि मानतो द्वाराणि यथा सभ्यप्रवेशं सम्बाधो न स्यादिति यावत् ॥४०॥

**अथ तोरणध्वजौ वर्णयति—ये लक्षेष्विति**

**ये लक्षेष्वथवाऽपि कोटिषु, द्रव्येष्वेव भवन्ति हर्म्यिणाम् ।**
**तैरुद्भासितमूर्तयो ध्वजैः, रेजुस्तेषु विचित्रतोरणाः ॥४१॥**

ये तोरणा. ध्वजाः हर्म्यिणाम् धनिकानाम् लक्षेषु लक्षसङ्ख्यकेषु अथवाऽपि कोटिषु तावत्सु द्रव्येषु व्ययितेषु सत्स्वेव भवन्ति, न त्वन्यथा, तैस्तादृशैः ध्वजैः तेषु प्राकारेषु उद्भासितमूर्तयः उत्फुल्लस्वरूपाः विचित्राः नानाविधास्तोरणाः रेजुः ॥४२॥

**अथ तत्र धूपघटीस्थापनमाह—स्फूर्जदिति**

**स्फूर्जद्धूमसमूहदम्भतो, मेघाडम्बरमम्बराङ्गणे ।**
**तन्वाना नवधूपसंभृता गर्गर्यो विबभुस्तदग्रतः ॥४२॥**

तेषां चतुर्णां द्वाराणां अग्रतोऽग्रभागे नवैर्विलक्षणैः धूपैः कृष्णागरुतुरुष्कादिधूपैः संभृताः पूर्णाः गर्गर्यः धूपघटयः स्फूर्जतां प्रसरतां धूमसमूहानां धूपधूमराशीनां दम्भतो व्याजतः अम्ब-रमाकाशं तद्रूपेऽङ्गणे मेघाडम्बरम् वर्णसाम्याद् मेघानुकारं तन्वानाः कुर्वाणा विबभुः विरेजुः ॥४२॥

अथ तत्र वापी निर्माणमाह—वाप्य इति

वाप्यः स्वर्णसरोरुहाः प्रतिद्वारं निर्ममिरेऽमरैस्ततः।
स्नायं स्नायममी जना जिनं पद्मैरत्र महेयुरित्यथ ॥४३॥

अथानन्तरम्, अमरैः देवैः प्रतिद्वारं सर्वेषु द्वारेषु स्वर्णसरोरुहाः स्वादूदकाञ्चिता स्वर्णकमलवत्यः वाप्यः दीर्घिकाः "वापी तु दीर्घिके"त्यमरः। अमी जनाः अत्र वाप्यां स्नायं स्नायं स्नात्वा स्नात्वा पद्मैः कमलैः कृत्वा जिनं शान्तिजिनं महेयुः पूजयेयुरिति बुद्ध्या निर्ममिरे निर्मिताः ॥४३॥

अथो देवच्छन्दनिर्माणमाह—देवेति

देवच्छन्दममन्दभक्तयो, विश्रामाय सुरा जिनेशितुः।
ऐशान्यां मणिभिर्वितेनिरे, मध्येऽष्टापदवप्रमुत्तमैः ॥४४॥

अमन्दभक्तयः अनुपमभक्तिमन्तः सुराः जिनेशितुः शान्तिजिनस्य विश्रामाय द्वितीयप्रहरे विश्रामहेतो ऐशान्यां दिशि उत्तमैः मणिभिः देवच्छन्दं मध्येऽष्टापदवप्रं जात्यस्वर्णमयद्वितीयवप्रस्यान्तरे वितेनिरे निर्मितवन्तः ॥४४॥

अथ द्वारेषु प्रतीहारविभागमाह प्रागिति –

प्राक्प्राकारसहस्रनेत्र—दिग्द्वारे स्वर्णविभासिनौ।
द्वौ वैमानिकनाकिनौ प्रती—हारत्वं दधतुर्महौजसौ ॥४५॥

प्राचः प्रथमस्य प्राकारस्य वप्रस्य सहस्रनेत्रस्येन्द्रस्य या दिक्तस्याः पूर्वदिश इत्यर्थः, द्वारे स्वर्णस्य विभा इव—विभासिनौ कान्तिमन्तौ स्वर्णवर्णौ महौजसौ महाबलौ द्वौ वैमानिकनाकिनौ वैमानिकदेवौ प्रतीहारत्वं द्वारपालत्वं दधतुः स्वीचक्रतुः द्वौ वैमानिकदेवौ पूर्वद्वारपालावित्यर्थः ॥४५॥

अथ प्रथमवप्रं दक्षिणादिग्द्वारपालमाह शुक्लेति--

शुक्लध्यानविवर्णिकामिव, प्रादुष्कृत्य निदर्शयत्तमौ।
मुक्तौ व्यन्तरनिर्जरावपाग्द्वारे द्वारपतित्वमूहतुः ॥४६॥

शुक्लध्यानस्य विवर्णिकां प्रतिकृतिमिव प्रादुःकृत्य प्रादुर्भाव्य मुक्तौ पृथक्कृतौ—'मुक्तौ स्थापितौ वर्णसाम्यात्तां निदर्शयत्तमौ दर्शयन्तौ' निदर्शयत्तमौ दृष्टान्तीकुर्वाणौ व्यन्तरनिर्जरौ व्यन्तरदेवौ अपाग्दारे प्रथमवप्रस्य दक्षिणाद्वारे द्वारपतित्वं द्वारपालत्वमूहतुः दधतुः ॥४६॥

अथाद्यवप्रप्रत्यग्द्वारे द्वारपालमाह-- ज्योतिष्काविति -

ज्योतिष्कावतिकिंशुकद्युती, द्वाःस्थत्वं कलयाम्बभूवतुः।
प्रत्यग्द्वारि गुरो प्रवेक्ष्यतां, लोकानामिव रागचित्तया ॥४७॥

ज्योतिष्कौ सुरौ अतिकिंशुकद्युती किंशुकद्युत्यतिशायिनौ, अत एव प्रवेक्ष्यतां प्रवेशं प्राप्स्यतां लोकानां रागधित्सया रञ्जितुमिच्छयेव स्थितौ प्रत्यग्द्वारे पश्चिमद्वारे द्वाःस्थत्वं द्वारपालत्वं कलयाम्बभूवतुः दधतुः ॥४७॥

**अथोत्तरद्वारपालमाह— द्वार इति—**

**द्वारे चोत्तरदिग्व्यवस्थितौ, नीलाङ्गौ भुवनेश्वरौ सुरौ ।**
**वेत्रित्वं बिभराम्बभवतुः, को वा युक्तमुपेक्षते कृती ? ॥४८॥**

नीलाङ्गौ श्यामवर्णौ भुवनेश्वरौ भुवनपती सुरौ उत्तरस्यां दिशि व्यवस्थितिः स्थितिर्यस्य तस्मिन् उत्तरदिक्स्थे द्वारे वेत्रित्वं वेत्रधारित्वम् द्वारपालत्वमित्यर्थः । द्वारपाला हि वेत्रधारिणो भवन्तीति भावः । बिभराम्बभूवतुः दधतुः । ननु किमिति तौ देवावपि सन्तौ द्वारपालत्वं निकृष्टं दधतुरिति चेन्न, तत्काले तस्यैवोचितत्वादित्याह—को वा कृती अवसरज्ञः युक्तं कालप्राप्तमुपेक्षते त्यजति ? न कोऽपीत्यर्थः । अन्यथौचित्यहानिरिति भावः ॥४८॥

**अथ सुवर्णवप्रद्वारपालमाह—रैवप्रस्येति**

**रैवप्रस्य ततश्चतुर्ष्वपि, द्वारेषु प्रथमक्रमेण च ।**
**देव्योऽस्थुर्विजया जयाऽजिता तुर्या श्रीविजयाऽपराजिता ॥४९॥**

ततः प्रथमवप्रानन्तरम्—रैवप्रस्य स्वर्णप्राकारस्य द्वितीयस्य चतुर्ष्वपि द्वारेषु प्रथमक्रमेण विजया प्रथमे द्वारे, जया द्वितीयद्वारे, अजिता तृतीयद्वारे—अपराजिता अन्यैरनभिभवनीया तुर्या चतुर्थी श्रीविजया चेत्येता देव्यः अस्थुः द्वारपालत्वेन स्थिता बभूवुः ॥४९॥

**अथ तासामस्त्रद्युतिरूप्याह एता इति**

**एताः पाशसृणी करद्वयेऽन्यस्मिन्निर्भयमुद्गरौ तथा ।**
**बिभ्राणास्तुहिनांशुपद्मरैफुल्लेन्दीवरपीवरत्विषः ॥५०॥**

विजया प्रभृतयो देव्यः—करद्वये पाशसृणी पाशं सृणिमङ्कुशं ते द्वे—"—अङ्कुशोऽस्त्री सृणिः स्त्रियामि" त्यमरः । तथा—अन्यस्मिन् अपरे करद्वये निर्भयमुद्गरैश्च—अभयाख्यमुद्रां मुद्गरश्च" बिभ्राणाः धारयन्त्यः क्रमशः तुहिनांशुश्चन्द्र पद्मम् रा सुवर्णम् फुल्लमिन्दीवरञ्च नीलकमलं तद्वत्पीवरा गाढा त्विट् देहच्छविर्यासां इदृश्यः आसन्निति शेषः ॥५०॥

**अथ तृतीयरूप्यप्राकारद्वारपालमाह द्वारेष्विति—**

**द्वारेषु स्थितवांस्तृतीयकप्राकारस्य चतुर्षु तुम्बुरुः ।**
**खट्वाङ्गीनरमुण्डमालितः कोटीरोरुजटाविभूषितः ॥५१॥ (युग्मम्)**

तृतीयकबाह्यवर्तिनः प्राकारस्य चतुर्षु द्वारेषु तुम्बरुः खट्वाङ्गीनराणां मुण्डानां शिरसां माला सञ्जाताऽस्येति तादृशः नरमुण्डमालायुक्तः कपालीसंज्ञः कोटीरेण—मुकुटेन गुरुभिर्महतीभिर्जटाभिश्च विभूषितः जटामुकुटधारीत्याख्यो देवविशेष स्थितवान् ॥५१॥

अथ तत्र चैत्यतरुनिर्माणमाह प्राकारेति—

प्राकारप्रथमस्य मध्यतोऽकार्षुश्चैत्यतरुं वनामराः ।
विंशत्यूनधनुर्महाव्रतसंख्याख्यातशतोच्छ्रयं पृथुम् ॥५२॥

प्राकारेषु प्रथमस्य रत्नवप्रस्य मध्यतः मध्ये वनामराः व्यन्तरदेवाः पृथुम् विस्तारवन्तम् विंशतेः न्यूनानां धनुषाम् महाव्रतस्य सङ्ख्यया पञ्चसङ्ख्यया ख्यातं सहितं यच्छतं तावानुच्छ्रय औन्नत्यं यस्य स तादृशं अशीत्यधिकचतुःशतधनुःप्रमाणोच्छ्रयं चैत्यतरुम् चैत्यवृक्षमकार्षुः रचयामासुः ॥५२॥

अथ तत्र पीठविधानमाह चैत्येति—

चैत्यद्रोरध एव पीठकं नानारत्नमयं च चक्रिरे ।
गीर्वाणाधिपकार्मुकोच्चयं संगृह्येव च नैकवर्णभम् ॥५३॥

चैत्यद्रोः चैत्यवृक्षस्य अधः—मूले एव गीर्वाणाधिपानामिन्द्राणां कार्मुकोच्चयं चापौन्नत्यम् सङ्गृह्य इव च नैकवर्णभं नानावर्णभं चित्रवर्णम् ननारत्नमयश्च पीठकमासनं च चक्रिरे ॥५३॥

अथ तत्र च्छन्दकनिर्माणमाह तेनुरिति—

तेनुश्च्छन्दकमा वनामरास्तस्योपर्यमलैर्मणिव्रजैः ।
त्रैलोक्याक्षिषडंह्रिनीरजच्छायं कान्तिनिरस्तभास्करम् ॥५४॥

वनामराः व्यन्तरदेवाः तस्य पीठस्योपरि अमलैः उज्वलैः मणिव्रजैः मणिसमूहैः कृत्वा कान्त्या निरस्तः पराजितः भास्करो येन तादृशम् त्रैलोक्यस्याक्ष्णां नेत्राणामेव षडंह्रीणां भ्रमराणां कृते नीरजच्छायं कमलतुल्यम् लोकलोचनप्रियम् छन्दकमातेनुः रचयामासुः, अत्र आ इत्युपसर्गः व्यवधानेन परश्च प्रयुक्त इति च्युतसंस्कारता उपसर्गाणामव्यवधानेन धातोः प्रागेव प्रयोगात् ॥५४॥

अथ तत्र सिंहासनविधानमाह तस्येति—

तस्यान्तर्मणिभिर्व्यधुः सुरा रत्नैः प्राङ्मुखसिंहविष्टरम् ।
श्रीवत्साङ्कितविग्रहेव सा भूमिर्येन बभौ विभाविता ॥५५॥

तस्य च्छन्दकस्यान्तर्मध्ये सुराः मणिभिः रत्नैश्च प्राङ्मुखं पूर्वाभिमुखं सिंहविष्टरं सिंहासनं व्यधुः रचयामासुः येन सिंहासनेन विभाविता प्रभाववती कृता सा तत्रत्या भूमिः श्रीवत्सेन तदाख्यरत्नेन अङ्कितो मुद्रितो विग्रहः कायो यस्याः सा तादृशी लक्ष्मीरिव बभौ शुशुभे ॥ उपमा ॥५५॥

अथ पादपीठनिर्माणमाह तस्येति—

तस्याधः पदपीठमद्भुतैर्मणिरत्नैर्विरराज निर्मितम् ।
श्रीसिंहासनराजनायकस्याऽग्रे यद् युवराजतां दधौ ॥५६॥

तस्य सिंहासनस्य अग्रे अद्भुतैरलौकिकैः माणिक्यैः निर्मितम् पदपीठं-पादपीठं विरराज, यत्पदपीठम्–श्रीसिंहासनरूपस्य राजनायकस्य, यद्वा श्रीसिंहासनराजस्य सिंहासनश्रेष्ठस्य नायकस्याधिपतिरूपस्याग्रे युवराजतां दधौ युवराजवद्भाति स्म। रूपकालङ्कारः ॥५६॥

अथ तत्र छत्रं वर्णयति त्रैलोक्येति—

**त्रैलोक्यप्रभुतामिव प्रभोर्दृष्ट्वाऽनन्तरमेव बोधयत्।**
**तत्राऽऽपूर्णसुधांशुमण्डलं छत्राणां त्रितयं व्यभासत ॥५७॥**

तत्र सिंहासनोपरि, अनन्तरम् दीक्षाग्रहणात्प्रागेव दृष्ट्वा चक्रवर्त्तितया त्रिलोकेश्वरत्वं दृष्ट्वा प्रभोः शान्तिजिनस्य त्रैलोक्यप्रभुताम् बोधयद् ज्ञापयदिव आपूर्ण सम्पूर्णं यत् सुधांशुमण्डलं चन्द्रमण्डलं तद्रूपम् छत्राणां त्रितयं छत्रत्रयं व्यभासत शुशुभे ॥५७॥

अथ तत्र चामरं वर्णयति रेजात इति—

**रेजाते सुतरां प्रकीर्णके, हस्तस्थे वटवासिनोः श्रिते।**
**साधुश्रावकवर्गयोर्ध्रुवं, धर्मौ तन्मिषतः पुरास्थितौ ॥५८॥**

वटवासिनोः यक्षयोः हस्तस्थे सिते धवले प्रकीर्णके चामरे सुतरामतिशयेन रेजाते। श्रिते इति पाठस्तु चिन्त्यः, अन्वयालाभादिति बोध्यम्। तयोः प्रकीर्णकयोर्मिषतः व्याजात् साधुश्रावकवर्गयोः पुरास्थितावग्रे स्थितौ धर्मौ ध्रुवं धर्माविव। अत्र तन्मिषत इत्यपह्नुत्यनुप्राणितोत्प्रेक्षा ॥५८॥

अथ धर्मचक्रं वर्णयति स्वर्णेति—

**स्वर्णाब्जस्थितधर्मचक्रकं द्वारे पातकघातकं बभौ।**
**शेषं यत्करणीयमत्र तत् सर्वं व्यन्तरनिर्जरा व्यधुः ॥५९॥**

द्वारे पातकानां घातकं नाशकम् स्वर्णाब्जे कनककमले स्थितं धर्मचक्रकं धर्मचक्रं बभौ, तथा अत्र यत् शेषमवशिष्टं करणीयमासीत्तत्सर्वमेव व्यन्तरनिर्जराः व्यधुश्चक्रुः ॥५९॥

अथ शान्तिजिनस्य तत्र प्रस्थानमाह श्रीशान्तिरिति—

**श्रीशान्तिर्भगवांश्चतुर्विधैः, कोटाकोटिभिरावृतः सुरैः।**
**आप्तोऽथो समवादिमे सृतिस्थाने प्रास्थित स स्थितिं विदन् ॥६०॥**

अथो–अनन्तरम्–भगवान् श्रीशान्तिः कोटाकोटिभिः तत्सङ्ख्यकैः चतुर्विधैः भवनपत्यादिभिः सुरैरावृतः परिवेष्टितः सन् स्थिति अवसरमर्यादां विदन् स्थितिज्ञः आप्तः यथास्थितवस्तुवक्ता स भगवान् श्रीशान्तिः समवशब्द आदिमः पूर्वो यस्य तादृशे सृतिस्थाने सरणस्थाने, समवसरणस्थाने इति यावत् प्रास्थित प्रस्थानं कृतवान् ॥६०॥

अथ स्वर्णकमलनिर्माणमाह—अग्र इति

अग्रे शान्तिविभोर्विकुर्वते, स्माऽथ व्यन्तरनिर्जरा नव ।
हेमाब्जानि विकस्वराणि नु, द्रष्टुं साम्यमिवाऽङ्गशोभया ॥६१॥

अथ प्रस्थानानन्तरम् व्यन्तरनिर्जराः शान्तिविभोरग्रे पादन्यासस्थाने अङ्गशोभया अङ्ग-कान्त्या साम्यं तुल्यतां द्रष्टुमिव नु विकस्वराणि विकसितानि नव नवसङ्ख्यानि हेमाब्जानि सुवर्णकमलानि विकुर्वते स्म ॥६१॥

अथ स्वर्णकमले शान्तिजिनस्य क्रमशः पादन्यासमाह - तेष्विति

तेष्वंह्री न्यधित द्वयोर्द्वयोरादावेव चलन् जगद्गुरुः ।
सप्तान्यानि पुरः पुरः सुरा, भक्त्याढ्याः समचारयन् रयात् ॥६२॥

जगद्गुरुः लोकत्रयप्राणिमात्रोपदेशकः शान्तिजिनः चलन् सन् आदावेव प्रथममेव तेषु कमलेषु द्वयोर्द्वयोः कमलयोः अङ्घ्री चरणौ न्यधित न्यस्तवान् पादन्यासं विदधे इत्यर्थः तथा भक्त्याढ्याः भक्ततमाः सुराः रयात् शीघ्रं शीघ्रम् यथा जिनगतिरोधो न स्यादिति तथा भावः, पुरः पुरोऽग्रेऽग्रे अन्यानि पुरा क्रान्तद्वयातिरिक्तानि सप्त कमलानि समचारयन् सञ्चार-यामासुः चालयन्ति स्म ॥६२॥

अथ देवकृतकमलश्लाघामाह-स्वर्णेति

स्वर्णाब्जानि पदोरधःस्थितान्यालोक्य ब्रुवते स्म निर्जराः ।
निर्ग्रन्थाऽऽलिशिरोऽवतंसकः स्वर्णाधः करणादभूद् विभुः ॥६३॥

निर्जरा देवाः विभोः शान्तिजिनस्य पदोश्चरणयोरधः स्थितानि स्वर्णाब्जानि आलोक्य ब्रुवते स्म, किमित्याह विभुः शान्तिजिनः स्वर्णस्य अधः करणात्पादाधःकरणात् अपरिग्रहेण स्वर्णे दौर्लभ्यबुद्धेरभावादिति ध्वनिः निर्ग्रन्थालिषु अपरिग्रहिषु शिरोऽवतंसकः शिरोमणिरभूत्, महानयं तृष्णाजयो यत्स्वर्णे तिरस्कार इति भावः ॥६३॥

अथ शान्तिजिनस्य समवसरणप्रवेशमाह-राजन्निति—

राजन् सोऽतिशयैरुदित्वरैर्नित्यज्ञानविभासुराकृतिः ।
प्राग्द्वारा समवादिमं स्मृतिस्थानं प्राविशदाऽऽश्रयः श्रियाम् ॥६४॥

नित्यज्ञानेन केवलज्ञानेन विभासुरा उज्ज्वला आकृतिर्यस्य स तादृशः उदित्वरैः प्रकटितै-रतिशयैः प्रसिद्धैर्ज्ञानातिशयादिचतुष्टयैः चतुस्त्रिंशदतिशयैर्वा राजन् शोभमानः श्रियां शश्वद्ज्ञानादि-लक्ष्मीणाम् आश्रय आस्पदम् स शान्तिजिनः प्राग्द्वारा पूर्वद्वारेण समवादिमं स्मृतिस्थानं समवस-रणस्थानं प्राविशत् ॥६४॥

अथ तत्र शान्तिजिनविहितकृत्यमाह चैत्येति—

चैत्यद्रुं स ततः प्रदक्षिणीकृत्याऽर्हन् शमतैकदक्षिणः ।
श्रीतीर्थाय नमो नमः सदेत्यूचे भाद्रपदाम्बुदध्वनिः ॥६५॥

ततः समवसरणप्रवेशानन्तरम् शमतायाम् उपशमे अनुपमशूरः एकदक्षिणः प्रवणः स—क्रोधाद्युपशमविधापने एकदक्षिणः अद्वितीयप्रवीणः अर्हन् शान्तिजिनः चैत्यद्रुं चैत्यवृक्षं प्रदक्षिणीकृत्य भाद्रपदस्य तदाख्यमासस्याम्बुदस्य मेघस्य ध्वनिरिव ध्वनिर्यस्य स तादृशः मेघगम्भीरस्वरः सन् श्रीतीर्थाय सदा नमो नमः इतीत्थमूचे उच्चारयामास ॥६५॥

अथान्यदिक्त्रये प्रभुप्रतिच्छन्दत्रयरचनामाह नाथ इति--

नाथेऽथाऽमरनाथदिग्मुखं सत्येव श्रितसिंहविष्टरे ॥
देवैर्दिक्ष्वपरासु तेनिरे, भर्तुर्मूर्तिसमास्त्रिमूर्तयः ॥६६॥

अथ पूर्वोक्तक्रियानन्तरम् अमरनाथदिग्मुखं पूर्वाभिमुखं यथास्यात्तथा, नाथे शान्तिजिने श्रितसिंहविष्टरे—श्रितमाश्रितं सिंहविष्टरं सिंहासनं येन तादृशे सिंहासनासीने सति, देवैः अपरासु पूर्वातिरिक्तासु दिक्षु भर्तुः शान्तिजिनस्य मूर्तिसमाः आकृतितुल्याः तिस्रो मूर्तयः तेनिरे रचिताः ॥६६॥

अथ मूर्तिमेव वर्णयति देहैरिति—

देहैर्व्यन्तरनिर्मितैः स तैर्व्यद्योतिष्ट विभुश्चतुर्वपुः ।
व्याख्यातुं युगपच्चतुर्विधं धर्मं संघमथैव शासितुम् ॥६७॥

अथ स विभुः शान्तिजिनः व्यन्तरैः निर्मितैः तैः देहैः मूर्तिभिः कृत्वा चत्वारि वपूंषि यस्य तादृशः सन् चतुर्विधं सङ्घं चतुर्विधं दानशीलतपोभावनारूपं धर्मं शासितुं युगपद् व्याख्यातुमिव च, सङ्घं शासितुं धर्मं व्याख्यातुमित्यन्वयः व्यद्योतिष्टादीप्यत । उत्प्रेक्षा ॥६७॥

अथ समवसरणं स्तौति-तदिति—

तत् स्थानं न विवर्ण्यते कथं दृश्यं यत्र विरोधनाम न ? ।
चित्रं पश्यत देवदानवास्तस्थुः प्रीतिभृतो वयस्यवत् ॥६८॥

तत्समवसरणरूपं स्थानं कथं कुतो हेतोर्न विवर्ण्यते स्तूयते ? अपि त्ववश्यं स्तूयते इत्यर्थः, तत्र हेतुमाह—यत्र स्थाने विरोधस्य नामापि न दृश्यं लभ्यम् अर्थस्य तु शब्दाभावे कथैव केति भावः । विरोधाभावमेवाह -चित्रमाश्चर्यं पश्यतः, किन्तदित्याह—देव दानवाश्च शाश्वतविरोधिनोऽपि वयस्य वत्, मित्रवत् प्रीतितः परस्परं प्रेमवन्तः सहैव तस्थुः स्थिताः अतो ज्ञायते विरोधाभावे स्थानस्यैव महिमेति भावः अत्र सहावस्थानहेतुना विरोधाभावस्यानुमानादनुमानाऽलङ्कारः ॥६८॥

अथ दुन्दुभिध्वननमाह देशेति—

देशत्यागमिव प्रवर्तयन्नन्तर्वैरिगणस्य पाप्मनः ।
आकाशे प्रणनाद दुन्दुभिः स्वाम्यैश्वर्यमिव प्रकाशयन् ॥६९॥

पाप्मनः पापात्मकस्य अन्तर्वैरिगणस्य कामक्रोधाद्यान्तरिकशत्रुसमूहस्य देशत्यागं प्रवर्त्तयन् विदधदिव स्वामिनः शान्तिजिनस्य ऐश्वर्यं प्रकाशयन् ख्यापयन्निव आकाशे दुन्दुभिः प्रणनाद शब्दायितवान् अन्योऽपि राजादिः पटहादिवादनेन शत्रोर्निर्वासनं स्वमहत्वादि च ख्यापयतीति उत्प्रेक्षाऽलङ्कारः ॥६९॥

अथ ध्वजं वर्णयति व्यभ्रेति—

व्यभ्राजिष्ट सुरेश्वरध्वजः, प्राकारत्रितयीपुरःसरः ।
कीर्तिस्तम्भ इवोपसर्पतां भव्यानां सुकृताधिवासिनाम् ॥७०॥

प्रकारत्रितयस्य पुरःसरः अग्रे स्थितः सुरेश्वरध्वजः इन्द्रध्वजः उपसर्पतामागच्छताम् सुकृताधिवासिनाम् पुण्यात्मनां भव्यानां कीर्तिस्तम्भ इव व्यभ्राजिष्ट शुशुभे । उपमा ॥७०॥

अथ तत्र वैमानिकदेव्य ऊर्ध्वस्थिता धर्मं शृण्वन्तीत्याह स्वरिति—

स्वर्वासिप्रमदाः प्रमोदतः, प्राग्द्वारेण कृतप्रवेशनाः ।
दत्त्वा त्रित्वमिताः प्रदक्षिणास्तीर्थं तीर्थपतिं प्रणम्य च ॥७१॥
आग्नेयां दिशि तस्थुरूर्ध्वका, मुक्त्वा साधुजनार्यिकास्थितिम्,
तन्मध्येऽवधिबोधबन्धुराः, किं जानन्ति न तादृशा खलु ॥७२॥

(युग्मम्)

प्रमोदतः सहर्षम् प्राग्द्वारेण कृतं प्रवेशनं याभिस्ताः तादृश्यः प्रविष्टाः स्वर्वासिन्यः प्रमदाः स्त्रियो वैमानिकदेव्यः त्रित्वमिताः तिस्रः प्रदक्षिणाः दत्वा कृत्वा तीर्थं तीर्थपतिं शान्तिजिनं च प्रणम्य अवधिबोधेन अवधिज्ञानेन बन्धुराः शोभमानाः आग्नेय्यां दिशि साधुजनानामार्यिकाणां साध्वीनां च स्थितिं स्थानं मुक्त्वा, वर्जयित्वा, तन्मध्ये ऊर्ध्वका ऊर्ध्वाः तस्थुः तासां तादृशज्ञानं समर्थयति—तादृशाः अवधिज्ञानयुक्ताः किं न जानन्ति अपि तु जानन्तीत्यर्थः ॥७१,७२॥

शेषमिति—

शेषं तच्च निकायनायकस्त्रैणं याम्यदिशा प्रविश्य च ।
सर्वं पूर्वविधिं यथास्थितं, कृत्वा चास्थित नैर्ऋते क्रमात ॥७३॥

तत्प्रसिद्धं शेषम् वैमानिकदेव्या अवशिष्टं निकायनायकानां भवनपतिव्यन्तरज्योतिष्कानां स्त्रैणं स्त्रीसमूहश्च याम्यदिशा दक्षिणदिशा प्रविश्य च यथास्थितं यथाविधि पूर्वविधिं प्रदक्षिणाप्रणामादिविधिं सर्वं कृत्वा यथाक्रमं नैर्ऋते कोणे आस्थितोपविष्टम् ॥७३॥

अथ देवावस्थानमाह ज्योतिष्का इति—

ज्योतिष्का भवनाधिपास्तथा, सर्वे व्यन्तरनिर्जराः पुनः ।
प्रत्यग्द्वारकृतप्रविष्टयो, वायव्यां स्थितिवेदिनः स्थिताः ॥७४॥

पुनः पश्चात् ज्योतिष्काः भवनाधिपाः तथा सर्वे व्यन्तरनिर्जराश्च स्थितिवेदिनः विधिज्ञाः प्रत्यग्द्वारेण पश्चिमद्वारेण कृता प्रवृष्टिर्यैः तादृशा प्रविष्टाः सन्तः वायव्यां दिशि स्थिताः ॥७४॥

अथ कल्पनिवासिनामवस्थानमाह कौवेर्येति—

कौवेर्या ककुभा प्रवेशनं, कृत्वा तीर्थपतिं विनम्य च ।
देवाः कल्पनिवासिनो नरा, नार्यश्चेशदिशि स्थितिं व्यधुः ॥७५॥

कल्पनिवासिनो देवाः वैमानिकाः नरा नार्यश्च कौवेर्य्या उत्तरया ककुभा दिशा प्रवेशनं कृत्वा तीर्थपतिं शान्तिजिनं विनम्य च ईशदिशि ऐशान्यां स्थितिं व्यधु' स्थितवन्तः ॥७५॥

अथ तत्र भयाद्यभावमाह नेति

नासीदत्र भयं न दुष्कथा, मात्सर्यं न च किञ्चन कचित् ।
आबाधाऽपि न नो नियन्त्रणा, तीर्थाधीशमहाप्रभावतः ॥७६॥

अत्र समवसरणे तीर्थाधीशस्य शान्तिजिनस्य महतः प्रभावतो महात्म्यतः क्वचित्किञ्चन भयं नासीत्, दुष्कथा असद्वार्त्ता न, मात्सर्यं न, आबाधा पीडा च न, नियन्त्रणा परितापश्च न आसीत् ॥७६॥

अथ तत्र सिंहादीनामप्यवस्थानमाह वप्रस्येति—

वप्रस्याऽऽद्यपरस्य मध्यतः, पारीन्द्रद्विरदादयोऽखिलाः ।
तिर्यञ्चोऽपि यथासुखं मिथ—स्तस्थुः प्रेमभरोद्धुराशयाः ॥७७॥

आदेः प्रथमादपरस्य द्वितीयस्य वप्रस्य प्रकारस्य मध्यतः मध्ये अखिलाः पारीन्द्रद्विरदादयः सिंहहस्त्यादय. तिर्यञ्चः तिर्यग्योनयोऽपि मिथः परस्परं प्रेमभरेण सहजविरोधत्यागपूर्वक-प्रेमातिशयेन उद्धुराशयाः भृतमनसः सन्तः यथासुखं सुखपूर्वकं तस्थुः ॥७७॥

अथ वाहनावस्थानमाह अन्तेति—

अन्तप्रान्तिमवप्रमासत, क्ष्मापालामरदेवविद्विषाम् ।
यानान्यक्षतकानि संकटेऽपीड्योऽयं महिमा महेशितुः ॥७८॥

क्ष्मापालानां नरेन्द्राणां अमराणां देवानाम् देवविद्विषामसुराणां च अक्षतकानि देवविद्विषा-मसुराणाञ्च यानानि वाहनानि, सङ्कटेऽप्यक्षतकान्यभङ्गानि, अन्तप्रान्तिमवप्रं, तृतीयवप्रम-ध्ये, आसत अस्थुः, ननु स्थलसङ्कोचेऽप्यक्षतानि तानि कथं तस्थुरिति चेत्तत्राह—अयं सर्वेषां

समावेशरूपः महेशितुः शान्तिजिनस्य ईड्यः स्तुत्यः महिमा महात्म्यम् तन्माहात्म्यादेव तथाऽभूदिति भावः ॥७८॥

अथ चक्रायुधस्य तत्समाचारप्राप्तिमाह श्रीति—

श्रीचक्रायुधभूपुरन्दरं, वेगादेत्य वनाद् वनाऽवनाः ।
त्रैलोक्यप्रभुनित्यकेवलोत्पत्त्याऽथ प्रयता व्यवर्धयन् ॥७९॥

अथ केवलज्ञानोत्पत्त्यनन्तरम्, वनावनाः उद्यानपालकाः प्रयताः स्वविधितत्पराः सन्तः वनाद् वेगादेत्य श्रीचक्रायुधं तदाख्यम् शान्तिपुत्रं भूपुरन्दरं महीपम् त्रैलोक्यप्रभोः शान्तिजिनस्य नित्यस्य उत्पत्त्यनन्तरं सदा स्थायिनः केवलस्य तदाख्यज्ञानस्योत्पत्त्या तत्सूचनेन कृत्वा व्यवर्धयन् वर्धापनां ददुः ॥७९॥

अथ चक्रायुधगमनमाह सदिति—

सत्कृत्याऽवनिपालपुङ्गवस्तान् सर्वांश्च वनीपतीनथ ।
नन्तुं तीर्थपतिं रयादयाज्ज्ञः को वा सुकृते प्रमाद्यति ॥८०॥

अथ अवनिपालेषु पुङ्गवः श्रेष्ठः चक्रायुधः तान् वृत्तान्तनिवेदकान् सर्वान् वनीपतीन् उद्यानपालकान् सत्कृत्य तीर्थपतिं शान्तिजिनं नन्तुं रयाद्वेगादयादगमत्, तदेव समर्थयति को वा पुमान् सुकृते पुण्यविधौ प्रमाद्यति अलसायते ? न कोऽपीत्यर्थः । सामान्येन विशेषसमर्थनादर्थान्तरन्यासः ॥८०॥

अथ तस्य समवसरणप्राप्तिमाह औदीच्यमिति—

औदीच्यं सुकृतालयस्य तद्, द्वारं प्राप वसुन्धरापतिः ।
कृत्वा वैनयिकीं क्रियां स्वयं, पञ्चैवाऽभिगमांश्च सोऽविशत् ॥८१॥

स वसुन्धरापतिश्चक्रायुधः सुकृतालयस्य पुण्यस्थानस्य तत् तस्य समवसरणस्य औदीच्यमुत्तरस्थितं द्वारं प्राप, तथा स्वयं वैनयिकीं क्रियाम् पञ्चाभिगमांश्चैव कृत्वाऽविशत् ॥८१॥

अथ तत्कृतप्रदक्षिणाद्याह सर्वज्ञेति—

सर्वज्ञ ! त्वदुपासनां विना, भ्रान्तोऽहं कुगतित्रये पुरा ।
भूपालः कथयन्निति प्रभोस्तिस्रः स प्रददौ प्रदक्षिणाः ॥८२॥

सर्वज्ञ ! अहं पुरा त्वदुपासनां विना कुगतित्रये नारकादौ भ्रान्तः इतीत्थम् कथयन् स भूपालश्चक्रायुधः प्रभोः शान्तिजिनस्य तिस्रः प्रदक्षिणाः प्रददौ चकार अनुशक्रं निषसाद च ॥८२॥

अथ तस्यानन्दाश्रुमार्जनमाह आनन्दमिति—

आनन्दं परमं निरत्ययं, संप्राप्स्यामि जिनेशदर्शनात् ।
किं मेऽनेन विचिन्त्य चेतसेत्यानन्दाश्रु लुलोप पार्थिवः ॥८३॥

जिनेशस्य शान्तिजिनस्य दर्शनाद्दर्शनं प्राप्य निरत्ययमविनाशि परमं सर्वोत्कृष्टमानन्दं सम्प्राप्स्यामि, अनेन अश्रुणा मे किं ? न किमपि प्रयोजनमित्यर्थः, इतीत्थम् चेतसा विचिन्त्य पार्थिवः चक्रायुधः आनन्दाश्रु हर्षजं बाष्पं लुलोप मार्जयामास ॥८३॥

**अथ स्तुतिप्रक्रमं वर्णयति स्वरिति--**

**स्वर्णाथोऽवनिनाथकुञ्जरोऽप्येपोऽथ प्रणिपत्य भक्तितः ।**
**निर्मायाऽञ्जलिमात्ममूर्धनि, स्तोतुं प्राक्रमतैनमीश्वरम् ॥८४॥**

अथान्तरम् स्वर्नाथः शक्रः एव प्रस्तुतः अवनिनाथेषु महीपेषु कुञ्जरो हस्तीव श्रेष्ठः चक्रायुधोऽपि भक्तितः प्रणिपत्य प्रणम्य आत्ममूर्धनि स्वललाटेऽञ्जलिं करसम्पुटं निर्माय बध्वा ईश्वरम् शान्तिजिनेश्वरमेवं वक्ष्यमाणप्रकारेण स्तोतुं प्राक्रमत प्रारब्धवान्, न हि विज्ञोऽवसरेषु मुह्यतीति भावः ॥८४॥

**अथ स्तुतिमेवाह-जीवस्येति--**

**जीवस्येव मतिर्न यद्यपि, स्वामिन् ! मे रसनासहस्रकम् ।**
**शेषस्येव मुखे तथाऽपि ते, कांश्चित् स्तौमि गुणान् त्वदाश्रितः ॥८५॥**

स्वामिन् ! यद्यपि जीवस्य देवगुरोरिव मतिर्बुद्धिर्नास्ति मे किञ्च शेषस्य शेषनागस्येव मुखे रसनानां जिह्वानां सहस्रकम् नेत्यन्वयः शेषस्य सहस्रमुखत्वात् मम चैकमुखत्वात्, तथापि त्वद्गुणबाहुल्यमपेक्ष्य तत्कीर्तनोपयुक्तमतिजिह्वाबहुत्वरूपसामग्र्यभावेऽपि, त्वदाश्रितः त्वदधीन इत्यतो हेतोः ते तव कांश्चिद् गुणान् स्तौमि सामर्थ्यभावेन सर्वेषां स्तोतुमशक्यत्वात् अनुरूपमाचरन् न दुष्यतीति भाव जीवो वा शेषो वा त्वां स्तोतुं समर्थः कथंचिन्नाऽन्य इति ध्वनि. ॥ ८५ ॥

**कर्माणीति—**

**कर्माण्यष्ट जिनेन्द्र ! सर्वथा, नीतानि प्रशमं त्वयौजसा ।**
**तार्क्ष्येणेव कुलानि भोगिनां, नित्यानन्दनिवर्तकान्यलम् ॥८६॥**

जिनेन्द्र ! त्वया ओजसा स्ववीर्येण कृत्वा नित्यानन्दस्य मोक्षसुखस्य निवर्तकानि प्रतिबन्धकानि आवारकानीति यावत् अलं बलवन्ति अष्टकर्माणि ज्ञानावरणीयादीनि, तार्क्ष्येण गरुडेन भोगिनां सर्पाणां कुलानीव सर्वथा अत्यन्तरूपेण प्रशमं क्षयं नीतानि ॥८६॥

**मोह इति—**

**मोहोऽयं भवता विनिर्जितः, सर्वत्राऽस्खलितोरुविक्रमः ।**
**प्राकाम्यं यदि वा बिभर्ति नो, शार्दूलः किमु सिंहनिर्जये ॥८७॥**

भवता सर्वत्र सर्वप्राणिषु अस्खलितोऽप्रतिहतः गुरुः महान् विक्रमः सामर्थ्यं यस्य तादृशः सर्वविजयी अयं प्रसिद्धः मोहः ममत्वादिबुद्धिः विनिर्जितः तिरस्कृत गतमोहो भवानित्यर्थः ।

भवतः स्वाभाविकमेवैतत्तत्र दृष्टान्तमाह–वैधर्म्येण–यदि वा शार्दूलः व्याघ्रः सिंहनिर्जये सिंहाभिभवे प्राकाम्यं प्रगुणत्वं किमु नो बिभर्ति? अपि तु बिभर्त्येवेत्यर्थः शार्दूलसदृशस्य भवतः सिंहसदृश-मोहजय उचित एवेति भावः ॥८७॥

सम्प्रति वागतिशयं वर्णयति वाणीति–

वाणी ते भुवनोपकारिणी, गङ्गेवाऽधिरजोऽपहारिणी ।
आसाद्याऽचलमुत्तमं पदं, भव्यान् श्रौतपथाद् निवर्तते ॥८८॥

ते तव, वाणी गङ्गा इव, अधिकानां रजसां धूलीनां शरीरमलानां वा, आत्मदोषाणाञ्च अपहारिणी सती, अत एव भुवनानां लोकानामुपकारिणी भव्यान् प्राणिनः श्रौतपथात् श्रुतमार्ग-माश्रित्य उत्तमं सर्वोत्कृष्टम्, अचलमविनाशि, पदं स्थानम्, मुक्तिपदमित्यर्थः आसाद्य प्रापयित्वा, निवर्तते विरमति, नत्वन्तरा, तव वाणी मुक्तिदायिनीति तव महान् वागतिशयोऽसाधारण इति भावः ॥८८॥

सम्प्रति नाम स्तौति श्रीति–

श्रीशान्ते ! तव नाम कामितं, भव्यैः संस्मृतमातनोति यत् ।
चित्रं तत्र न यत् सुरद्रुमो, देवानामपि तद् विचेतनः ॥८९॥

श्रीशान्ते ! यद्यतः भव्यैः संस्मृतम् कीर्तितं ध्यातं वा तव नामाभिधानम् कामितमभिल-षितमातनोति करोति, तत्र कामितकरणविषये न चित्रं किमपि यद्यतः विचेतनः जडोऽपि सुर-द्रुमः कल्पवृक्षः देवानाम् तत्कामितमातनोति, यदि विचेतनः तादृशः तर्हि केवलिन. तव नाम्नः तत्कुतश्चित्रां जायते ! इति भावः कल्पद्रुमो देवोपकारक एव, तव नाम तु भव्यमात्राणा-मिति व्यतिरेको ध्वन्यते ॥८९॥

मम त्वय्येव रतिरित्याह ब्रह्मेति–

ब्रह्मादिष्वपि दैवतेषु मे, चित्तं त्वत्पदपद्मसेवने ।
रोलम्बस्य यथैव मल्लिकापुष्पौघेष्वपि मालतीसुमे ॥९०॥

मे मम चित्तं ब्रह्मादिषु दैवतेषु सत्स्वपि त्वत्पदपद्मसेवने एव, नान्यत्र, अत्र च स्वमनः-प्रवृत्तिरेव हेतुः तत्र दृष्टान्तमाह–यथैव मल्लिकापुष्पाणामोघेषु राशिषु सत्स्वपि रोलम्बस्य भ्रम-रस्य मालत्याः सुमे पुष्पे एव चित्तं नान्यत्र–तत्रैव विलक्षणचित्ताह्लादकत्वधर्मसत्त्वात् तथेत्यर्थः । चित्तवृत्तिर्हि विचित्रेति भावः ॥९०॥

अथ सेवनाद्विशिष्टफलप्राप्तिमाह सेवन्त इति–

सेवन्ते तव येऽङ्घ्रिपङ्कजं, ते स्युः श्रीगुणभद्रसूरयः ।
ये ध्यायन्ति भवन्तमादरात् तेषां किञ्चन नास्ति दुर्लभम् ॥९१॥

इति ये भव्याः तव अङ्घ्रिपङ्कजं पादपद्मं सेवन्ते ते भव्याः श्रीः लक्ष्मीः गुणाः भद्राणि च तेषां तादृशाश्च श्रीमन्तः गुणवन्तः कल्याणवन्तश्च, ते च ते सूरयो विद्वांसश्च स्युः अनेन स्वगुरुनामसूचितम् ग्रन्थकर्त्रा। तथा ये भवन्तमादरात् श्रद्धापूर्वकं ध्यायन्ति तेषां किञ्चन मुक्त्यादि दुर्लभं नास्ति, सर्वमपि प्राप्नुवन्ति ते भवत्प्रभावादिति सर्वकामदो भवानिति सर्वथा सर्वैर्ध्येय एवेति भावः ॥९१॥

**संप्रति स्वस्य भक्तिमात्रेण प्रयोजनमित्याह राज्यमिति—**

**राज्यं शान्तिजिन ! त्वदर्थये, नाहं चक्रिपदं च तादृशम्।**
**स्वाराज्यं विबुधस्तुतं च नो, त्वत्सेवामनिशं भवे भवे ॥९२॥**

शान्तिजिन ! अहम् त्वद्भवत्सकाशात् तादृशमतिविशालं राज्यं चक्रिपदं च नार्थये इच्छामि, तथा विबुधैः देवैः स्तुतं प्रशस्तं स्वाराज्यं स्वर्गाधिपत्यं च नो नैव अर्थये तर्हि किमर्थयसे इति चेत्तत्राह—भवे भवे नत्वैकत्रैव, अनिशं सततं त्वत्सेवाम्, अर्थये, राज्यादीनां कर्मबन्धवर्धकत्वात्त्वत्सेवायाश्च कर्मबन्धच्छेदकत्वात्वत्सेवायामेव मे प्रीतिरिति भावः ॥९२॥

**अथ प्रणामवर्णनेन स्तुतिमुपसंहरति इतीति—**

**इत्याध्याय सुरेन्द्रपार्थिवौ, भर्तुः संस्तवनं गुणोज्ज्वलम्।**
**मूर्ध्नः स्वस्य तदोत्तमाङ्गतां, भूयः कर्तुमिव प्रणेमतुः ॥९३॥**

सुरेन्द्रः शक्रः पार्थिवः चक्रायुधश्च तौ गुणौज्ज्वलम् प्रकृष्टगुणं संस्तवनं गुणकीर्त्तनमित्युक्तप्रकारेणाध्याय विधाय तदा स्तुत्यन्ते स्वस्य मूर्ध्नः शिरसः उत्तमाङ्गताम् प्रशस्तावयवत्वम्, भूयः नाम्नोत्तमाङ्गतायाः सत्त्वेऽपि नमस्कारक्रिययाऽपि कर्तुमिव प्रणेमतुः, तदेव शिर उत्तमाङ्गं यज्जिनं प्रणमतीति भावः ॥उत्प्रेक्षा ॥९३॥

**अथ जिनस्य धर्मदेशनाविधाने कारणमाह उद्धर्तुमिति--**

**उद्धर्तुं भविकान् भवाम्बुधेः, पोते सत्यपि मज्जतो भृशम्।**
**पञ्चत्रिंशदहार्य्यगीर्गुणां, प्रारेभेऽथ स धर्मदेशनाम् ॥९४॥**

अथ स्तुत्यनन्तरम् स शान्तिजिनः पोते तरणसाधने नावादिरूपे धर्मे सत्यपि भृशमत्यर्थं मज्जतः ब्रुडतः भविकान् भव्यान् भवाम्बुधेः सकाशादुद्धर्तुम् भवपरम्परां त्याजयितुम् पञ्चत्रिंशत् तत्सङ्ख्यका, अहार्य्याः अप्रतिमोचनीया गीर्गुणाः वागतिशया यस्यां तां तादृशीम् धर्मदेशनां प्रारेभे ॥९४॥

**सम्प्रतिमानुष्यकं स्तौति संपदिति—**

**संपद्वर्धनहेतुदक्षिणावर्तं शङ्खमिवातिनिर्मलम्।**
**चिन्तारत्नमिवेप्सितप्रदं मानुष्यं परमस्ति दुर्लभम् ॥९५॥**

दक्षिणावर्त्तम् दक्षिणेन सव्येन आवर्तो भ्रमिर्यस्य तादृशं प्रसिद्धं शङ्खमिव सम्पद्वर्धनस्य हेतुः कारणम् दक्षिणावर्त्तः धनं वर्धयवतीति तद्विदः । तथा अतिनिर्मलम् अतिधवलम् गुणोज्ज्वलञ्च, तथा चिन्तारत्नमिव ईप्सितप्रदम् मानुष्यम्, मुक्त्यादिसर्वेष्टस्य मनुष्यभव एव मनुष्यैकसाध्यत्वादिति भावः परमत्यन्तं जन्मशतसहस्रेणापि दुर्लभमस्ति ॥९५॥

ननु ततः किमित्याह लब्ध्वेति--

लब्ध्वा तत् सुकृतेन भूयसा, सर्वार्थप्रतिपत्तिसाधनम् ।
संसारभ्रमसंनिबन्धनं, भव्या ! संत्यजत प्रमादकम् ॥९६॥

भव्याः ! सर्वेषामर्थानां प्रयोजनानां प्रतिपत्तेः प्राप्तेः साधनं तन्मानुष्यकं भूयसा प्रचुरेण सुकृतेन पुण्येन हेतुना लब्ध्वा समारे भ्रमस्य भ्रमणस्य भवपरम्परायाः निबन्धनं कारणं प्रमादकं प्रमादम् धर्मादिविषयालस्यं सत्यजत अन्यथा तल्लब्धमपि न सूपयुक्तमिति भावः॥९६॥

प्रमादादनिष्टमाह रे त्वमिति—

रे ! त्वं याहि कुरु प्रयोजनं, निर्दिष्टं मयका यदस्ति ते ।
ईदृग्वाक्श्रवणं प्रमादतः, केषाञ्चित् सदृशेऽप्यहो ! भवे ॥९७॥

अहो ! इति खेदे, खेदो यत् भवे जन्मनि सदृशे समानेऽपि सति मनुष्यमात्रे मानुष्यके मनुष्यस्योभयत्र त्वस्य तुल्यत्वेऽपि सति, प्रमादतः प्रमादाश्रयणात् कृत्वा केषाञ्चिन्मनुष्याणाम् रे इति निकृष्टसम्बोधनम्, त्वं याहि ते तुभ्यं मयका मया यन्निर्दिष्टमादिष्टं प्रयोजनं कार्यमस्ति तत्कुरु, इतीदृशः वाचः आज्ञावाचः श्रवणम् अस्तीति शेषः प्रमादादेव जन्तुः दास्यमनुभवतीति भावः ॥९७॥

प्रमादस्यानिष्टान्तरमाह प्रेष्यत्वमिति--

प्रेष्यत्वं परकर्मवृत्तिता, दौर्विध्यं परितोऽपमानता ।
दौर्भाग्यं प्रियविप्रयोगताऽनिष्टं किं न भवेत् प्रमादतः ? ॥९८॥

प्रमादतः प्रमादाश्रयणतः परस्यान्यस्य कर्मणि कार्ये वृत्तिता स्थायितारूपं प्रेष्यत्वं दासता परितः सर्वथा अपमानता तिरस्काररूपम् दौर्विध्यम् दुस्स्थितता, प्रियेण विप्रयोगता वियोगरूपं दौर्भाग्यमित्येतद्भवति, किमनिष्टं न भवेत् ? अपि तु सर्वमेवानिष्टं भवत्येवेत्यर्थः ॥९८॥

कैवल्यस्येति —

कैवल्यस्य सुखानि कस्य न, स्वायत्तानि भवेयुरङ्गिनः ? ।
यद्येतेऽत्र चतुर्गतिप्रिया, रुन्ध्युर्वर्त्मनि नो कषायकाः ॥९९॥

कस्याङ्गिनः प्राणिनः कैवल्यस्य मोक्षस्य सुखानि स्वायत्तानि स्वाधीनानि न भवेयुः अपि तु सर्वस्यैव भवेयुरेव यदि अत्र कैवल्यप्रापके वर्त्मनि मार्गे धर्माचरणादौ चतुर्गतिप्रियाः नारकादिगतिकारकाः एते प्रसिद्धाः कषायकाः कषायाः क्रोधमानादयः नो नैव रुन्ध्युः विघ्नीभवेयुः कषायत्यागे मुक्तिः सुलभेति भावः ॥८८॥

**तत्कषायजयोपायमाह संसारस्येति--**

**संसारस्य महानियोगिनश्चत्वारः प्रबला कषायकाः ।**
**क्षान्त्यादिप्रमुखैर्महाभटैर्जित्वैतान् जन एति निर्वृतिम् ॥१००॥**

चत्वारः क्रोधादयः प्रबलाः बलवन्तः कषायाः संसारस्य महानियोगिनः अतिनियोजका वृद्धिकारका इति यावत् महानियोगिनः परमाज्ञाकारिणः भृत्याः, जनः क्षान्त्यादिप्रमुखैः क्षमादिभिः महाभटैः कृत्वा एतान् क्रोधादीन् जित्वाऽभिभूय निवृतिं मोक्षं सुखं वा एति प्राप्नोति ॥१००॥

**अथ क्रोधस्य दोषानाह पूज्यमिति--**

**पूज्यं नो पितरं न मातरं, ज्येष्ठं भ्रातरमेव नाङ्गजम् ।**
**नैव स्वामिनमेव मन्यते, क्रोधावेशवशंवदः पुमान् ॥१०१॥**

क्रोधावेशस्य वशंवदोऽधीनः क्रोधीत्यर्थः, पुमान् जनः, पितरं जनकं पूज्यं सेव्यमादरणीयं वा नो मन्यते, पूज्यं नो मन्यते इत्यस्य सर्वत्रैवान्वयः, तथा, मातरं न, पूज्यां मन्यते इति लिङ्गव्यत्ययेनान्वयः, ज्येष्ठं भ्रातरमङ्गजं पुत्रं ज्येष्ठमेव च न पूज्यं मन्यते, तथा स्वामिनमेव, पूज्यं नैव मन्यते, विवेकविनाशकः क्रोध इति भावः ॥१०१॥

**क्रोधत्यागमुपदिशति प्रीतिमिति--**

**प्रीतिं यश्चिरकालपालितां प्रध्वंसं नयति क्षणादपि ।**
**स्वर्भानुः शशभृत्कलामिव, क्रोधं तं विदधीत कः सुधीः ? ॥१०२॥**

यः क्रोधः क्षणादपि क्षत्रमात्रेणैव प्रीतिं स्नेहं प्रध्वंसं नयति भनक्ति, स्वर्भानुः राहुः 'तमस्तु राहुः स्वर्भानुरि" त्यमरः । शशभृतः चन्द्रस्य कलामिव, तं तादृशमनिष्टकरं क्रोधं कः सुधीः विदधीत कुर्यात् ? न कोऽपि कुर्यादित्यर्थः क्रोधोऽगुणोऽतस्त्याज्य इति भावः ॥१०२॥

**क्रोधत्यागे हेत्वन्तरमप्याह सर्वाणीति--**

**सर्वाण्येव तपांसि भस्मसात्, कर्तुं यस्य पुनः प्रगल्भता ।**
**दारुणीव कृपीटजन्मनः, कस्तं क्रोधमपाकरोतु न ? ॥१०३॥**

पुनः यस्य क्रोधस्य सर्वाण्येव तपांसि कृपीटजन्मनोऽग्नेः दारुणि काष्ठानिव भस्मसात्कर्तुं ध्वंसितुं प्रगल्भता सामर्थ्यम् तं महानर्थकारकं क्रोधं कः न अपाकरोतु त्यजतु अपि सर्वै रेव स क्रोधस्त्याज्य एवेति भावः ॥१०३॥

सम्प्रतिमानत्यागमुपदिशति ज्ञानमिति—

ज्ञानं यत्र न चावभासते, निःशेषार्थविबोधनक्षमम् ।
भास्वद्बिम्बमिवाम्बुदोदये, मानं कः सुकृती तमाश्रयेत् ? ॥१०४॥

यत्र यस्मिन् माने सति निःशेषाणां सकलानामर्थानां पदार्थानां विबोधने प्रकाशने क्षमं समर्थं ज्ञानम्, अम्बुदस्य मेघस्योदये उन्नतौ भास्वतः सूर्यस्य बिम्बं मण्डलमिव न च नैव अवभासते प्रकाशते, तं तादृशं सर्वज्ञानविलोपिनं मानमभिमानं कः सुकृती धीमान् पुण्यवान् वा समाश्रयेत् कुर्यात्? न कोऽपीत्यर्थः । धीमता मानस्त्याज्य इति भाव. ॥१०४॥

मानस्य प्रकारान्तरेणापि त्याज्यत्वमाह राज्य इति—

राज्ये स्थापितमुत्तमैर्गुणैरागत्य स्वत एव रञ्जितैः ।
निःशङ्को विनयं निहन्ति यस्तं मानं वितनोतु को बुधः ॥१०५॥

यः मानः निःशङ्कः निरातङ्क' सन् निरङ्कुश इति यावत्, रञ्जितैः अनुरक्तैः आकृष्टैरित्यर्थः, उत्तमैः गुणैः स्वत एव, न तु प्रयासादिना आगत्य प्रकटीभूय राज्ये प्रधानपदे स्थापितं निवेशितं विनयं गुरुषु नम्रत्वं निहन्ति नाशयति मानी ह्यविनयी भवतीति भाव' । तं तादृशं विनयघातकं मानं को बुधः वितनोतु करोतु ? न कोऽपि करोत्वित्यर्थ' ।-मानकरणं मूर्खजनोचितमिति भाव : ॥ १०५ ॥

विनयनाशनमेव विवृणोति आरूढ इति—

आरूढः किल गर्वपर्वतं, सर्वं खर्वमवेक्षते परम् ।
नाभ्युत्थानकथां करोति नाऽभ्यायाते गुरुबान्धवेऽपि यः ॥१०६॥

गर्व एव अत्युच्चत्वात् दुष्प्राप्यत्वात्पर्वत. तमारूढ आश्रितः. मानी जन' किलेत्यप्रिये सर्वं खर्वं परमन्यं जनं वामनम्, स्वस्मात् न्यूनमित्यर्थः । 'खर्वो ह्रस्वश्च वामन' इत्यमरः । अवेक्षते मन्यते तत्र युक्तिमाह—य. मानी ना गुरौ बान्धवे च श्रेष्ठे बान्धवे वा अभ्यायाते स्वसम्मुखमागतेऽपि सति अभ्युत्थानकथामभ्युत्थानं वार्त्तां च न करोति, स्वं महान्तमभिमन्यमानः गुरूनप्यवजानाति, गुरोरभ्युत्थानादि हि विनयप्रयोज्यमिति भाव : ॥१०६॥

मानेऽऽपत्यन्तरमाह मानमिति—

मानं यस्तनुते स माननां, राजादेर्न कदाऽपि विन्दति ।
दुःखान्येव हि दुर्गदुर्गतौ, शोचन् संविनयं विना मृतः ॥१०७॥

यो जनो मानं तनुते करोति स राजादेः नृपादेः सकाशात् माननां सत्कारं कदापि न विन्दति प्राप्नोति, मानिनं प्रति सर्वेषामेव तिरस्कारबुद्धेरिति भावः । अविनयस्तिरस्कारमूलमिति

यावत् । हि किञ्च संविनयं–हि यतः संविनयं सम्यग्विनयं विना मृतः दुर्गायां दुर्गः–दुर्गमस्थानं तद्रूपायां दुर्गतौ शोचन् दुर्गतौ तिर्यञ्चादौ दुःखान्येव शोचन् आर्त्तध्यानादितत्परः उत्पद्यते इतिशेषः– मानी दुर्गतिमाप्नोति, दुःखविकल्प एव च म्रियते इत्यर्थः ॥१०७॥

**अथ मायां दूषयति मायामिति**

**मायां मुग्धजनानुरञ्जिकां, पण्यस्त्रीमिव दूरतोऽपि ये ।**
**नोज्झन्त्यैहिकपारलौकिक–स्वार्थं ते गमयन्ति निश्चितम् ॥१०८॥**

ये जनाः मुग्धजनानामज्ञानामनुरञ्जिकां प्रतारिणीम् मायां कपटं पण्यस्त्रीम् वेश्यामिव दूरतोऽपि दूरादेव न उज्झन्ति त्यजन्ति ते जनाः ऐहिकं पारलौकिकं च स्वार्थं स्वहितं निश्चितं गमयन्ति नाशयन्ति, मायायाः वेश्यायाश्च पापास्पदत्वादिति भावः ॥१०८॥

**मायाया एव दोषान्तरमप्याह मायेति–**

**माया कुण्डलिनीव यैः परिस्पृष्टा दौष्ट्यविषा दुराग्रहा ।**
**दष्टास्ते ननु पुण्यजीवितं, निर्मूलं पुनराप्नुवन्ति न ॥१०९॥**

यैः जनैः दौष्ट्यं विषमिव यस्यां सा तादृशी दुराग्रहा दुर्ग्रहवती च माया कुण्डलिनी सर्पिणीव, परिस्पृष्टा कृतसङ्गा सम्पादिता आश्रिता स्पृष्टा च, दष्टा निर्मूलं यथा स्यात्तथा तयेति शेषः कृताघातास्ते जनाः पुण्यं जीवितमिव पुनः भूयः तन्नाप्नुवन्ति सर्पिणी दष्टा जीवितमिव मायादष्टाः पुण्यं नाप्नुवन्तीत्यर्थः ॥उपमा॥१०९॥

**माया बुधैस्त्यज्यते इत्याह ये इति–**

**ये पुण्यं परलोकसाधनं, मन्यन्ते मनुजा विवेकिनः ।**
**ते मायां क इव प्रकुर्वतां, पापं यत्परविप्रतारणे ? ॥११०॥**

ये विवेकिनः इष्टानिष्टविचारवन्तः मनुजाः पुण्यं परलोकसाधनं मन्यन्ते ते मायाम् क इव कथमिव प्रकुर्वताम् कुर्वन्तु ? न कथमपि कुर्वन्त्वित्यर्थः यद्यतः परस्यान्यस्य विप्रतारणे वञ्चने, मायाकरणे इति यावत्, पापम् जायते इति शेषः ॥११०॥

**माया आर्जवेनैव जेतव्येत्याह मायामिति–**

**मायामार्जवमन्तरेण यो, निर्जेतुं क्षमते महामतिः ।**
**आदत्ते खलु पन्नगनागिनीं, विद्यां जाङ्गुलिकीं विनैव सः ॥१११॥**

यः महामतिः धीमान्, आर्जवं निश्छलतामन्तरेण विना मायां निर्जेतुं तिरस्कर्तुं क्षमते शक्नोति, स, खल्विति अलीके, आर्जवं विना मायाजयोऽलीक इति भावः । जाङ्गुलिकीं विद्यां विनैव पन्नगनागिनीं पन्नगनागसम्बन्धिनीं विद्याम् आदत्ते गृह्णातीत्यर्थः । जाङ्गुलिकीं विद्यां विना पन्नगनागविद्येवार्जवं–विना मायाजयोऽशक्य इति भावः ॥१११॥

अथ लोभं दूषयति हिंसामिति—

हिंसामातनुतेऽनृतं वदत्यादत्ते स्वमदत्तमेव ना ।
अन्यस्त्रीमयते परिग्रहं, पापं किं न करोति लोभतः ? ॥११२॥

ना पुरुषः लोभतः लोभमाश्रित्य हिंसामातनुते करोति, अनृतं मिथ्यां वदति, अदत्तमेव स्वं धनमादत्ते गृह्णाति बलाचौर्याद्वेति भावः । तथा अन्यस्य स्त्रियमेवेति गच्छति, पारदार्यं करोतीत्यर्थः । परिग्रहं चायते एवम् किं पापं न करोति ? अपि तु लोभाभिभूतः सर्वप्रकारमेव पापं करोतीति भावः ॥११२॥

लोभस्त्याज्य एवेत्याह लोभमिति—

लोभं दुःखनिदानमेककं, मत्वा प्रोज्झत सिद्धिसिद्धये
संतोषं सुखकारणं बुधाः ! सत्यं स्वीकुरुतात्र तद्भिदे ॥११३॥

लोभमेकैकं प्रधानं दुःखानां निदानं मूलकारणं मत्वा बुधाः ! सिद्धेः मुक्तेः सिद्धये प्रोज्झत त्यजत, तथा अत्रेहलोके तस्य लोभस्य भिदे नाशाय सुखकारणं सत्यं सन्तोषं च स्वीकुरुत, सत्यसन्तोषयोराश्रितयोः सतोर्लोभः स्वयमेव नश्यतीत्यर्थः ॥११३॥

अथ विषयाऽऽकाङ्क्षदुष्परिणाममाह जन्मेति—

जन्मस्थानमहीध्रविन्ध्यविरहो रेवाजलक्रीडना-
ऽभावः प्रेमवशंवदाशयवशासंयोगभोगक्षयः ।
यत्तीक्ष्णाङ्कुशताडनं दृढतरायःशृङ्खलाबन्धनं
तत्सर्वं करिणां दुरन्तविषयाऽऽकाङ्क्षासमुत्थं फलम् ॥११४॥

करिणां हस्तिनाम्, यत् जन्मस्थानरूपस्य महीध्रस्य पर्वतस्य विन्ध्यस्य तदाख्यस्य विरहः अभावः, तथा यत् रेवायाः नर्मदायाः जले क्रीडनस्याभावः, "रेवा तु नर्मदे" त्यमरः । तथा यत् प्रेम्णः वशंवदोऽधीन आशयो मनो यस्यास्तस्याः वशायाः करिण्यः संयोगः सम्भोगः तद्रूपो यो भोगः सुखं तस्य क्षयः, तथा, यत् तीक्ष्णेनाङ्कुशेन ताडनम्, किञ्च दृढतरया अयः-शृङ्खलया बन्धनम्, तत्सर्वमुक्तं फलम्, दुरन्तायाः दुष्परिणामायाः विषयेष्वाकाङ्क्षायाः समुत्थं जातम् विषयवासना करिणामिव सर्वेषामेवानर्थपरम्पराणां कारणमिति भावः ॥ हास्तिपाकैर्हि विन्ध्यादिषु कृत्रिमहस्तिना कल्पयित्वा भक्ष्यादिलोभं दत्वा हस्तिनं वञ्चयन्ति गृह्णन्ति च तदुत्तरमुक्तं फलं तस्य ॥११४॥

लोभस्य दूषणान्तरमप्याह शृङ्गारेति—

शृङ्गारप्रभवस्य केतनतया यः ख्यातिमालम्बते,
नीरक्षीरविवेककौशलकला यस्यास्ति सा हंसवत् ।

योऽस्ताघे सलिलाशये विचरति स्वच्छे सतां चित्तव-
ज्जालान्तर्विनिपत्य मृत्युमयते मत्स्यः स लोलोत्कटः ॥११५॥

यो मत्स्यः शृङ्गारात्प्रभवो यस्य तस्य कामदेवस्य केतनतया ध्वजचिह्नतया ख्याति प्रसिद्धिमालम्बते गच्छति, कामस्य मीनकेतनत्वादिति भावः । तथा, यस्य मत्स्यस्य हंसवत् सा प्रसिद्धा नीरक्षीरयोर्विवेकैर्भेदेन ग्रहणे कौशलस्य शिल्पस्य कला विद्या अस्ति, तथा यो मत्स्यः सतां सज्जनानां चित्तवत् अस्ताघे गम्भीरे अतलस्पर्शे स्वच्छे निर्मले सलिलाशये जलाशये विचरति विहरति, स मत्स्यः लोलेषु लोलुभेषु उत्कटः अग्रेसरः सन् जालस्यानायस्यान्तर्विनिपत्य मृत्युमयते प्राप्नोति "लोलुपो लोलुभो लोल" इति आनायः पुंसि जालं स्यादि" ति चामरः ॥११५॥

लोभे दृष्टान्तान्तरमाह मालत्या इति—

मालत्याः कुसुमं विकाशिसरसं संत्यज्य गन्धोद्धुरं,
तत् तादृक् सहकारकोरकरसप्राग्भारमुत्सृज्य च ।
मातङ्गस्य कपोलके विनिपतन् गन्धातिलोभादलि-
र्नित्यं चञ्चलकर्णतालनिहतः प्राप्नोति मृत्युं जवात् ॥११६॥

अलिर्भ्रमरः गंधेन परिमलेनोद्धुरमुदग्रं सरसं समकरन्दविकाशि फुल्लं च मालत्याः कुसुमं संत्यज्य, तथा, तत्प्रसिद्धम् तादृशस्य सहकारकोरकस्याम्रमञ्जर्याः रसस्य प्राग्भारमतिशयमुत्सृज्य त्यक्त्वा च गन्धस्यातिलोभात् मातङ्गस्य गजस्य कपोलके कपोले गण्डस्थले विनिपतन् चञ्चलेन कर्णतालेन निहतः सन् जवादेव मृत्युं प्राप्नोति लोभो हि मृत्युमपि ददातीति सत्याज्य एवेति भावः ॥११६॥

साधने सत्यपि लोभोऽनर्थकारणमित्याह पादा इति—

पादा यस्य विरिञ्चिना विरचिताः, षट् पक्षिमर्त्यानडु-
ज्जातिभ्योऽभ्यधिकाश्चिरं विचरणव्यापारसंपत्तये ।
पक्षा यस्य विपक्षलक्षविहतौ चत्वार एवावनौ,
रोलम्बः स विपत्तिमेति नियतं, हा ? गन्धलोभादयम् ॥११७॥

विरञ्चिना ब्रह्मणा चिरं विचरणव्यापारस्य विहारस्य सम्पत्तये सिद्धये यस्य भ्रमरस्य पक्षिणां मर्त्यानां नृणां अनुडुहां बलिवर्दानां च जातिभ्यः जातिरपेक्ष्याभ्यधिकाः षट् पादाः चरणाः विरचिताः, भ्रमरस्य षट्पदत्वादिति भावः । तथा यस्य भ्रमरस्य पक्षाः गरुतः —'गरुत्पक्षच्छदाः' इत्यमरः । चत्वारः, सोऽयं रोलम्बो भ्रमरः गन्धलोभात् अवनौ पृथिव्याम् विपक्षाणां शत्रूणां

लक्षेण लक्षसङ्ख्यया विहतौ विघाते सति नियतं विपत्तिमेति, साधनसम्पन्नोऽपि हा, इति खेद एकेन गन्धलोभदोषेण विपक्षेण हन्यत एव भ्रमर इति महानर्थकारको लोभस्त्याज्य एवेति भावः ॥११७॥

रूपलोभोऽपि नाशहेतुरित्याह चक्षुरिति—

चक्षुर्दूषणमेतदेव यदि नो जायेत चाऽऽजन्मनो,
यत्प्रेक्षा रसिकत्वमुत्सुकतया यद् विभ्रमाऽखण्डनम् ।
तत् किं पक्षपरिग्रहेऽपि सबले दीपं सुवर्णात्मना,
जानन्नेव निपत्य मङ्क्षु शलभः, पञ्चत्वमेवाप्नुयात् ? ॥११८॥

आजन्मनः जन्मतः एवाऽऽरभ्य एतद्वक्ष्यमाणमेव च चक्षुष दूषणं दोषः नो जायेत भवेद्यदि, किन्तद्दूषणमित्याह यदुत्सुकतया प्रेक्षायामवलोकने रसिकत्वमनुराग, यच्च विभ्रमस्य विलासस्य अखण्डनम् समग्रतारूपम्, तत्तर्हि पक्षस्य सहायस्य, अथ च गरुत परिग्रहे ग्रहणे सबले बलवत्यपि सति दीपं, सुवर्णात्मना सुरूपत्वेन सुवर्णत्वेन जानन्नेव जानन्नपि-शलभ. पतङ्गः कीटविशेषः निपत्य दीपे पातं कृत्वा मङ्क्षु शीघ्रमेव पञ्चत्वं मृत्युमाप्नुयात्किम् ? नैव आप्नुयादित्यर्थः, रूपग्रहणेऽतिरसिकतारूपचक्षुर्दूपणेनैव बलवत्पक्षोऽपि शलभो म्रियते इति लोभस्त्याज्यः ।

श्रवणलोभदोषमाह विद्वांस इति—

विद्वांसः प्रवदन्ति यं किल जगत्प्राणस्य यानं परं,
स्वप्राणानवितुं सुधांशुमभजत् पीयूपलिप्सुश्च यः ।
नेत्राणामबलाजनस्य समता यल्लोचनैर्वर्ण्यते
गीताकर्णनलोलकर्ण इह स व्याधैश्शरैर्हन्यते ॥११९॥

विद्वांसः विज्ञाः यं मृगं जगत्प्राणस्य, वायोः—"जगत्प्राणसमीरणा" इत्यमरः । परं श्रेष्ठं यानं वाहनं प्रवदन्ति किलेत्यलिके । यो मृगश्च स्वप्राणानवितुं रक्षितुं पीयूपलिप्सुः अमृतं प्राप्तु-मिच्छु. सन् सुधांशुं चन्द्रमभजत् । लाञ्छनरूपेणासेवत, चन्द्रस्य अमृतमयत्वादिति भावः, पीता-मृतो ह्यमरो भवतीत्यर्थ । यस्य मृगस्य लोचनैः कृत्वा अबलाजनस्य स्त्रीवर्गस्य नेत्राणां समता तुल्यता वर्ण्यते, स्त्रीनेत्रं मृगनेत्रेणोपमीयते इति यावत्, स तादृग विशिष्टोऽपि इह लोके गीतस्य आकर्णने श्रवणे लोलकर्णः सतृष्णकर्णः सन् व्याधै कर्तृभि शरैः कृत्वा हन्यते वध्यते, लोभाद्धि सकलमपि वैशिष्ट्यमकिञ्चित्करं जायते इति भावः ॥११९॥

अतो विषयास्त्यक्तव्या एवेत्याह एकैक इति—

एकैको विषयस्ततोऽतिनिधनं चैवं समालिङ्गितः,
पञ्चत्वाय भवन्ति पञ्च न कथं संसेवितास्ते समम् ?

तस्मात् संयमरत्नतस्करनिभानेतान् विजेतुं जनाः,
संस्थाप्यैव विवेकयामिकमहो ? कैवल्यमालम्ब्यताम् ॥१२०॥

ततस्तस्माद्धेतोः एवमुक्तप्रकारेण एकैकः प्रत्येकम् विषयः शब्दादिः समालिङ्गितः सेवितः सन् अतिनिधनम् अत्यन्तविनाशो यथास्यात्तथा भवति, ते च पञ्च विषया. शब्दादयः समं युगपत्ससेविताः सन्तः पञ्चत्वाय मरणाय नाशायेति यावत्, कथ न भवन्ति ? अपि तु भवन्त्येवेत्यर्थः जनाः अहो इति सम्बोधने, तस्मादुक्तप्रकारदोषाद्धेतो सयमरूपाणां रत्नानां तस्करनिभान् चौररूपानेतान् प्रागुक्तकामक्रोधमानमायालोभादीन् विजेतुं वशीकर्त्तुम् विवेकं सम्यग्ज्ञानं तद्रूपं यामिकं प्राहरिकं संस्थाप्य नियुज्यैव कैवल्यं मोक्षमालम्ब्यताम्, प्राप्यताम् । ज्ञानेनेन्द्रियार्थ-वशीकारे कैवल्यं न दुर्लभमितिभाव. ॥ रूपकम् ॥ १२० ॥

इन्द्रियजयं विना जिनधर्मो दुर्लभ इत्याह करणेति—

करणनिकरस्वैरीभावप्रवर्तनसंमील-
द्विषयविमुखं चेतो यावद् बुधा ! न विधास्यथ ।
कुगतिगमनं रोद्धुं शक्तं जिनेश्वरभाषितं,
कथमपि सितं तावद् धर्मं स्फुटं किमवैप्स्यथ ? ॥१२१॥

बुधाः भव्याः यावद्यदवधि चेतः करणनिकराणामिन्द्रियवर्गाणाम् स्वैरीभावेन स्वतन्त्रतया प्रवर्त्तनेन कृत्वा संमिलद्भ्यः प्राप्नुवद्भ्यः विषयेभ्यो विमुखं विरक्तं न विधास्यथ तावत्तदवधि, कुगतिगमनं दुर्गतिप्राप्तिं रोद्धुम्, निवारितुं शक्तं समर्थं जिनेश्वरभाषितं स्फुटं विशदम् सित निर्मलं धर्मं कथमपि प्रयस्यापि अवैप्स्यथ प्राप्स्यथ किम् ? नैव प्राप्स्यथेत्यर्थः । अजितेन्द्रियस्य जिनोक्तधर्मो दुर्लभ इति भावः ॥१२१॥

ज्ञानादिरत्नत्रयं विना धर्मो न शोभते इत्याह नेत्रेति

नेत्रत्रयेणेव हिमांशुमौलिः, शक्तित्रयेणेव महीमहेन्द्रः ।
गुप्तित्रयेणेव महाव्रतीड्यो, धर्मोऽपि रत्नत्रितयेन भाति ॥१२२॥

हिमांशुमौलिः चन्द्रशेखरः महादेवः नेत्रत्रयेण इव, महीमहेन्द्रः नृपः शक्तित्रयेण मन्त्रकोष-दण्डनेनेव, महाव्रती मुनिः गुप्तित्रयेण कायवाङ्मनोगुप्तित्रयेणेव ईड्यः स्तुत्य उत्तमो धर्मोऽपि रत्नत्रयेण सम्यग्दर्शनज्ञानचारित्ररूपेणैव भाति, नान्यथेति भावः । मालोपमा ॥१२२॥

साम्प्रतं रत्नत्रयं स्तौति संवेदनमिति—

संवेदनं सम्यगथापि दर्शनं चारित्रमेतानि शिवस्य पद्धतिः ।
रत्नत्रयत्वेन जिनैरुदाहृता–न्युद्भूतपापक्षयसंनिबन्धनम् ॥१२३॥

सम्यग् निर्मलम्, संवेदनं ज्ञानम् अथापि किञ्च दर्शनं चारित्रं सम्यक् इत्यस्योभयत्रान्वयः– एतानि त्रीणि शिवस्य मोक्षस्य पद्धतिः मार्गः -अत एवोक्तं "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" इति तत्त्वार्थसूत्रमिति भावः। जिनैः उद्भूतानां जातानां पापानां क्षये संनिबन्धनं हेतूभूतं यथास्यात्तथा रत्नत्रयत्वेनोदाहृतानि कथितानि ॥१२३॥

रत्नत्रयाराधनफलमाह निर्वान्तीति—

निर्वान्ति स्म विमुक्तरागविषया निर्वान्ति चान्ये तथा,
निर्वास्यन्ति जना जिनोदितमहारत्नत्रयाराधनात् ।
तस्मात् सम्यगिदं विबुध्य भविकाः! ध्यानैकतानं मनः,
कृत्वैवाचरतोग्रकर्मनिहतौ ब्रह्मास्त्रकल्पं बुधाः ॥१२४॥

विमुक्तरागविषयाः विरक्ता जनाः जिनोदितस्य महतो रत्नत्रयस्याराधनात् सेवनां कृत्वा निर्वान्ति स्म मुक्ता अभवन्, तथा अन्ये वर्तमानाः कतिपये निर्वान्ति मुक्तिमाप्नुवन्ति, निर्वास्यन्ति मुक्तिं प्राप्स्यन्ति च। तस्माद्धेतोः भविकाः भव्याः! बुधाः! हितज्ञाः, इदं विबुध्योक्तप्रकारं ज्ञात्वा ध्यानैकतानं ध्यानस्थं मनः कृत्वा उग्राणां ससारानन्तदुःखप्रदत्वादुत्कटानां कर्मणां निहतौ नाशे ब्रह्मास्त्रकल्पम् अप्रतिहतशक्ति ब्रह्मास्त्रतुल्यमिदं रत्नत्रयं सम्यक् आचरत सेवध्वमेव, नान्यथा गतिरिति भावः ॥१२४॥

अथ प्रतिबोधितस्य चक्रायुधस्य दीक्षाप्रार्थनामाह इतीति—

इत्याकर्ण्य सकर्णमौलिमुकुटालङ्कारहीरप्रभः,
श्रीचक्रायुधभूपतिर्जिनपतेर्वाचं सुधासोदराम् ।
विज्ञो विज्ञपयाम्बभूव भगवन्! मोहान्धकारच्छिदा-
धाने शारदसूरधामरुचिभं देहि व्रतं मे प्रभो! ॥१२५॥

सकर्णानाम् धीमताम् मौलिमुकुटानामलङ्कारेषु हीरप्रभः हीरकमणितुल्यः विज्ञः श्रीचक्रायुधभूपतिः सुधासोदराममृततुल्यां जिनपतेरित्युक्तप्रकारां वाचमाकर्ण्य विज्ञपयाम्बभूव निवेदितवान्, किमित्याह– प्रभो! भगवन्! मोहरूपस्य अन्धकारस्य छिदाधाने छेदने शारदस्य शरदृतोः सूरधाम्नः सूर्यकिरणस्य रुचिः कान्तिरिव भातीति तत् —तादृशं व्रतम् दीक्षां मे मह्यं देहि ॥१२५॥

अथ चक्रायुधकृत्यमाह राजन्निति—

राजंस्त्वं मा प्रमादीरिति स भगवतोदीरितः सद्म गत्वा,
पुत्रं राज्ये निधाय प्रकटितविनयं भूरि भूरि प्रदाय ।
हस्त्यारूढः समेत्य प्रणतगुरुपदस्तात! निस्तारयेति,
प्रोच्चैः प्रोच्चार्य वाचं सुकृतकृतमना राड्पादत्तदीक्षाम् ॥१२६॥

राजन् ! त्वं मा प्रमादीः प्रमादं कुर्या इतीत्थं भगवता शान्तिजिनेनोदीरितः कथितः स चक्रायुधः सद्म गृहं गत्वा प्रकटितविनयं विनयशालिनं पुत्रं राज्ये निधाय निवेश्य भूरि प्रचुरं भूरि स्वर्णादिधनं --"जाम्बुनदं शातकुम्भं रजतं भूरि" इति हैमः ।" प्रदाय हस्त्यारूढः समेत्यागत्य प्रणतगुरुपदः कृतगुरुपदप्रणामः सन् राट् राजा चक्रायुधः प्रोच्चैः तात ! निस्तारय इतीत्थं वाचं प्रोच्चार्य सुकृते पुण्ये कृतं मनो येन स तादृशः पुण्यबुद्धिः सन् दीक्षामुपादत्त ॥१२६॥

अथाऽन्येषामपि नृपाणां दीक्षाग्रहणमाह पञ्चेति—

पञ्चत्रिंशद् तदानीं वचनमिव विभोः सद्गुणा भूमिपाला,
राजर्षिं दीक्षया तं शिवपदसुहृदोऽनु व्रजन्ति स्म धन्याः
तेषां चक्रायुधादिप्रवरगणभृतां शान्तिरुत्पादनाश-
ध्रौव्यप्रख्यातरूपं त्रितयमथ विभुर्व्याचचक्षे पदानाम् ॥१२७॥

तदानीं चक्रायुधदीक्षाकाले, विभोः शान्तिजिनस्य वचनमिव सद्गुणाः गुणवन्तः पञ्चत्रिंशत् तत्सङ्ख्यका धन्याः स्तुत्याः शिवपदसुहृदः मोक्षप्रदप्रिया भूमिपालाः तं राजर्षिम् चक्रायुधमनु दीक्षया दीक्षाग्रहणेन कृत्वा व्रजन्ति गच्छन्ति स्म, दीक्षां गृहीतवन्त इत्यर्थः, अथान्तरम्, शान्तिः तदाख्यो जिनः विभुः तेषां चक्रायुधादीनां प्रवराणां गणभृतां गणधराणां उत्पादो नाशो ध्रौव्यञ्चेत्येवं प्रख्यातं रूपं यस्य तत्, तादृशं पदानां त्रितयं त्रिपदीं व्याचचक्षे व्याख्यातवान् ॥१२७॥

षडिति—

षट्त्रिंशद्गुणधारिभिर्गणधरैस्तस्यानुसारेण च,
प्रोद्दामप्रतिपत्तिशालिहृदयैस्तैर्द्वादशाङ्गी कृता ।
शान्तिस्वाम्यनुयोगमेव सगणं तेषामनुज्ञातवान्,
योग्यानामुचितोपचारविधये यद्वा स्थितिस्तादृशाम् ॥ १२८ ॥

षट्त्रिंशद्गुणधारिभिः प्रोद्दामप्रतिपत्तिशालिहृदयैः बीजबुद्धिमद्भिः तैः गणधरैः चक्रायुधादिभिः तस्यानुसारेण त्रिपद्यनुसारेण च द्वादशाङ्गी कृता निर्मिता, शान्तिस्वामी तेषां गणधराणां कृते स्वगणमनुयोगमेवाऽनुज्ञातवान् अनुयोगानुज्ञां गणानुज्ञां च विहितवान् यद्वा यतः तादृशाम् गणधराणां तुल्यानां योग्यानां पात्राणाम् उचितस्योपचारस्य विधये विधानाय स्थितिः मर्यादा एवेवमिति शेषः ॥ १२८ ॥

अन्येषामपि दीक्षाग्रहणाद्याह वैराग्येति—

वैराग्याऽऽपूर्णचित्ता व्रतमथ जगृहुर्मानवास्तीर्थनाथाद्,
मानव्यश्च प्रभूताः कतिचन विधिवद् श्राद्धधर्मं सधर्माः

देवच्छन्दं ततः स प्रभुरलमकरोत् पूर्तिमायातवत्यां,
पौरुष्यामादिमायां श्रमपरिमथनं कर्तुमेष क्रमो हि ॥ १२९ ॥

अथानन्तरम् वैराग्येन कृत्वा आपूर्णं भृतं चित्तं येषां तादृशाः अतिविरक्ता प्रभूता बहवः मानवाः मानव्यश्च तीर्थाधिनाथात् शान्तिजिनसकाशाद् व्रतं जगृहुः सधर्माः पुण्यवत्यः कतिचन कतिचिन्मानवा मानव्यश्च श्राद्धधर्मं विधिवद् जगृहुरिति सम्बध्यते ततोऽनन्तरम्, स प्रभुः शान्तिजिनः आदिमायां प्रथमायां पौरुष्यां पूर्तिमायातवत्यां पूर्णायां सत्याम् देवच्छन्दम् अलमकरोत् शोभितवान् हि यतः श्रमस्य परिमथनं निरासनं कर्तुमेष देवच्छन्दगमनरूपः क्रमः ॥१२९॥

अथ गणधरदेशनामाह-तीर्थेति--

तीर्थाधीशाङ्घ्रिपीठं प्रथमगणधरोऽऽध्यास्य चक्रायुधोऽपि,
व्याचक्रे धर्ममेकं प्रभुरिव भविकक्लेशविध्वंसनाय ।
पौरुष्यां यातवत्यां द्विकपरिगणनाविश्रुतायां जनौघाः,
सर्वे स्वं स्वं निकेतं ययुरथ सुकृताऽऽकर्णनेन प्रहृष्टाः ॥१३०॥

प्रथमगणधरश्चक्रायुधोऽपि तीर्थाधीशस्य शान्तेरंघ्रिपीठं पादपीठं अध्यास्योपविश्य भविकानां क्लेशस्य विध्वंसनायैकं अद्वितीयं धर्मं व्याचक्रे व्याख्यातवान् । अथानन्तरम्, द्विकपरिगणना-विश्रुतायां द्वितीयायां पौरुष्यां यातवत्यां व्यतीतायां सत्याम् सर्वे जनौघाः सुकृतस्य लक्षणया धर्मकथायाः आकर्णनेन श्रवणेन प्रहृष्टाः सन्तः स्वं स्वं निकेतं स्थानं ययुः ॥१३०॥

अथ शान्तिनाथतीर्थयक्षमाह-पाणिभ्यामिति--

पाणिभ्यां बीजपूरं कमलमपि दधद् दक्षिणाभ्यामुभाभ्यां,
वामाभ्यामक्षसूत्रं नकुलमपि तथा पौत्रिवक्त्रेण राजन् ।
भाद्राम्भोवाहमूर्तिः करिरथगमनः शान्तिनाथस्य तीर्थे,
जज्ञे यक्षः स दक्षो गरुड इति जगत्ख्यातचारुप्रभावः ॥१३१॥

शान्तिनाथस्य तीर्थे शासने दक्षिणाभ्यामपसव्याभ्यामुभाभ्यां पाणिभ्याम् बीजपूरं कमल-मपि कमलं च, वामाभ्यां पाणिभ्याम् अक्षसूत्रं नकुलमपि नकुलं च दधत् पौत्रिवक्त्रेण शूकर-मुखेन राजन् शोभमानः वराहमुखः, तथा, भाद्रस्य तदाख्यमासस्य अम्भोवाह मेघ इव कृष्ण-मूर्तिर्यस्य स तादृशः कृष्णवर्णः करिरथेन गजरथेन गमनं यस्य स तादृशः दक्षः शीघ्रकर्मा जागर्ति ख्यातः चारुः प्रभावः यस्य स तादृशः स प्रसिद्धः गरुड इत्यभिधानः यक्षः जज्ञे जातः ॥१३१॥

अथ शासनदेवतामाह पाण्योरिति—

पाण्योर्दक्षिणयोः सदैव दधती सत्पुस्तकं चोत्पलं,
पद्मं चाऽपि कमण्डलुं भगवती वामार्चिता वामयोः ।
निर्वाणी प्रथिताऽऽख्यया सितवपुः पद्मासनाभासिता,
देवी शासनदेवता जिनपतिश्रीशान्तितीर्थेऽजनि ॥१३२॥

जिनपतेः श्रीशान्ते. तीर्थे दक्षिणयोः पाण्योः सदैव सत्पुस्तकमुत्पलं च वामयोः पाण्योः पद्मञ्च कमण्डलुमपि दधती वामाभिः नारीभिरर्चिता पद्मासने आभासिता शोभमाना सितवपुः श्वेतमूर्तिः भगवती देवी आख्यया नाम्ना निर्वाणीत्येवं प्रथिता ख्याता शासनदेवताऽजनि जाता ॥१३२॥

अथशान्तेर्विहारमाह ताभ्यामिति—

ताभ्यां नित्यमधिष्ठितो गुरुबुधोपास्यः प्रणिघ्नंस्तमः-
स्तोमं सोमकलानिधिं रविरिव क्षीणं समुल्लासयन् ।
पादैरेव भुवस्तलं विमलतामापादयन्नन्यतः,
श्रीशान्तिर्विजहार भव्यकमलप्रोद्बोधकल्याणकृत् ॥१३३॥

नित्यं ताभ्यां यक्षशासनदेवीभ्यां नित्यमधिष्ठितः सेवितः गुरुभिर्महद्भिर्बुधैः पण्डितैरुपास्यः सेव्यः गुरुबुधदेवोपास्यो वा उपलक्षणया सर्वदेवैरुपास्यः पक्षान्तरे गुरुबुधग्रहोपास्यः'—सेव्यः रविरिव सूर्य इव तमःस्तोममज्ञानान्धकारं प्रणिघ्नन् नाशयन् क्षीणसोमकलानिधिं समुल्लासयन् वर्धयन् हर्षयन् च भव्यात्मरूपस्य कमलस्य प्रोद्बोधरूपकल्याणकृत् श्रीशान्तिः भुवस्तलं महीतलं विमलतां पवित्रितामापादयन् अन्यतोऽन्यत्र पादैरेव कृत्वा विजहार ॥१३३॥

आसीदिति—

आसीत् श्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः,
पट्टे श्रीगुणभद्रसूरिसुगुरुश्चारित्रभाजां गुरुः ।
तच्छिष्येण कृतेऽत्र पञ्चदशकः श्रीशान्तिवृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गः सुवृत्तोऽगमत् ॥१३४॥

नवरम्, निगदसिद्धमेतद्व्याख्यातपूर्वञ्च—

इति श्रीमन्मुनिभद्रसूरिकृते श्रीशान्तिनाथचरिते शासनसम्राट्—सूरिचक्रचक्रवर्ति—परमसद्गुरु—श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारावात न्यायवाचस्पति—शास्त्रविशारदविरुदाचार्य श्रीविजयदर्शनसूरीश्वरसन्दब्धप्रबोधिनी—व्याख्यायां पञ्चदशः सर्गः समाप्तः ॥

अर्हम्

# अथ षोडशः सर्गः

सर्गादौ मङ्गलमाचरति प्रतीयते इति--

प्रतीयते यत्पुरुषोत्तमत्वं, संवेदनेनैव सनातनेन ।
अनन्यसामान्यभृता श्रिया च, स शान्तिनाथस्तनुतां मुदं वः ॥१॥

यस्य श्रीशान्तिनाथस्य पुरुषोत्तमत्त्वम् सनातनेन नित्येनैव सवेदनेन ज्ञानेन केवलज्ञानेन । अनन्यसामान्यमसाधारणत्वं बिभर्त्तीति तया अनुपमया श्रिया च प्रतीयते ज्ञायते, नहि पुरुषसामान्यः केवली निरुपमश्रीको वा भवितुमर्हतीति भावः । स पुरुषोत्तमः शान्तिनाथ' वः श्रोतॄणां मुदं तनुतां विस्तारयतु अत्र सर्गे प्रायः उपजातिच्छन्दः ॥१॥

कथां प्रस्तौति अथेति--

अथान्यदा हास्तिननामधेयं, पुरं जिनेशः समवासरत् सः ।
जगत् पवित्रं रचयन् स्वपादै-र्दिनेशवत् तामसभूतिभेत्ता ॥२॥

अथ स जिनेशः श्रीशान्तिजिनः स्वस्य पादैः चरणन्यासैः, किरणैश्च दिनेशवत्सूर्यवत् तामसभूतेः अज्ञानसम्पदः, तमःपुञ्जस्य च भेत्ता नाशकः, जगत् पवित्रं रचयन् हास्तिननामधेयं पुरं हास्तिनापुरं समवासरत् समवसृतवान् ॥२॥

अथ राज्ञस्तत्रागमनमाह आयुक्तेति--

आयुक्तपुम्भ्यो जिनसार्वभौमं, श्रुत्वा समेतं कुरुचन्द्रभूपः ।
प्रदाय हर्षात् परितुष्टिदानं, प्रभुं प्रणन्तुं सहसा जगाम ॥३॥

कुरुचन्द्र इत्याख्यो भूप' आयुक्तेभ्यः नियुक्तेभ्यः पुंभ्यः उद्यानपालादिभ्यः जिनसार्वभौमं जिनेशं शान्ति समेतं समागतं श्रुत्वा हर्षात्तदागमनश्रवणजन्यहर्षात्परितुष्टिदानं भृत्येभ्यः तद्वृत्त-निवेदकेभ्यः पारितोषिकं प्रदाय सहसा झटित्येव प्रभुं शान्तिजिनं प्रणन्तुं जगाम, एतेन जिनेशे राज्ञो भक्तिरुत्कण्ठातिशयश्च सूचितः नह्यन्यथेदृशी प्रवृत्ति सम्भवतीति बोध्यम् ॥३॥

अथ नृपकृतजिनेशप्रदक्षिणादिविधिमाह प्रेति--

प्रदक्षिणानां त्रितयं विधाय, जिनं नमस्कृत्य गणेश्वरांश्च ।
असौ यथास्थानमलञ्चकार, भूमण्डलं भूमिभुजां पुरोगः ॥४॥

भूमिभुजाम् राज्ञां पुरोगः प्रथमः कुरुचन्द्रभूपः प्रदक्षिणानां त्रितयं प्रदक्षिणात्रयं विधाय जिनं श्रीशान्तिजिनं गणेश्वरान् गणधरांश्च नमस्कृत्य वन्दित्वा असौ भूपः यथास्थानमलञ्चका-राशिश्रियत्, ॥४॥

**अथ जिनेशदेशनोपक्रममाह नृपे इति—**

**नृपे निविष्टे जिनचक्रवर्ती, स देशनां धर्ममयीं ससर्ज ।**
**परोपकाराय सतां हि बोधः, सरोवराणामिव वारिपूरः ॥५॥**

नृपे निविष्टे उपविष्टे सति स जिनचक्रवर्ती शान्तिजिनः धर्ममयीं धर्मप्रधानां देशनां ससर्ज चकार ननु किमिति देशनां ससर्जेति चेत्तत्राह—हि यत· सतां बोधो ज्ञानम् सरो-वराणां तडागानां वारिपूर· जलप्रवाहश्च परोपकाराय परोपकारार्थम् भवतीति शेषः । धर्मदेशनया कृत्वा कियन्तो बोधं प्राप्स्यन्तीति परोपकारबुद्ध्यैव देशनाप्रवृत्तिरिति भावः ॥५॥

**अथ तद्देशनामेवाह अवाप्येति—**

**अवाप्य चिन्तामणिवद् दुरापं, मानुष्यमेतद् भविकाः ! कथञ्चित् ।**
**प्रमादमुत्सार्य्य विचार्य्य तत्त्वं, धर्मं विदद्ध्वं शिवशर्महेतोः ॥६॥**

भविकाः ! चिन्तामणिवत्सकलेष्टसाधकं दुरापं दुर्लभं पुण्यराशिप्राप्यमेतद्वर्त्तमानं मानुष्यं मनुष्यभवं कथञ्चिन्महता कष्टेनावाप्य प्रमादं धर्मकार्येष्वालस्यमुत्सार्य त्यक्त्वा तच्च पारमार्थिकतत्त्वं विचार्य शिवशर्महेतोः मोक्षसुखाय धर्मं विदद्ध्वम् कुरुध्वम्, धर्मेण हि मुक्तिराप्यते इति भावः ॥६॥

**प्रमादं निन्दति नेति—**

**न द्वेषिहालाहलनाहलानां, भयं प्रकुर्वन्ति बुधास्तथाऽत्र ।**
**लोकद्वयस्वार्थविनाशकस्य, यथा प्रमादस्य दुरन्तकस्य ॥७॥**

बुधाः अत्र संसारे द्वेषिणां शत्रूणां हालाहलस्य विषस्य नाहलानां भिल्लानां 'पुलिन्दा नाहला' इतिहैमः । भयं मरणादिप्रदत्वात्ततो भीतिं तथा तेन रूपेण न प्रकुर्वन्ति यथा येन रूपेण लोकद्वयस्येहलोकपरलोकयोः स्वार्थस्य हितस्य विनाशकस्य, अत एव, दुरन्तकस्य दुष्परिणामस्य प्रमादस्य । प्रमादो लोकद्वयहन्तेति द्वेषिप्रभृतिभ्य इहानिष्टेभ्यो विशिष्यत इत्यर्थः ॥७॥

**अथ प्रमादं विभजति मैरेयेति—**

**मैरेयपाणं विषयातिसक्तिः, कषाययोगः शयनाभिषङ्गः ।**
**पुण्यद्रुभङ्गो विकथाऽनुरङ्गः, प्रोक्तः प्रमादः स च पञ्चधा ज्ञैः ॥८॥**

स पूर्वं निन्दितः पुण्यद्रुभङ्गहेतुः, प्रमादश्च तैः बुधैः पञ्चधा पञ्चप्रकारः प्रोक्तः, पञ्चप्रका-रानेवाह- मैरेयस्य मदिराया· पानं "पानस्य भावकरणयो" रिति ण· । विषयेषु पञ्चेन्द्रियविषयेषु पंचसु अतिसक्तिः अत्यन्तमासक्तिः, कषायैः क्रोधादिभिः योग· सम्बन्धः, शयने अभिषङ्ग अत्यादर·

निद्रेत्यर्थ., विकथासु धर्मानुपेतकथासु अनुरङ्गः प्रसङ्गः इत्येवम् पञ्चप्रकारः प्रमादः प्रोक्त इत्यर्थ. ॥८॥

तत्र प्रथमं मदिरां दूषयति तत्रेति--

तत्राऽपि मुख्यो मदिरोपसेवा, यत्सेवनादर्थपरिक्षयोऽत्र ।
परत्र दुःखं नरके यथाऽऽपत्, स स्कन्दिलो ना कुलपुत्रवाच्यः ॥९॥

तत्र तेषु पञ्चविधेषु प्रमादेष्वपि मदिराया उपसेवा सेवनं मुख्य. आद्य प्रमाद. प्रधानम् यत्सेवनात् अत्र लोके अर्थस्य धनस्य परिक्षयः नाश, तया हि धनं निरर्थकं व्ययन्तीति भाव' । तथा कुलपुत्रवाच्यः कुलपुत्रगोत्रः स्कन्दिलः तदाख्यः स प्रसिद्धः ना पुरुषः यथा येन प्रकारेण मदिरासेवनेन कृत्वा परत्र परलोके नरके दुःखमापत् ॥९॥

कथामेव प्रस्तौति तथाहीति

तथाहि याम्ये भरते समृद्धि-प्रथिम्नि पृथ्वीतिलके पुरेऽभूत् ।
चन्द्रः पृथिव्या इव नाम पृथ्वी-चन्द्रः प्रजाऽऽनन्दकरो नरेन्द्रः ॥१०॥

तथाहीति कथा प्रस्तावे. याम्ये दक्षिणे भरते तदाख्यक्षेत्रे समृद्धिभिः प्रथिम्नि विस्तृते विशाले प्रचुरसमृद्धिके पृथ्वीतिलके तदाख्ये पुरे पृथिव्याश्चन्द्र इव पृथ्वीचन्द्रः नाम प्रजाया' आनन्दकरः नरेन्द्रोऽभूत् उत्प्रेक्षा ॥१०॥

अथ तद्भार्यां वर्णयति देवीति--

देवी तदीया सुरसुन्दरीति, ख्याता गुणौघैः सुरसुन्दरीव ।
यद्रूपमालोकितुमेकचित्तः, सहस्रनेत्रो मघवा बभूव ॥११॥

तदीया पृथ्वीचन्द्रस्य देवी पट्टराज्ञी सुरसुन्दरी इतीत्थं ख्याता प्रसिद्धा गुणौघै. सुरसुन्दरी सुरस्त्रीव आसीदिति शेषः अत्रातिशयोक्तिमाह--यस्याः सुरसुन्दर्याः रूपं सौन्दर्यमालोकितुं द्रष्टुम् एकचित्तः नितरामुत्कण्ठितः मघवा इन्द्रः सहस्रनेत्रो बभूव द्वाभ्यां नेत्राभ्यां तद्रूपावलोकने तृप्त्यभावादिति तस्या अद्भुतं सौन्दर्यं व्यज्यते ॥११॥

अथ स्कन्दिलमाह तत्रैवेति--

तत्रैव वित्तः कुलपुत्रकोऽस्ति, श्रीचन्द्रराजः श्रितराजमानः ।
तस्य प्रियाऽजायत चन्द्रकान्ता, तदङ्गजः स्कन्दिलनामधेयः ॥१२॥

तत्र पृथ्वीतिलकपुरे एव वित्त प्रसिद्धः, तथा श्रितः प्राप्त. राज्ञो मान सन्मान येन स ताद्दशः राजमान्यः श्रीचन्द्रराज तदाख्यः कुलपुत्रक अस्ति, तस्य चन्द्रराजस्य प्रिया चन्द्रकान्ता तदाख्या. तस्य च चन्द्रराजस्याङ्गज पुत्रश्च स्कन्दिलनामधेय अजायताभूत् ॥१२॥

अथ स्कन्दिलस्य विवाहमाह मातेति—

मातापितृभ्यां परिणायितः, स स्कन्दश्रियं नाम वधूं वयःस्थः ।
क्रमात् स पञ्चत्वमवाप चन्द्र-प्रशस्यकीर्तिः किल चन्द्रराजः ॥१३॥

वयःस्थस्तरुणः 'वयःस्थस्तरुणो युवे''त्यमर' । स स्कन्दिलः मातापितृभ्यां स्कन्दश्रियं नाम वधूं परिणायितः । क्रमात् कालक्रमत' चन्द्रेण कृत्वा प्रशस्या वर्णनीया कीर्तिर्यस्य स तादृशः स चन्द्रराजः पञ्चत्वं मृत्युमवाप किल ॥१३॥

अथ स्कन्दिलस्य मद्यव्यसनमाह तस्येति—

तस्यान्यदा भाग्यविपर्य्ययेण, मद्यैकपानव्यसनं बभूव ।
पुंसः कुकर्मोदयसंविधानात्, संजायते यद् व्यसनं दुरन्तम् ॥१४॥

तस्य स्कन्दिलस्य, अन्यदा, भाग्यस्य विपर्ययेण विपरीततया मद्यस्य एकं मुख्यं व्यसनं बभूव, व्यसने भाग्यवैपरीत्यमेव निमित्तमित्याह—यद्यतः पुंस' पुरुषस्य कुकर्मणः पापस्य उदयस्य फलोन्मुखत्वस्य संविधानाद्भावात् कृत्वा दुरन्तं व्यसनं सञ्जायते, व्यसनमात्रस्य दुरन्ततया कुकर्मण एव तत्फलं न तु शुभकर्मण इति भाव' ॥१४॥

व्यसनी हितं न शृणोतीत्याह स इति—

स स्निग्धवाक्यैः प्रियया प्रयत्नाद्, निवार्यमाणो विरराम नैव ।
तस्योग्रमेतद् व्यसनं विबुध्य, जनैरनेकैः सुजनैरिवाऽयम् ॥१५॥

स स्कन्दिलोऽयम् तस्य स्कन्दिलस्य एतदुग्रं दुरन्तं व्यसनं विबुध्य ज्ञात्वा, प्रियया भार्यया सुजनैः अनेकैः जनैरिव जनैश्च निपातानामनेकार्थत्वादिव शब्दोऽत्र चार्थे इति बोध्यम् । स्निग्धैः स्नेहपूर्णैः वाक्यैः कृत्वा प्रयत्नात्सोद्योगं साग्रहं वा निवार्यमाणः मद्यं मा पिब दुर्व्यसनमिदं दुरन्तमित्येवं निषेध्यमानोऽपि नैव विरराम मद्यपानाद्विमुखोऽभूत् ॥१५॥

अथ तस्य धनदुर्व्ययमाह अजीगमदिति—

अजीगमत् तद्व्यसने प्रसक्तः, सर्वं सुवर्णं स निरङ्कुशः सन् ।
धान्यानि धेनूरपि गोकुलानि, कुलामयः स व्ययति स्म पश्चात् ॥१६॥

तस्मिन् मद्यपानरूपे व्यसने प्रसक्तः संलग्नः निरङ्कुशः स्वतन्त्रः सन् स स्कन्दिलः सर्वं सुवर्णं धान्यानि धेनूः गाः गोकुलानि व्रजाश्चाजीगमत् व्ययति स्म, स पश्चात्, कुलामयः कुलसर्वस्वमपि व्ययति स्म ॥१६॥

तस्य व्यसनसाधने दुराग्रहमाह दूरीति—

दूरीकृतस्तत्सुजनैः स्वपङ्क्ते-र्बहिष्कृतः कैश्चन नैव पापः ।
तथाऽपि किञ्चिद् धनमर्जयित्वा, मद्यं पपौ स व्यसनोग्रचित्तः ॥१७॥

तत्तस्माद्धेतो. स पाप सुजनै. स्वपङ्क्ते' दूरीकृत' स्वश्रेणीत. दूरीकृतस्त्यक्तः कैश्चन नैवोरीकृतः स्वीकृतः। तथापि व्यसने उग्रं हठाग्रहि चित्तं यस्य स ताद्दश' स स्कन्दिल' किञ्चिद्धनमर्जयित्वा मद्यं पपौ ॥१७॥

अन्येद्युरिति—

अन्येद्युरेतस्य दुराशयस्य, निपीतमद्यस्य पथि प्रयातः।
भूमिपतिः संमुखमाजगाम, लीलाविहारेण वनं प्रयातः ॥१८॥

अन्येद्युरेकदा निपीतमद्यस्य कृतमद्यपानस्य दुराशयस्य दुष्टात्मन एतस्य स्कन्धिलस्य पथि प्रयातः गच्छतः सतः वनं प्रयातः गतः भूमीपति' नृप' पृथ्वीचन्द्रः लीलाविहारेण विनोदभ्रमणेन कृत्वा सम्मुखमाजगाम। मनोऽनुरञ्जनाय भ्रमन् महीपति' संयोगात् स्कन्दिलस्याग्रत उपास्थित इत्यर्थः ॥१८॥

भूपालेति--

भूपालमान्यैः पुरुषैः पुरोगः, क्षीवः स इत्येवमवादि भो भोः।
अयं समभ्येति विभुस्ततस्त्वं, स्थानादितो द्रागपसृत्य तिष्ठ ॥१९॥

पुरोगः भूपपुरः स्थितः स क्षीवो मत्तः स्कन्दिलः भूपालमान्यैः भूपप्रियैः पुरुषैः भृत्यादिभिरित्येवमवादि, एवमिति किमित्याह—भो भो'। सम्भ्रमे द्विरुक्तिः, अयं लक्षमाणो विभुर्भूपः समभ्येति सम्मुखमेति ततः हेतोः त्वं स्कन्दिलः इतोऽस्मात्स्थानाद् द्राक् शीघ्रमपसृत्य दूरीभूय तिष्ठ नहि केनापि नृपमार्गरोधिना भवितव्यम् इति शिष्टाचार इति भावः ॥१९॥

नेति—

नाकर्णयामास यदा नराणां, मत्तोऽपसारप्रवणाः स वाचः।
बाहौ तदैकेन धृतो नरेन्द्र-वाल्लभ्यभाजा पुरुषेण रोषात् ॥२०॥

यदा स मत्तः स्कन्दिल' नराणां राजपुरुषाणाम् अपसारणप्रवणाः दूरीभावसूचिकाः वाचः न आकर्णयामास मदेन गतसंज्ञत्वादिति भाव'। तदा नरेन्द्रस्य वाल्लभ्यं प्रियत्वं भजतीति तेन ताद्दशेन नृपप्रियेण एकेन केनचित्पुरुषेण रोपात्सक्रोधम् बाहौ धृतः ॥२०॥

छुरीमिति

छुरीं समाकृष्य सितां स तेन, न्यघानि मत्तेन रुपाश्रितेन।
वृत्तान्तमेतं विनिगम्य राजा, व्यापादितः स प्रहतो नयेन ॥२१॥

स राजपुरुषः मत्तेन मदविह्वलेन अत एव रुपाश्रितेन सक्रोधेन तेन स्कन्दिलेन सितां तीक्ष्णां छुरीम् शस्त्रीं समाकृष्य न्यघानि प्राहारि, राज्ञा एनं छुरीघातरूपं वृत्तान्तं विनिगम्य

नयेन नीत्या प्रहृतः प्रच्युतः निरपराधे प्रहरणादिति भावः । स स्कन्दिलः व्यापादितः वधं प्रापितः ॥२१॥

अथ स्कन्दिलस्य पुनर्भवमाह—

विपद्य जातो नरके दुरात्मा, दुःखानि भूयांस्यनुभूय कामम् ।
ग्रामे स धान्ये तिलकावसाने, श्रीशङ्खदत्तस्य कुटुम्बिमौलेः ॥२२॥
गीर्माधवी माधविकातनूभू-र्वसन्तनामा समभूदपुण्यः ।
स मद्यपानव्यसनं तदेव, तत्रैव जन्मन्यपि नो मुमोच ॥२३॥

स दुरात्मा दुराशयः स्कन्दिलः विपद्य मृत्वा नरके जातः सन् भूयांसि दुःखानि नरकयातनाः काममत्यन्तमनुभूय तिलकेतिशब्दोऽवसानेऽन्ते यस्य तादृशे धान्ये तदाख्ये, धान्यतिलकाख्ये ग्रामे कुटुम्बिमौलेः गृहस्थशिरोमणेः श्रीशङ्खदत्तस्य तदाख्यस्य गिरा वाण्या कृत्वा माधव्याः मधुरगिर इत्यर्थः, तस्या माधविकायाः तदाख्यायाः तनूभूः कुक्षिजन्मा वसन्तनामा समभूत्, सोऽपुण्यः पापी स्कन्दिलः तत्र जन्मनि वसन्ताख्येऽपि तदा पूर्वजन्मनीव मद्यपानव्यसनं नैव मुमोच, 'सती च योषित् प्रकृतिश्च निश्चला, पुमांसमभ्येति भवान्तरेष्वपी' त्युक्तेरिति भावः युग्मम् ॥२२॥ ॥२३॥

तदिति—

तद्ग्रामनाथः पथि चाजिहान-स्तेनान्यदाऽदृश्यत दृश्यमूर्तिः ।
गालिप्रदानेन च मद्यपेन, तस्य क्रुदाऽऽधीयत मानभाजः ॥२४॥

दृश्यमूर्तिः दर्शनीयः पथि मार्गे आजिहानो गच्छंश्च तस्य धान्यतिलकाख्यस्य ग्रामस्य नाथः ग्रामणीरित्यर्थः अन्यदा कदाचित्तेन मद्यपेन वसन्तेनादृश्यत दृष्टः । मद्यपेन वसन्तेन च गालिप्रदानेन कृत्वा मानभाजः मानिनीमान्यस्य वा तस्य ग्रामण्यः नाथस्य क्रुद् क्रोधः आधीयत उदपादि ॥२४॥

अथ पुनरपि तस्य भवान्तराण्याह-प्रो इति

प्रोज्जासितस्तेन स मङ्क्षु तिर्यग्-योनिष्वनेकासु चिरं भ्रमित्वा ।
नृत्वं प्रपन्नः पुनरेव देव-दत्ताभिधस्तद् व्यसनं बभाज ॥२५॥

तेन ग्रामाधिपेन मङ्क्षु सद्य एव प्रोज्जासितः हतः स वसन्तः अनेकासु तिर्यग्योनिषु चिरं भ्रमित्वा नृत्वं मनुष्यभवं प्रपन्नः देवदत्ताभिधः पुनरेव तन्मद्यपानरूपं व्यसनम् बभाज प्राप्तवान् ॥२५॥

अथ तस्य चौर्यप्रवृत्तिमाह स इति—

स मद्यपानव्यसनेन तेन, प्रवर्धमानेन विनीतसारः
विवेश कस्याऽपि महेश्वरस्य. निकेतने चौर्य्यकलासु धैर्यः ॥२६॥

स देवदत्तः तेनोक्तेन मद्यपानव्यसनेन प्रवर्धमानेन सता विनीतसारः अविनीतः तथा चौर्यकलासु चौर्यक्रियायाम् सुधैर्यः निपुण. कस्यापि महेश्वरस्य धनाढ्यस्य निकेतने गृहे विवेश प्रवेशं कृतवान् चौर्यार्थमिति शेषः ॥२६॥

अथ तस्य मृत्युमाह आरक्षकेणेति—

आरक्षकेण भ्रमताऽर्धरात्रे, विनिर्गतो लोप्त्रकरः स दृष्टः ।
समग्रलोकस्य सपत्नभूतो. घाताय दत्तो नृपतेर्निदेशात् ॥२७॥

अर्धरात्रे भ्रमता रक्षार्थं पुरभ्रमणं कुर्वता आरक्षकेण समग्रलोकस्य सर्वस्य जनस्य सपत्नभूतः शत्रुः स देवदत्त. लोप्त्रकरः 'स्तेयं लोप्त्रं तु तद्धनं' इत्यमरोक्ते. लोप्त्रं चौर्यं धनं करे यस्य स तद्धनहस्तः दृष्टः नृपते' निदेशात् घाताय वधाय दत्त. वधिकेभ्यः समर्पितश्च ॥२७॥

अथ तस्य वृषभभवमाह-दुरिति—

दुर्ध्यानभावेन महाककुद्मान्, भूत्वा ततः पृष्ठवहप्रतिष्ठः ।
भारं वहँस्तीव्रतृषाक्षुधाभ्यां, कदर्थनाः स प्रचुरा विषेहे ॥२८॥

ततोऽनन्तरं स देवदत्तः दुर्ध्यानभावेन मृत्युकाले कृताशुभध्यानहेतोः महाककुद्मान् महावृषभो भूत्वा पृष्ठवहः पृष्ठेन भारवहनमेव प्रतिष्ठा वृत्तिर्यस्य स तादृशः सन् भारं वहन् तीव्रान्यानसह्याभ्यां तृषाक्षुधाभ्यां कृत्वा प्रचुरा' कदर्थनाः पीडाः विषेहे सोढवान् ॥२८॥

अथ तस्य भवान्तरमाह-तत इति—

ततो विपन्नो वटकूपनाम्नि, ग्रामेऽभिरामे विततोर्वराभिः ।
स शेषराजस्य कुटुम्बिनोऽभूद्, नेदाङ्गजः 'सोम इति प्रतीतः ॥२९॥

ततः वृषभजन्मनि विपन्नः मृतः स स्कन्दिलजीव' विततामि. विपुलाभिरुर्वराभिः सर्वसस्यसंपन्नभूमिभि. कृत्वा "उर्वरा सर्वसस्याढ्या" इत्यमर. । अभिरामे मनोहरे वटकूपनाम्नि ग्रामे कुटुम्बिनः शेषराजस्य तदाख्यस्य नेदाया अङ्गज पुत्र सोम इति नाम्ना प्रतीतः ख्यातोऽभूत ॥२९॥

तत्रापि तस्य तद् व्यसनमाह-तदिति

तद् मद्यपानव्यसनं दुरन्तं, तत्राऽपि तत्याज न सोऽपि सोमः ।
विकारमन्तर्निहितं खलो वा, भुजङ्गम क्ष्वेडमिवापसन्त्रः ॥३०॥

स सोमोऽपि तत्रापि जन्मनि दुरन्तं तन्मद्यपानव्यसनं खलः दुर्जनः अन्तर्निहितमन्तः स्थितं विकारं दुराशयं वेव, अपमन्त्रः मन्त्रेण साधितः भुजङ्गमः सर्पः क्ष्वेडं विषमिव न तत्याज, मालोपमाऽलङ्कारः ॥३०॥

अथ तस्य दुर्वृत्तमाह श्रीति -

श्रीमालिकां नाम स सूरगेह-पतेः सुतां सूररथादिवैताम् ।
कुकर्मनिर्माणसुकर्मशूरः, क्षीवोऽन्यदाऽऽलिङ्ग्य बलादभुक्त ॥३१॥

अन्यदा कदाचित् कुकर्मणः निर्माणे करणे सुकर्मशूरः प्रौढः क्षीवो मत्तः स स्कन्दिल-जीवः सोमः शूरस्य तदाख्यस्य गेहपतेः कुटुम्बिनः सूररथाद्देवविमानादिव एतामागताम् सुरी-मिव, सुन्दरीम् श्रीमालिकां नाम सुताम् बलाद्बलात्कारादालिङ्ग्य अभुक्त शीलभङ्गं कृतवान् ॥३१॥

तद्दण्डेन मृत्युमाह सेति—

स मेहनच्छेदनपूर्वमेव, कदर्थयित्वा बहुधा नृपेण ।
सभेषु चाकार्य्य निवेशितेषु, जनेषु पश्यत्सु विनाश्यते स्म ॥३२॥

स सोमः नृपेण आकार्य सभेषु सर्वेषु निवेशितेषु उपविष्टेषु जनेषु पश्यत्सु सत्सु बहुधा अनेकप्रकारैः कदर्थयित्वा पीडयित्वा मेहनस्य मेढ्रस्य छेदनपूर्वम् विनाश्यते स्म हतः ॥३२॥

अथोपहसंहरति भ्रमीति—

भ्रमिष्यतीत्थं स भवाँश्चिराय, दुरन्तदुःखानुभवं प्रकुर्वन् ।
तद् मद्यपानव्यसनं पुमांसः ! समुज्झताऽन्यव्यसनापहत्यै ॥३३॥

स स्कन्दिलजीवः इत्थमुक्तप्रकारेण दुरन्तानां दुःखानामनुभवं प्रकुर्वन् चिराय चिरकालं यावत् भवान् भ्रमिष्यति, पुमांसः, हे भव्यजनाः तत्तस्माद्धेतोः अन्यस्य व्यसनस्य दुःखस्य वा अपहत्यै विमोचनाय मद्यपानव्यसनं समुज्झत त्यजत, अन्यथा स्कन्दिलवदेव विविधदुःखं प्राप्स्य-थेति भावः ॥३३॥

अथ विषयसेवनं दूषयति चन्द्रेति—

चन्द्रानन ! श्रीकुरुचन्द्रराज !, विन्दन्ति दुःखं भवचारकेऽस्मिन् ।
न जन्तवः के विषयाभिधान-प्रमादसेवापरतन्त्रचित्ताः ? ॥३४॥

चन्द्रानन ! चन्द्रमुख ! श्रीकुरुचन्द्रराज ! अस्मिन् भवचारके भवभ्रमणे विषयाभिधानस्य विषयाख्यस्य प्रमादस्य सेवायां परतन्त्रमधीनं चित्तं येषां तादृशाः विषयलम्पटाः के जन्तवः दुःखं न विन्दन्ति ? अपि तु सर्वे विन्दन्त्येवेत्यर्थः, तस्माद्विषयेच्छा सर्वथा त्याज्यैवेति भावः ॥३४॥

अथ तयोः पुत्रं वर्णयति मुखेति—

मुखप्रवेशोन्मुखसौम्यकान्ति-मृगेश्वरस्वप्नविबुद्धजन्मा ।
तयोः कुमारो गुणवर्मनामा, धर्मस्थितिः शर्मकरो जनानाम् ॥३९॥

मुखप्रवेशोन्मुखः मुखं प्रविशन् सौम्यकान्तिः अनेन विशेषणेन स्वप्नस्य शुभत्वं सूचितं मृगेश्वरः सिंहः तस्य स्वप्नेन विबुद्धं ज्ञातं जन्म यस्य स तादृशः यज्जन्मनि माता मुखे प्रविशन्तं सिंहं स्वप्ने ददर्श स इत्यर्थः कान्तिरिति सविभक्तिकपाठस्तु प्रामादिकः अन्यथाऽन्वयासम्भवादिति बोध्यम् । धर्मे स्थितिर्यस्य स तादृशः धर्मिष्ठः जनानां शर्मकरः सुखकारकः गुणवर्मनामा तयोः दृढवर्मशीलशालिन्योः कुमारः पुत्रः, अभूदिति शेषः ॥३९॥

अथ तस्य कलाप्राप्तिमाह विनीतेति—

विनीतमध्यापकसङ्गमेन, कलास्तमाशिश्रियुरेककालम् ।
भागीरथीशैवलिनीबलेन, रत्नाकरं नद्य इवातिवेलम् ॥४०॥

कलाः प्रसिद्धाः चतुष्षष्टिप्रकाराः तं विनीतं विनयशीलम् . अध्यापकस्य शिक्षकस्य तत्तत्कलाचार्यस्य सङ्गमेन सम्पर्केण कृत्वा नद्यः रत्नाकरम् समुद्रं भागीरथी गङ्गा तस्याः शैवलिन्या महानद्या बलेन सङ्गप्राप्तिरूपयुक्त्या इवातिवेलमत्यर्थम् एककालं युगपदेव आशिश्रियुराश्रितवत्यः ॥ उपमा ॥४०॥

अथ तस्य यौवनप्राप्तिमाह विलेति—

विलासिनीचञ्चललोचनालि-रोलम्बसंवासनपद्मरूपम् ।
शास्त्रेषु शस्त्रेषु च लब्धपारः, क्रमादसौ यौवनमाससाद ॥४१॥

असौ गुणवर्मा क्रमात्, शास्त्रेषु शस्त्रेषु धनुर्वेदेषु च लब्धपारः पारङ्गतः सन् विलासिनीनां स्त्रीणां चञ्चला लोचनानामालयः श्रेणय एव रोलम्बा भ्रमरास्तेषां संवासने स्वस्मिन् स्थितिनिमित्तं पद्मरूपं यौवनमाससाद प्राप, भ्रमराणां पद्ममिव आह्लादकं स्त्रीणां तद्यौवनमित्यर्थः ॥४१॥

अथ तस्य कलादि भङ्ग्या वर्णयति गुरुमिति—

गुरुं बुधास्तं कलयाम्बभूवु-र्मृगीदृशो मन्मथरूपमेतम् ।
प्रजा जयन्तप्रतिरूपमाराद्, वनीपकाः कल्पतरुं त्वितश्च ॥४२॥

बुधाः पण्डिताः तं गुणवर्मकुमारम्, गुरुं कलाभि स्वश्रेष्ठत्वाद्रहस्योपदेशकत्वाच्चोपदेष्टारम्, अथ च बृहस्पतिरूपम्, कलयाम्बभूवु मेनिरेः, तथा—एतं गुणवर्मकुमारम् मृगीदृशः स्त्रियः मन्मथरूपं कामदेवरूपम् कलयाम्बभूवुः तथा प्रजाः आरादपेक्षातः जयन्तस्येन्द्रपुत्रस्य प्रतिरूपम्, कलयाम्बुभूवुः । तथा वनीपकाः याचकाः "याचकस्तु वनीपकः" इति हैमः । कल्प-

तरुं तु कल्पवृक्षरूपश्च, कलयाम्बभूवु', अभीष्टप्रदत्वादिति भाव'। कलावान् सौभाग्यवान् प्रजापालकोऽभीष्टप्रदश्च स इत्यर्थः। इतश्चेति कथान्तरसूचने. अग्रिमश्लोकोऽन्वेति ॥४२॥

पुरे इति—

पुरे वसन्तोपपदेऽस्ति भूमा-नीशानचन्द्रः प्रविभूततन्द्रः ।
विनिर्जितो यस्य यशोभिरीशो, भूत्या वपुः स्वं विशदीकरोति ॥४३॥

इतश्च पक्षान्तरे, वसन्तोपपदे पुरे वसन्तपुरे प्रविभूता तिरस्कृता तन्द्रा येन स तादृशः तेजस्वी, ईशानचन्द्रः तदाख्यः भूमान्नृपोऽस्ति, यस्य ईशानचन्द्रस्य यशोभिः कर्त्रा स्वधावल्येन कृत्वा विनिर्जितः ईशः शुक्लाङ्गः महादेवः भूत्या भस्मना कृत्वा स्वं वपु' शरीरं विशदीकरोति तद्यशोधावल्यजयायातिशयेन श्वेतं करोतीव कथमन्यथा तस्य भस्माङ्गराग इति भाव'॥ उत्प्रेक्षा ॥४३॥

अथ तत्कन्यकां वर्णयति तदिति—

तत्कन्यकोत्तप्तसुवर्णवर्णा, विवर्णनीयाऽप्सरसां रुचीभिः ।
यन्नाम पूर्वं कनकं वतीति, वर्णावलीद्योति पदं ततोऽन्त्यम् ॥४४॥

तस्येशानचन्द्रस्य उत्तप्तं शुद्धं यत्सुवर्णं तदिव वर्णो यस्याः सा तादृशी अप्सरसां रुचीभिः कान्तिभिः विवर्णनीयोपमेया अप्सरस्तुल्या कन्यका आसीदिति शेष'। यस्या कन्यकायाः नाम पूर्वं पूर्वपदं कनकम्, ततः पूर्वादन्यदन्त्यं पदं वतीत्यक्षरद्वयरूपवर्णावल्या द्योतते शोभते इत्येवं शीलम्, कनकवतीत्येवमित्यर्थः ॥४४॥

अथ तत्स्वयंवरे राजकुमाराणामागमनमाह आकेति—

आकारिता दूतमुखेन राज्ञा, रम्याः कुमाराः स्वपरिच्छदेन ।
स्वयंवरोद्वाहमहे तदीये, पुरं तदेव त्वरितं समेयुः ॥४५॥

तदीये कनकवत्याः स्वयंवररूपे उद्वाहस्य विवाहस्य महे उत्सवे राज्ञा ईशानचन्द्रेण कर्त्रा दूतमुखेन दूतद्वारा आकारिता आहूताः रम्या' सौन्दर्यवन्त' कुमारा नृपपुत्रा स्वपरिच्छदेन स्वपरिजनेन सह तत्पुरं वसन्तपुरं त्वरितमेव समेयुरागताः ॥४५॥

अथ गुणवर्मणस्तत्र गमनमाह कुमेति

कुमारकः श्रीदृढवर्मराज-निदेशमासाद्य स सद्य एव ।
स्वयंवरस्थानमवाप दूता-हूतस्तदिद्धं गुणवर्मनामा ॥४६॥

स गुणवर्मनामा कुमारक' दूतेन कृत्वा आहूत सन् श्रीदृढवर्मराजस्य तदाख्यस्य स्वपितु निदेशमासाद्य प्राप्य सद्य एव इद्धम् सामग्रीसमग्रं प्रशस्त तत्स्वयंवरस्थानमवाप प्राप ॥४६॥

**अथ तत्र तस्यातिथ्यमाह ईशानेति—**

ईशानचन्द्रेण महीभुजा स, प्रत्युद्गतः सङ्गतवत्सलेन ।
गन्धर्ववैतालिककल्पवृक्षः, प्रदत्तसौधे दिवसान् निनाय ॥४७॥

संगतेन यथोचितेन वत्सलेन स्निग्धेन 'स्निग्धस्तु वत्सले' इत्यमरः । ईशानचन्द्रेण महीभुजा प्रत्युद्गतः, अग्रे आगत्य कृतातिथ्यः गन्धर्वाणां वैतालिकानाञ्चाभीष्टप्रदत्वात्कल्पवृक्षः तत्तुल्यः स गुणवर्मकुमारः प्रदत्तसौधे वासार्थार्पितप्रासादे दिवसान् निनाय व्यतिक्रान्तवान् ॥४७॥

**अथ तस्य स्वयंवरमण्डपगमनमाह कुतूहलेति—**

कुतूहलालम्बिमना कुमार–स्तमन्यदा प्राप जनाश्रयं सः ।
आदातुमभ्युत्सुकतां वितन्वन् विलोचनानां फलमात्मनैव ॥४८॥

कुतूहलस्य स्वयंवरमण्डपादिदर्शनकौतुकस्यालम्बि मनो यस्य स तादृशः उत्सुकः स गुणवर्मा अन्यदैकदा अभ्युत्सुकतां कौतुकदर्शनोत्कण्ठाम् वितन्वन् कुर्वन् विलोचनानां नेत्राणां फलं कौतुकदर्शनादिरूपमात्मना स्वयमेवादातुं ग्रहीतुम् तं जनाश्रयं स्वयम्वरमण्डपं "मण्डपस्तु जनाश्रयः" इति हैमः । प्राप ॥४८॥

**अनेकेति—**

अनेकमूर्तिः स विचित्ररत्न–स्तम्भेषु संक्रान्तवपुर्बभासे ।
स्वयंवराडम्बरसुन्दरत्वा–वलोकनायेव नरेन्द्रसूनुः ॥४९॥

स नरेन्द्रसूनुः गुणवर्मकुमारः विचित्रेषु विलक्षणेषु नानाविधेषु च रत्नानां स्तम्भेषु संक्रान्तवपुः प्रतिबिम्बितः सन् स्वयंवरस्य आडम्बरस्य समृद्धेः सुन्दरत्वस्य सौन्दर्यस्य च अवलोकनाय अनेकमूर्तिरनेकरूप इव बभासे ॥ उत्प्रेक्षा ॥४९॥

**अथ तत्र कनकवत्यागमनमाह रूपेति—**

रूपप्रपञ्चातिविचित्रसार–पाञ्चालिकाभिः प्रविलोकनीयम् ।
विलोकमानस्य तदा तमस्य, सेशानभूपालसुता समागात् ॥५०॥

तदा रूपप्रपञ्चेन सौन्दर्येण कृत्वा, अतिविचित्रः सारोऽङ्गादितत्त्वं यासां ताभिः पाञ्चालिकाभिः पुत्तलिकाभिः कृत्वा प्रविलोकनीयं दर्शनीयं तं स्वयंवरमण्डपं विलोकमानस्य अस्य गुणवर्मणः सतः सा ईशानभूपालसुता कनकवती समागात्, तत्रेति शेषः ॥५०॥

**सेति—**

सा तारताराभिरिवेन्दुलेखा, विभ्राजमाना परितः सखीभिः ।
विद्योतयन्ती ककुभः स्वभासा, विलोकयामास जनाश्रयं तम् ॥५१॥

सा कनकवती परितः सखीभिः इन्दुलेखा चन्द्रलेखा ताराभिः शुद्धाभिः ताराभिः तारकाभिरिव विभ्राजमाना स्वभासा स्वकान्त्या ककुभः दिशः विद्योतयन्ती प्रकाशयन्ती सती तं जनाश्रयं मण्डपं विलोकयामास ॥ उपमालङ्कारः ॥५१॥

ईशानेति—

इशानचन्द्रक्षितिपालकन्या, मान्या स्वरूपेण रतेरपीयम् ।
निध्याय तं तत्र नरेन्द्रपुत्रं, स्मरेषुविद्धेव चिराय दध्यौ ॥५२॥

स्वरूपेण सौन्दर्येण हेतुना रतेः कामप्रियायाः अतिसुन्दर्या अपि ततोऽप्यधिकसुरूपत्वाद्धेतोः मान्या पूज्या इयमिशानचन्द्रस्य क्षितिपालस्य कन्या कनकवती तत्र जनाश्रये तं नरेन्द्रपुत्रं गुणवर्मकुमारं निध्यायावलोक्य स्मरेषुभिः कामबाणैः विद्धा इव चिराय दध्यौ विचारयामास ॥५२॥

किं विचारयामासेत्याह महेशेति--

महेशजन्मा किमयं कुमारः, स्वामी महासेनतया श्रुतो यत् ! ।
श्रीनन्दनोऽयं किमु कामरूपो, नासत्यबन्धुः किमु वा तृतीयः ॥५३॥

अयं दृश्यमानः कुमारः महेशजजन्मा शिवपुत्रः किमिति वितर्के अयं शिवपुत्रः महासेनतया स्वामी सेनानी श्रुतः ख्यातः तत्तुल्यलक्षणत्वादिति भावः, अथवा, कामरूपः कामदेवस्वरूपः अयं श्रीनन्दनः लक्ष्मीपुत्रः प्रद्युम्नः किम् ? वा अथवा तृतीयः नासत्यबन्धुः दस्रभ्राता किमु ? नासत्ययोर्द्वित्वादिति भावः अत्र सन्देहालङ्कारः—तल्लक्षणं यथा—"सन्देहः प्रकृतेऽन्यस्य संशयः प्रथमोत्थित" इति ॥५३॥

अथ तस्यासाधारण्यमाह एतादृशीति—

एतादृशी मूर्तिरसाम्यरूपा, सुरेषु चेद् स्याद् यदि वाऽसुरेषु ।
महाकवीनामपि वर्णनायां, श्रूयेत द्रव्यार्थविवर्णकानाम् ॥५४॥

दृश्यमानप्रकारा मूर्तिः स्वरूपमसाम्यरूपाऽनुपमा, सुरेषु असुरेषु वा यदि चेत्स्यादेतादृशीमूर्तिः, तर्हि द्रव्यार्थानाम् द्रव्यगुणादीनां विवर्णकानाम् वर्णनप्रवृत्तानाम् महाकवीनां वर्णनाया श्रूयेत न च श्रूयतेऽतो नास्तीति भावः । अत्र व्यतिरेकेण साध्यसाधनात्कुमारस्य सुरासुरवैलक्षण्यं ध्वन्यते ॥५४॥

मर्त्येष्वपि नेत्याह मर्त्येष्विति—

मर्त्येषु चेदेष विशेषवेदी, कश्चिद् विपश्चित्तमशंसनीयः ।
स्वर्गेण तत् किं करणीयमस्ति, किमर्थमायास्यत एव चात्मा ? ॥५५॥

विपश्चित्तमेन पण्डितप्रवरेण शंसनीयः कीर्तनीयः विशेषवेदी विज्ञ एष कश्चिदनिर्दिष्टनामा दृग्गोचरः मर्त्येषु चेत्स्यात्, तर्हि, तत्ततो हेतोः स्वर्गेण कृत्या किं करणीयमस्ति ? न किमपि

प्रयोजनम् स्वर्गदुर्लभस्याप्यत्रैव लाभादिति भावः । तथा आत्मा च किम्फलार्थमेवायास्यते प्रयासं प्राप्यते, प्राप्यस्यात्रानायासेनैव प्राप्तेरिति भाव । मर्त्योऽप्ययं नेति भावः ॥५५॥

ननु तर्हि कुतोऽस्य सम्भव इति चेत्तत्राह घुणेति—

घुणाक्षरन्यायवशादवश्यं, ससर्ज धाताऽपि नृरत्नमीदृक् ।
अन्यत्र चेदृक्षमवेक्ष्यते न, यद्रूपमाकर्ण्यत एव नैव ॥५६॥

धाता—सृष्टिकर्ता ब्रह्माऽपि अवश्यमसंशयं ईदृग् नृरत्नम् घुणाक्षरन्यायवशात्ससर्ज रचयामास, न तु बुद्धिपूर्वकम्, तत्र हेतुमाह यथतः अन्यत्र ईदृक्षं पुरुषं न चावेक्ष्यते रूपमेव चेदृशं नैवाकर्ण्यते, बुद्धिपूर्वकसर्जने हि ईदृशोऽन्यो भवितुमर्हति नान्यथेति भावः ॥५६॥

अथ तस्मिन् स्वभावं ध्यायति-परीति--

परिश्रमः स्यात् सफलो विधातु-स्तदा जगन्निर्मितिनिर्मितोऽयम् ।
संयोक्ष्यतेऽनेन समं यदा मा-मनन्यसामान्यकलाङ्गकेन ॥५७॥

विधातुः स्रष्टु जगतः लोकस्य निर्मितौ निर्माणे निर्मितः कृतोऽयं दृश्यमानकुमारनिर्माणरूपः परिश्रमः तदा सफलः स्याद्यदा अनन्यसामान्यकलानि असाधारणमधुराणि अङ्गकानि यस्य तेन—"मधुरः कलः" इति हैमः । अनेन दृश्यमानेन कुमारेण समं मां कनकवतीं संयोक्ष्यते विवाहसम्बन्धेन योजयिष्यति, अन्यथा त्वेतस्य मादृशप्रियाप्राप्त्यभावे अनुरूपयोगाभावादपूर्णतैवेति भङ्ग्या स्वस्य तदनुरूपवरत्वं ध्वन्यते इति बोध्यम् ॥५७॥

अथ तस्या निश्चयमाह-एतमिति—

एतं परित्यज्य कदाचिदन्यं, भर्तारमार्ताऽपि न संश्रयिष्ये ।
इति स्वचित्तेन विचिन्तयन्ती, प्रसह्य साऽऽलीभिरनायि सौधम् ॥५८॥

आर्ता—पीडिताऽपि बलात्कारेणापीति यावत् । एतं दृश्यमानं गुणवर्मकुमारं परित्यज्य अन्यं भर्तारं कदाचित्कदापि न संश्रयिष्ये वरिष्ये इतीत्थं स्वचित्तेन विचिन्तयन्ती सा कनकवती आलीभिः सखीभिः प्रसह्य हठात् कुमारासक्ततया स्वयमगमनादिति भावः ॥ सौधं स्वप्रासादमनायि प्रापिता ॥५८॥

तस्यां कुमारभावमपि भङ्ग्या वर्णयति-सेति—

सा राजकन्याऽपि नरेन्द्रसूनो-र्हृत्वाऽप्यहो! मानसराजहंसम् ।
नालक्षि केनाऽपि गृहं व्रजन्ती, ह्यशिक्षितं कौशलमेतदस्याः ॥५९॥

सा राजकन्या कनकवत्यपि नरेन्द्रसूनोः गुणवर्मकुमारस्य मानसराजहंसं मनोरूपं हंसं हृत्वा चोरयित्वा गृहं व्रजन्ती गच्छन्ती केनाऽपि न अलक्षि तर्कितम्, अहो ! आश्चर्यमेतत् गूढमनोभावतया न केनाऽपि ज्ञातमिति भावः । अस्या कनकवत्याः एतत्कौशलं कुमारमनोहरणरूपं पाटवं

हि यतः अशिक्षितम् अनभ्यस्तम् प्रागन्यस्य कस्यापि मनसोऽनपहरणात् तथापि न केनापि ज्ञात-मित्याश्चर्यमिति भावः ॥५९॥

अथ कुमारचिन्तामाह कस्यापीति--

**कस्यापि शापेन मुनेः शचीयं, दिवोऽवतीर्णा यदि वोर्वशीयम् ? ।**
**इति स्वचित्ते दधदूहमेष, राजाङ्गजोऽपि प्रविवेश सौधम् ॥६०॥**

इयं दृश्यमाना राजकन्या शची इन्द्राणी यदि वा इयमुर्वशी प्रसिद्धाप्सरोविशेष एव दिवः स्वर्गात् कस्यापि मुनेः शापेन हेतुना अवतीर्णा पृथिव्यामायाता मानुष्यास्तादृगसाधारण्या असम्भ-वादिति भावः, इतीत्थमूहं विचारं स्वचित्ते दधदेव राजाङ्गजः गुणवर्मकुमारोऽपि सौधं स्वप्रासादं प्रविवेश ॥६०॥

अथ कुमारस्य कामव्यथामाह

**पञ्चेषुणा पञ्चभिरेव बाणैः, प्रक्षोभमाणानि निजेन्द्रियाणि ।**
**पञ्चाऽपि रक्षन् दृढवर्मसूनु-स्तस्या स्मरन्नेव दिनान् निनाय ॥६१॥**

पञ्चेषुणा कामेन पञ्चभिस्तत्सङ्ख्यकैः सकलैरेव बाणैः कृत्वा, एतेन कामोत्कटतोक्ता । प्रक्षोभमाणानि पीड्यमानानि पञ्चापि निजेन्द्रियाणि रक्षन् अनुपालयन् स्वस्थानि स्थापयन् तस्याः कनकवत्याः स्मरन् एव दृढवर्मसूनुः गुणवर्मकुमारः दिनान् निनाय ॥६१॥

अथ कनकवतीप्रवृत्तिमाह याते इति—

**यातेऽथ यामे प्रथमे रजन्या, वृद्धस्त्रियं स्वीयभुजिष्ययाऽमा ।**
**प्रस्थापयामास तदन्तिके सा, रागं दधाना हृदयेऽसमानम् ॥६२॥**

अथ पश्चान्तरे रजन्या रात्रेः प्रथमे यामे प्रहरे याते व्यतीते सति हृदये असमानम् अत्यु-त्कटं रागं गुणवर्मविषयप्रेम दधाना सा कनकवती वृद्धां काञ्चित्स्त्रियं स्वीयया भुजिष्यया दास्या अमा सह तस्य गुणवर्मकुमारस्यान्तिकं समीपं प्रस्थापयामास प्रेषयामास ॥६२॥

अथ तस्या वृद्धायाः प्रवृत्तिमाह निवेदितेति—

**निवेदिता वेत्रीविशेषकेण, कुमारसामीप्यमवाप्य साऽपि ।**
**उपायनं तस्य करे चकार, चित्राऽऽस्पदं चित्रितपट्टिकाङ्कम् ॥६३॥**

सा वृद्धाऽपि वेत्रिषु द्वारपालेषु विशेषकस्तिलक इव—"तमालपत्रतिलकचित्रकाणि विशेषकं" इत्यमरः । तेन निवेदिता ज्ञापिता सती कुमारस्य गुणवर्मकुमारस्य सामीप्यमवाप्य चित्रास्पद-माश्चर्यकारकम् चित्रिता पट्टिका अङ्कश्चिह्न यस्य तं तादृशमुपायनं तस्य गुणवर्मकुमारस्य करे चकार ददौ ॥६३॥

**अथ पट्टिकां विशिनष्टि विचित्रेति—**

**विचित्रवर्णस्थितिराजमानां, पुरीमिवैक्षिष्ट स तत्र हंसीम् ।**
**अत्युज्ज्वलश्लोकविगाढदिक्क, एकं पुनः श्लोकमधश्च तस्याः ॥६४॥**

अतिशयेनोज्ज्वलेन श्लोकेन यशसा 'पद्ये यशसि च श्लोक' इत्यमरः। विगाढा व्याप्ता दिशो येन स तादृशः दिगन्तव्याप्तकीर्तिः स गुणवर्मा कुमारः तत्र पट्टिकायाम् विचित्राणां विलक्षणानां नानाविधानां च वर्णानाम् अक्षराणाम् ब्राह्मणादिवर्णानाञ्च स्थितिभिरवस्थानैः कृत्वा पुरीं-नगरीमिव हंसीम् ऐक्षिष्ट, तस्याः चित्रहंस्याः अधो नीचैश्च पुनः एकं श्लोकं पद्यम् ऐक्षिष्ट ॥६४॥

**अहो ! इति—**

**अहो ! प्रियालोकनकाल एव, जाताधिरागा कलहंसिकेयम् ।**
**खिन्नाऽपि तस्यानवलोकनेन, समीहते दर्शनमेव भूयः ॥६५॥**

अहो ! इति-सहर्षाश्चर्ये, प्रियस्य आलोकनकाले एव जातोऽधिको रागः प्रेमा यस्याः सा तादृशी अत्यनुरक्ता इयं कलहंसिका हंसी तस्य प्रियस्यानवलोकनेनादर्शनेन कृत्वा खिन्ना दूनाऽपि भूय एव दर्शनं प्रियस्य दर्शनं समीहते, अहं त्वां दिदृक्षामीत्यन्योक्त्याशयः ॥६५॥

**अथ कुमारस्य प्रत्युत्तरप्रयासमाह-विज्ञायेति--**

**विज्ञाय विज्ञापनयैव दास्या–स्तस्या अभिप्रायमसौ कुमारः ।**
**तद्रूपमालिख्य च राजहंसं, श्लोकं ततस्तादृशमालिलेख ॥६६॥**

दास्याः विज्ञापनया राजपुत्रीवृत्तनिविदनेन कृत्वा तस्याः कनकवत्या अभिप्रायं विज्ञायासौ कुमारः गुणवर्मा तद्रूपं हंसीतुल्यं राजहंसमालिख्य चित्रयित्वा च ततः तादृशमुक्तानुरूपं श्लोकमालिलेख ॥६६॥

**कोऽसौ श्लोक इत्याह-प्रवृद्ध इति—**

**प्रवृद्धरागप्रचयं प्रियाया, हंसोऽप्यसौ तत्क्षणवीक्षणेन ।**
**नित्यं प्रियाप्रेक्षणमेव कामं, सुखोपलब्ध्यै परमिच्छतीह ॥६७॥**

इह प्रियायाः तत्क्षणं वीक्षणेन कृत्वा प्रवृद्धरागप्रचयम् उत्कटरागवान्–असौ हंसोऽपि नित्यम् कामं यथेष्टं सुखोपलब्ध्यै कामसुखावाप्तये प्रियायाः प्रेक्षणम् दर्शनमेव परं केवलमिच्छति, अहं तद्रागपरवशः त्वामेव कामये इत्यन्योक्तिसारांशः ॥६७॥

अथ वृद्धायास्तद्रोचनमाह-आदायेति--

आदाय तां चित्रितपट्टिकां सा-ऽप्येषा जरत्स्त्री नृपनन्दनाय ।
ताम्बूलपुष्पादिविचित्रवस्तु, व्यश्राणयत् तत्प्रहितं च तस्मै ॥६८॥

एषा सा पूर्वोक्ता जरत्स्त्री वृद्धा अपि तां कुमारदत्तां चित्रितपट्टिकाम् आदाय तस्मै नृपनन्दनाय गुणवर्मकुमाराय तया कनकवत्या प्रहितं प्रेषितं ताम्बूलपुष्पादिरूपं विचित्रं नानाविधं वस्तु व्यश्राणयद् दत्तवती ॥६८॥

स्वयमिति—

स्वयं समादाय नृपाङ्गजोऽपि, प्राणप्रियाप्रेषितमित्यतस्तद् ।
कृतार्थयामास कृती समस्तं, निजाङ्गसङ्गेन सरागचित्तः ॥६९॥

कृती सिद्धार्थत्वात्कृतार्थः सरागचित्तः नृपाङ्गजः गुणवर्मकुमारोऽपि प्राणप्रियया प्रेषितमित्यतः तद् वृद्धयार्पितं ताम्बूलादि समस्तं सर्वमेव स्वयमेव समादाय निजाङ्गसङ्गेन स्वाङ्गेनोपभोगेन कृत्वा कृतार्थयामास तत्साफल्यमकरोत् ॥६९॥

अथ कुमारकृतोपहारमाह-तस्या इति—

तस्यै कुमारोऽपि ददौ स्वहारं, तच्चित्तवृत्तेः परितोषहेतोः ।
सा स्पष्टमाचष्ट रहस्तवैव, कन्यावचः किञ्चन कथ्यमस्ति ॥७०॥

कुमारः गुणवर्मकुमारोऽपि तस्यै वृद्धायै तस्याः कनकवत्याः चित्तवृत्तेः परितोषहेतोः प्रसादनाय स्वस्य हारं ददौ, सा वृद्धा स्पष्टमाचष्ट कथितवती, किमित्याह रह एकान्ते तव एव नान्यस्य किञ्चन कन्यायाः कनकवत्याः वचः कथ्यम् कथनीयमस्ति ॥७०॥

अथ तस्या रहःकथनोपक्रममेवाह-स्वरूपेति--

स्वरूपमारेण कुमारकेण, भ्रूसंज्ञयोत्थापित एव लोके ।
व्यजिज्ञपत् सा जरती समस्तं, संदिष्टमिष्टाय तया निविष्टा ॥७१॥

स्वरूपेण मारः काम इव तेन कुमारकेण गुणवर्मकुमारेण भ्रुवः संज्ञया सङ्केतेन लोके उत्थापिते ततोऽन्यत्र गमिते सत्येव सा निविष्टा निपुणा उपविष्टा जरती वृद्धा तया कनकवत्या इष्टाय प्रियाय संदिष्टं वाचिकं समस्तं साकल्येन व्यजिज्ञपत् ॥७१॥

तत्सन्दिष्टमेवाह-रसेति—

रसज्ञया देव! मया द्विधाऽपि राजाङ्गना वक्ति भवन्तमेवम् ।
हृत्वा पुरा रत्नक ! चित्तरत्नं, ममाऽसि यातः प्रथमे क्षणेऽपि ॥७२॥

देव ! राजन् ! राजाङ्गजा राजपुत्री कनवती द्विधा नाम्नाऽर्थेण च रसं जानाति इति तया जिह्वया च मया द्वारा भवन्तमेवं वक्ति प्रथमावलोकनकाल एवमिति किमित्याह—रक्षक! प्रथमे क्षणेऽपि क्षणं एव पुरा प्राक् मम चित्तमेव रत्नं हृत्वा, मम चित्तस्य रत्नं ध्येयत्वेन रत्नमिव यातोऽसि, अहं त्वदासक्ता सततं त्वामेव ध्यायामीत्यर्थः ॥७२॥

अपरं वक्तव्यमाह-नियेति—

नियन्त्रयिष्यामि ततो भवन्तं, शक्ता स्वयं श्वो वरणस्रजैव ।
परं न यावत परिपूर्यते सा, प्राज्ञ! प्रतिज्ञा मम काऽपि चात्र ॥७३॥

ततश्चित्तरत्नहरणाद्धेतोः शक्ता सामर्थ्यवत्यहं स्वयं श्वः आगामिनि दिने भवन्तं वरणस्रजा स्वयंवरमालया एव नियन्त्रयिष्यामि चौरस्य हि बन्धनमुचितमेवेति भावः। त्वामेव वरयितास्मीति यावत् प्राज्ञ? धीमन् ! प किन्तु अत्र मम काऽपि प्रतिज्ञा सा यावन्न परिपूर्यते, अस्य तावदित्यग्रिमश्लोकेनान्वयः ॥७३॥

यावदिति किमित्याह-तावदिति—

तावद् न किञ्चिद्भवताऽपि वाच्या, वाच्योज्झता भोगसमर्थनार्थम् ।
तथेति तेन प्रतिपादिता सा, स्वस्थानमायातवती विमाया ॥७४॥

तावद्भवताऽपि भोगसमर्थनार्थं भोगार्थम् न वाच्येन कथनीयेन उज्झिता त्यक्ता सुरताद्युपभोगार्थमप्रेरणीयाऽहं न किंचिद्वाच्या निदेश्या, तथास्त्विति तेन गुणवर्मकुमारेण प्रतिपदिता कृतोत्तरा विमाया निष्कपटा वृद्धा स्वस्थानमायातवती ॥७४॥

अथ सूर्योदयमाह-ईशानेति—

ईशानचन्द्रक्षितिचन्द्रकन्या, वरिष्यते पुण्यनिधिं कमद्य ?।
इति स्वयं द्रष्टुमिवोदयाद्रि-शृङ्गं दिनेशोऽथ बभाज तुङ्गम् ॥७५॥

अथ अद्य ईशानचन्द्रस्य तदाख्यस्य क्षितौ चन्द्र इव तस्य कन्या कनकवती कं पुण्यनिधिपुण्यवन्तं पुरुषं वरिष्यते, तया वरिष्यमाणः कोऽपि पुण्यवानेव भवितुमर्हति, अकृतपुण्यस्य तादृशकन्याप्राप्त्यसम्भवादिति भावः। इतीदं स्वयं द्रष्टुमिव दिनेशः सूर्यः तुङ्गमत्युच्चमुदयाद्रेः शृङ्गं बभाज प्राप, उदितवानित्यर्थः ॥७५॥

महीपतीनां सकलाः कुमाराः, शृङ्गारसंसर्गमनोज्ञरूपाः ।
मञ्चेषु कैलाससमुन्नतेषु, तस्थुर्नु पञ्चेषुमिवावजेतुम् ? ॥७६॥

वर्णितानि श्रुत्वा सोत्कण्ठचित्ता सोत्सुका सा कनकवती कुमारस्य गुणवर्मकुमारस्य कण्ठे वरमालिकां निचिक्षेप मुक्तवती ॥८०॥

अथ विवाहोत्सवमाह-ईशानेति—

ईशानचन्द्रो महता महेन, लग्ने प्रशस्ते गुणवर्मणा ताम् ।
विवाह्य वाहादि वितीर्य सारं, कृतार्थयामास नृपो द्विधा स्वम् ॥८१॥

नृपः ईशानचन्द्रः प्रशस्ते शुभे लग्ने मुहूर्ते महता महेनोत्सवेन तां कनकवतीं गुणवर्मणा सह विवाह्य सारमुत्तमं वाहादि हयादि वितीर्य यौतुके दत्त्वा स्वमात्मानं द्विधा वचसा कर्मणा च कृतार्थयामास कृतः सिद्धोऽर्थः प्रयोजनं यस्य तादृशं चकारेत्यर्थः न केवलं वचसा कृतार्थः किन्तु कर्मणाऽपीति भावः ॥८१॥

अथ तस्य स्वपुरगमनमाह मन इति—

मनोरथान् मार्गणमानसानां, वाञ्छाऽतिरिक्तैर्द्रविणप्रदानैः ।
संपूर्य्य स क्ष्मापतिना विसृष्टो, वध्वा समं स्वं नगरं जगाम ॥८२॥

क्ष्मापतिना ईशानचन्द्रेण विसृष्टः स्वपुरगमनार्थमनुमतः स गुणवर्मकुमारः वध्वा प्रियया कनकवत्या समम् मार्गणानां याचकानां मानसानाम् मनोरथान् अभिलाषान् वाञ्छया इच्छयाऽतिरिक्तैरधिकैः द्रविणानां धनानां प्रदानैः कृत्वा संपूर्य स्वं नगरं जगाम ॥८३॥

अथ स्वावासगमनमाह-राज्ञेति —

राज्ञा महेच्छेन महोत्सवेन, प्रवेशिता पत्तनमात्मजेन ।
समं वधूः सा श्वशुरेण हर्षात्, सौधे प्रदत्ते स्थितिमाततान ॥८३॥

महेच्छेन महाशयेन—"महेच्छस्तु महाशय" इत्यमर । राज्ञा दृढवर्मणा श्वशुरेण महोत्सवेनात्मजेन पुत्रेण गुणवर्मणा समं पत्तनं नगरं प्रवेशिता सा कनकवत्याख्या वधू: प्रदत्ते श्वशुरेणार्पिते सौधे हर्षात् स्थितिमाततानाध्युवास ॥८३॥

अथ तयोर्विलासमाह-कदेति—

कदाचिदस्या भवनं समेतः,सखीसमाजेन समाश्रितायाः ।
प्रहेलिकाभिः सुचिरं स रेमे, प्रश्नोत्तरैश्चापि नरेन्द्रसूनुः ॥८४॥

कदाचित् सखीसमाजेन सखीगणेन समाश्रितायाः सेवितायाः अस्याः कनकवत्याः भवनं समेत आगत: स नरेन्द्रसूनु: गुणवर्मा प्रहेलिकाभि. प्रश्नोत्तरैश्चापि सुचिरं रेमे ॥८४॥

अथ द्वारपालनिवेदनमाह-सौधमिति—

सौधं पुनः स्वं समुपागतोऽयं, भुजिक्रियापूर्वविलेपनं च ।
कृत्वा सभां संप्रतिपद्य तिष्ठन् दौवारिकेणैवमवादि नन्त्रा ॥८५॥

पुनः रमणानन्तरं स्वं सौधं समुपागतः अयं गुणवर्मकुमारः पूर्वं विलेपनं स्नानाभ्यङ्गानुलेपनादि, पश्चाच्च भुजिक्रियां भोजनं च कृत्वा सभां सम्प्रतिपद्याश्रित्य तिष्ठन् नत्रा प्रणामपरेण दौवारिकेण द्वारपालेन एवं वक्ष्यमाणप्रकारेणावादि कथितः ॥८५॥

एवमिति-किमित्याह-कश्चिदिति—

कश्चित् परिव्राड् नियतः कुमार !, द्वारि स्थितस्त्वां स दिदृक्षुरस्ति ।
प्रवेश्यतां तर्हि स शीघ्रमेवे-त्युक्तस्तथा सोऽपि चकार विद्वान् ॥८६॥

कुमार ! कश्चिद् नियतः संयमी परिव्राट् द्वारि स्थितोऽस्ति, स त्वां दिदृक्षुः द्रष्टुमिच्छुरस्ति तर्हि स परिव्राट् शीघ्रमेव प्रवेश्यतामितीत्थमुक्तः विद्वान् धीमान् स द्वारपालोऽपि तथा चकार कृतवान् ॥८६॥

अथ परिव्राजं युग्मेन वर्णयति-तदिति—

तत्सन्निधानं गुणसन्निधानं, प्राप्तः परिव्राड् विकृताकृतिः सः ।
आशीर्गिराऽनन्तरमेव तेन, भद्रासने भद्रतमेऽपि दत्ते ॥८७॥
उपाविशत् तत् प्रविहाय वृष्यां, समाहृतायां सममात्मनैव ।
पृष्टस्त्वभाषिष्ट गुरुप्रतिष्ठः, समागमस्यापि निदानमेवम् ॥८८॥ युग्मम्

गुणानां सन्निधानं सामीप्यं यत्र तं तादृशं तस्य गुणवर्मकुमारस्य सन्निधानं सामीप्यं प्राप्तः विकृताकृतिः विरूपः स परिव्राट् आशीर्गिरा आशीर्वचनपूर्वकम् अनन्तरं तत्कालमेव तेन कुमारेण दत्तेऽपि भद्रतमे अत्युत्तमे भद्रासने तत्प्रदत्तमासनं प्रविहाय आत्मना स्वयमेव समाहृतायामानीतायां वृष्यामासने उपाविशत् गुरुरिव प्रतिष्ठा पूजा यस्य स तादृशः पृष्टः जिज्ञासितस्तु समागमस्य स्वकीयागमनस्य निदानम् हेतुमेवं वक्ष्यमाणप्रकारेण अभाषिष्ट कथितवानपि ॥८७-८८॥ युग्मम् ॥

एवमिति किमित्याह आह्वानेति—

आह्वानहेतोर्भवतः कुमार !, श्रीभैरवाचार्यगुरुर्गरीयान् ।
मां चेह शिष्यं प्रजिघाय विज्ञं, न वेद हेतुं पुनरत्र कञ्चित् ॥८९॥

कुमार ! गरीयान् महत्तमो गुरुः श्रीभैरवाचार्यः भवतस्तवाऽऽह्वानहेतोः आह्वानार्थम् विज्ञं शिष्यं मामिह प्रजिघाय प्रेषयामास च, अत्र भवदाह्वाने पुनः कञ्चिद् हेतुं न वेद जानामि-अहमिति शेषः ॥८९॥

अथ तत्कृतोत्तरमाह-तत्रेति—

तत्रागमिष्यामि मुने ! प्रभात, इतीरयित्वा विससर्ज तं सः ।
[illegible] निवेदनोत्को बन्दी पपाठेदमपापशापः ॥९०॥

मुने ! तत्र भैरवाचार्यपार्श्वे प्रभाते आगमिष्यामि इतीत्थमीरयित्वा कथयित्वा स गुणवर्मकुमारः तं परिव्राजं विससर्ज गमनायानुज्ञातवान्, अत्रान्तरे अस्मिन्नवसरे कालस्य निवेदने सूचने उत्क उत्सुकः अपापशापः पापशापरहितः बन्दी इदं वक्ष्यमाणं पपाठ ॥९०॥

इदमिति किमित्याह-तम इति—

तमो निहत्याभ्युदयं प्रपन्नः, सर्वत्र दीप्तिप्रकरं वितत्य ।
मन्दायमानद्युतिरेष देव !, प्रद्योतनः साम्प्रतमस्तमेति ॥९१॥

देव ! अभ्युदयं वृद्धिमुदयं च प्रपन्नः प्राप्तः सर्वत्र भुवने दीप्तेः प्रकरं समूहं वितत्य प्रसार्य तमोऽन्धकारं निहत्य एष प्रद्योतनः सूर्यः साम्प्रतम् मन्दायमानद्युतिः संक्षिप्तकिरणः सन्नस्तमस्ताचलमेति गच्छति, सन्ध्यासमयः प्राप्त इत्यर्थः ॥९१॥

अथ तस्य सन्ध्यादिकृत्यमाह-इदमिति—

इदं समाकर्ण्य समुद्यमं स, क्ष्मापाङ्गजः सान्ध्यविधौ व्यधत्त ।
विसृज्य भृत्यानपि सन्निधिस्थान्, निद्रासुखं संश्रयति स्म किञ्चित् ॥९२॥

इदं बन्द्युक्तं समाकर्ण्य स क्ष्मापाङ्गजः नृपपुत्रः गुणवर्मा सान्ध्यविधौ सन्ध्याकालिककर्मणि समुद्यमं प्रवृत्तिं व्यधत्त कृतवान्, तथा सन्निधिस्थान् समीपस्थान् भृत्यान् विसृज्य गमनायादिश्य किञ्चिन्निद्रासुखमपि संश्रयति स्म, सुष्वापेत्यर्थः ॥९२॥

अथ प्रातरुद्बोधमाह-अहरिति—

अहर्मुखे मङ्गलतूर्यतार-नादेन पद्माकरवद् विबुद्धः ।
आकर्णयन् मङ्गलपाठकेन, प्रपठ्यमानं मधुरं स चेदम् ॥९३॥

अहरिति अहर्मुखे प्रभाते मङ्गलानां तूर्याणां वाद्यानां तारेणात्युच्चेन नादेन शब्देन श्रुत्वा पद्माकरवत्कमलखण्डवद् स गुणवर्मकुमारः मङ्गलपाठकेन वैतालिकेन मधुरं श्रुतिप्रियं यथास्यात्तथा प्रपठ्यमानमिदं वक्ष्यमाणमाकर्णयन् च विबुद्धः गतनिद्रोऽभूत् ॥९३॥

इदमिति किमित्याह-भास्वानिति—

भास्वानसावभ्युदयं तनोति, विश्वोपकारप्रवणस्वभावः ।
तमो विनिघ्नन् परितः प्रसर्प-द्भवानिवाऽव्याहतगोप्रचारः ॥९४॥

असौ भास्वान् सूर्यः भवानिव विश्वस्य लोकस्योपकारे हितकरणे प्रवणस्तत्परः स्वभावो यस्य स तादृशः अव्याहतः अप्रतिहतः गोः किरणस्य बाणस्य वाण्या वा प्रचारो यस्य स तादृशः परितः तमोऽन्धकारं प्रजादुःखं च विनिघ्नन् नाशयन् प्रसर्पन् शनैरुपरि गच्छन्नुदयमुद्गमनमभ्युदयं च तनोति करोति, रूपकोत्थापितोपमालङ्कारः ॥९४॥

अथ तस्य गमनमाह–एतदिति–

एतन्निशम्योज्झिततल्पकल्पः, प्रभातकृत्यं प्रवितत्य तूर्णम्।
अभैरवाकारपरार्ध्यरूपः, स भैरवाचार्यसमीपमाप ॥९५॥

एतद् वन्द्युक्तं निशम्य उज्झितः त्यक्तः तल्पः शय्याकल्पो रात्रिवेशश्च येन स तादृशः स गुणवर्मा तूर्णं शीघ्रं प्रभातकृत्यं प्रवितत्य समाप्य अभैरवः सौम्य आकारेण परार्ध्यरूपः असाधारणश्च स भैरवाचार्यस्य समीपमाप ॥९५॥

प्रेति–

प्रत्युद्गतं दर्शनमात्रतोऽपि, जटाधरं सोऽपि तमाननाम।
जटी प्रदायाशिषमाप्रहर्षः, स्वचर्मपीठार्धकमुत्ससर्ज ॥९६॥

स गुणवर्माऽपि प्रत्युद्गतं सम्मुखमागतं जटाधरं तं भैरवाचार्यं दर्शनमात्रतोऽपि दृष्ट्वैव आननाम, जटी जटावान् भैरवाचार्यः आशिषं प्रदाय आप्रहर्षः अतिहृष्टः सन् स्वस्य चर्मपीठस्य मृगचर्मासनस्यार्धकमर्धभागमुत्ससर्ज ददौ, उपवेशनायेति शेषः ॥९६॥

अथ तस्य शिष्टाचारमाह–नैवेति,

नैवाऽऽसनार्धे च गुरोर्ममाऽपि,युक्ता स्थितिः स्यादिति स ब्रुवाणः।
निजस्य वण्ठस्य वसुन्धरायाम्, पटे विमुक्ते निषसाद धन्यः ॥९७॥

गुरोः तव आसनार्धे च ममाऽपि स्थितिरुपवेशनं युक्तोचिता नैव स्यात् "नैकत्रासने गुरुणा सह संवसेदि" त्युक्तेरिति भावः इतीत्थं ब्रुवाण धन्यः स्तुत्यः स गुणवर्मा वसुन्धरायां पृथिव्यां निजस्य वण्ठस्य भृत्यस्य शेषे षष्ठी भृत्येनेत्यर्थः विमुक्ते स्थापिते पटे वस्त्रे निषसादोपविवेश ॥९७॥

अथ तस्य भैरवकृतोपचारमाह–आलापेति–

आलापमाधाय मुहूर्तमात्र–मौचित्यसंभावितमुज्जगार।
स भैरवोऽभ्यागतराजपुत्र!, कां सत्क्रियां ते वितनोमि चाहम्? ॥९८॥

भैरवः भैरवाचार्यः औचित्येन सम्भावितम् कुशलादिप्रश्नरूपावसरोचितमालापं मुहूर्तमात्रं किञ्चित्कालमाधाय कृत्वा उज्जगारोक्तवान्। किमित्याकाङ्क्षायामाह–अभ्यागत! अतिथे! राजपुत्र! अहं भैरवः ते तव कां सत्क्रियां त्वद्योग्योपचारं वितनोमि करोमि, त्वं स्वेष्टं किञ्चिद्वदसि चेत्कर्तुमीहे, यद्वा त्वत्सत्कारयोग्यसामग्र्याः ममाकिञ्चनस्य सर्वदैवासत्त्वमिति त्वत्सत्कारं कर्तुं नाहं समर्थ इत्यर्थः ॥९८॥

सत्काराकरणे सामग्र्यभावमेवाह यदिति–

यद् बाल्यमारभ्य मया धनस्य,परिग्रहो नैव मनाग् व्यधायि।
विना न तेनैव कदाचनाऽपि, लोकव्यवस्था घटनामुपैति ॥९९॥

यद्वतः मया भैरवेण मुनिना बाल्यमारभ्य मनागपिदपि धनस्य सङ्ग्रहः सञ्चयः नैव व्यधाय्यकारि। ननु धनेन किं प्रयोजनं साम्प्रतं ते इति चेत्तत्राह—तेन धनेन विना-लोकव्यवस्था लोकाचार अतिथिसत्कारादिरूपः कदाचनाऽपि घटनां सम्पन्नतां नैवोपैति ॥९९॥

द्रव्यमेव व्यतिरेकमुखेन स्तौति-नेति—

न गौरवं क्वापि गुणा लभन्ते, कर्म प्रसिद्धिं भजते न चापि।
न चापि सामान्यविशेषसिद्धि-र्द्रव्यं विना नो समवाय एव ॥१००॥

द्रव्यं विना गुणाः क्वापि गौरवं न लभन्ते, दरिद्रस्य सन्तोऽपि गुणा न पूज्यन्ते इति गुणपूजायां द्रव्यमेव प्रयोजकमित्यर्थः। तथा कर्म क्रिया प्रसिद्धिं ख्यातिं सफलतां वा न चापि भजते प्राप्नोति अर्थप्रधाना क्रिया इति भावः यद्वा द्रव्याश्रया गुणाः कर्म च द्रव्याश्रितमिति द्रव्यरूपाश्रयाभावे गुणकर्मणी कुत्र तिष्ठेते इति गौरवं गुणा न प्राप्नुवन्ति कर्म च प्रसिद्धिं न भजते, सामान्यस्य विशेषस्य च द्रव्ये गुणाद्याश्रये सत्येव नित्यानेकसमवेतरूपस्य सामान्यस्य स्वतोव्यावृत्तरूपस्य नित्यद्रव्यवृत्तेर्विशेषस्य च यद्वा अल्पद्रव्यवान् सामान्यः प्रचुरद्रव्यवांश्च विशेषः दरिद्र इभ्यो वा, इत्येवंप्रकारयोः सामान्यविशेषयोः सिद्धिरुपपत्तिः नचाऽपि तथा द्रव्यं विना, समवायः नित्यः सम्बन्धः समूहो वा नो नैव, गुणादीनां समवायेन द्रव्यमाश्रय द्रव्याभावे सम्बन्धाभावात्सम्बन्धोऽपि न स्यात्, तदा सुवर्णादि द्रव्यवत एव समवायः कुटुम्बपरिजनमित्रभृत्यादिरूपः, न तु निःस्वस्येत्यर्थः। अत्र श्लेषेण द्रव्ये शास्त्रीयव्यवहारसमारोपेव इति समासोक्तिः ॥१००॥

ननु द्रव्ये सत्यपि किं तेनेति चेद्दानमेव तत्प्रयोजनमिति भङ्ग्यन्तरेणाह कान्तेनेति—

कान्तेन कान्तेन विभा कलत्रं, जलेन मिष्टेन यथा तडागः।
जिनेन देवेन यथैव चैत्यं, तथैव दानेन धनं विभाति ॥१०१॥

विभा द्रविणवता कान्तेन मनोहरेण कान्तेन प्रियेण यथा कलत्रं स्त्री, यथा वा मिष्टेन स्वादुना जलेन तडागः, यथैव च जिनेन वीतरागदेवेन चैत्यं मन्दिरं, तथैव दानेन धनं विभाति शोभते धनं दानफलमित्यर्थः॥ मालोपमा ॥१०१॥

ननु दानेन किं साध्यमिति चेत्तत्राह पूजेति—

पूजा गुरूणां यदि वा सुराणां, संमाननं सज्जनमार्गणानाम्।
प्रेमप्रथा भक्तिविकाशनं च, नैतानि दानेन विना भवन्ति ॥१०२॥

गुरूणां यदि वा सुराणां पूजा द्रव्यपूजा, किञ्च सज्जनानां मार्गणानां याचकानाञ्च सन्माननं तोषणम् प्रेमप्रथा प्रेमख्यापनम् भक्तेः विकासनं वर्धनं च एतान्युक्तानि कार्याणि दानेन विना न भवन्ति, द्रव्यदानं विना नैतानि सिद्ध्यन्तीति भावः ॥१०२॥

दानसिद्धा परम्परया प्रयोजकमाह धनमिति—

धनं विना नैव कदापि दानं, संपद्यते तत् सुकृतं विना न।
तदेव लोके विनयं विना न, स चापि मानापगमं विना न ॥१०३॥

धनं विना दानं कदापि नैव सम्पद्यते, देयं हि धनमेवेति भावः, तद्धनं च सुकृतं विना न, सम्पद्यते, तत्सुकृतं लोके विनयं शिष्टसमयानुपालनं विना नैव, सम्पद्यते, स विनयश्चापि मानापगममनभिमानितां विना न सम्पद्यते, अभिमानी हि गुर्वतिक्रान्ता, तत्र च विनयावसर एव नास्तीति भावः। एवञ्च दानसिद्धौ परम्परया निरभिमानितैव प्रयोजकमित्यभिप्रायः, विनोक्तिरलङ्कारः ॥१०३॥

अथ कुमारप्रतिवचनमाह निशम्येति—

निशम्य चेदं न्यगदत् कुमारः, कुमारशौर्यप्रतिघातिसारः।
भवादृशां दर्शनमेव मानः, सत्कार एवेश ! निदेशनं मे ॥१०४॥

इदं भैरवोक्तं निशम्य च कुमारस्य कार्तिकेयस्य शौर्यस्य प्रतिघाती विडम्बकः सारो बलं यस्य स तादृशः कुमारः गुणवर्मकुमारः न्यगदत्, किमित्याह—ईश ! स्वामिन् ! भवादृशां मुनीनां दर्शनमेव मानः पूजा, तथा भवादृशां मे मह्यं निदेशनमाज्ञापनमेव सत्कारः भवान् स्वप्रयोजनं चेन्मामादिशति तदेव भवत्कृतो मे सत्कारः, न तु भवतो मयि सत्कारान्तर युज्यते इति कुमारस्य विनयातिशय उक्तः ॥१०४॥

अथ स्पष्टमेवाज्ञां याचते तदुक्तहेतोः प्रसद्येति—

प्रसद्य तद् ब्रूत निदेशमेकं, कुर्वे यथाहं तव किङ्करोऽस्मि।
इतीरिते तेन स भैरवोऽद्धा, बोद्धाऽस्य कार्यं निजमाचचक्षे ॥१०५॥

प्रसद्य प्रसादपूर्वकम्, एकं कमपि निदेशमाज्ञां ब्रूत दत्त यथा अहं कुर्वे सम्पादयामि, यतोऽहं तव किङ्करः सेवकोऽस्मि इतीत्थं तेन गुणवर्मकुमारेणोक्ते सति स भैरवः अद्धा निश्चयेन बोद्धा विज्ञः अस्य गुणवर्मकुमारस्य निज कार्यमाचचक्षे कथितवान् ॥१०५॥

किन्तत्कार्यमित्याह समिति—

संवत्सरानष्ट मया कृतोऽस्ति, सन्मन्त्रजापस्य परिश्रमस्तत्।
एकां निशां यावदपप्रमादः-स्त्वं संश्रयस्वोत्तरसाधकत्वम् ॥१०६॥

मया भैरवेण अष्टसंवत्सरान् यावत् सतो विशिष्टस्य मन्त्रस्य जापस्य परिश्रमः कृतोऽस्ति तत्ततः त्वम् गुणवर्मा अपप्रमादः सावधानः सन् एकां निशां यावत् उत्तरसाधकत्वं मुख्यसाधकसहायकसाधकत्वं संश्रयस्व स्वीकुरु ॥१०६॥

अथ कुमारस्य तत्स्वीकारमाह—महेति—

महाप्रसादोऽयमयि प्रजल्प-न्नित्यभ्यधत्ताऽथ पुनः कुमारः ।
कस्मिन् दिने कुत्र पवित्रगात्राः, साहाय्यमेतत् क्रियतां मयाऽपि ॥१०७॥

अयि, पवित्रगात्राः अयं भवन्निदेशः मयि महाप्रसादः महती कृपा, इति उक्तप्रकारेण प्रजल्पन्नथान्तरं पुनः कुमारो गुणवर्मा अभ्यधत्तोवाच—किमित्याह—मया गुणवर्मणा कस्मिन्दिने कुत्रस्थाने एतद्भवन्निर्दिष्टं सहाय्यमुत्तरसाधकत्वरूपं क्रियताम् तद्वदेतिशेषः ॥१०७॥

अथ भैरवस्य दिनादिकथनमाह जटीति—

जटी जगौ खड्गवता श्मशाने, श्यामे चतुर्दश्यभिधानधुर्ये ।
तिथौ निशायाः प्रहरे द्वितीये, त्वया समागम्यमगम्यधाम्ना ॥१०८॥

जटी भैरवाचार्यो जगौ, किमित्याह—खड्गवता असिहस्तेन अगम्यधाम्ना अपरिमेयबलेन त्वया गुणवर्मकुमारेण श्यामे कृष्णपक्षे चतुर्दशीत्यभिधानस्य धुर्ये चतुर्दशीतिथौ निशाया रात्रेः द्वितीये प्रहरे अर्धरात्रे इत्यर्थः, शमशाने समागम्यमागन्तव्यम् ॥१०८॥

अथ कुमारस्वीकारोक्तिमाह त्रिभिरिति—

त्रिभिर्जनैः सार्धमतन्द्रितात्मा, स्थास्यामि तत्राहमकम्प्रवृत्तिः ।
ओमित्युदीर्य प्रतिपत्तिसारं, स राजसूनुर्निजसौधमागात् ॥१०९॥

अकम्प्रा स्थिरा वृत्तिः क्रिया यस्य स तादृशः निश्चितक्रियः अहं भैरवः तत्र श्मशाने त्रिभिः जनैः सार्धमतन्द्रितात्मा अनलसः सन् स्थास्यामि भविष्यामि, स राजसूनुः गुणवर्मा प्रतिपत्त्या स्वीकृत्या सारमुत्तमं यद्वा प्रतिपत्तिः स्वीकृतिरेव सारः अभिधेयत्वेन स्थिरांशो यस्मिन् तद्यथा स्यात्तथा ओमिति स्वीकृतिवाचकं शब्दमुदीर्योक्त्वा निजसौधमगात् ॥१०९॥

अथ कुमारस्य श्मशानगमनमाह समेति—

समागतायां क्रमशोऽथ तस्यां, तिथौ विसृज्याऽनुचरव्रजं सः ।
विनिर्ययौ स्वीकृतवण्ठवेषः, प्रदोषकाले हतदोषजालः ॥११०॥

अथानन्तरं क्रमशः तस्यां चतुर्दश्यां तिथौ समागतायां प्राप्तायां सत्यां स गुणवर्मा अनुचरव्रजं भृत्यसमूहं विसृज्य त्यक्त्वा स्वीकृतः वण्ठस्य दासादेः पुरुषविशेषस्य वेषो येन स तादृशः हतं दोषजालं यस्य स तादृशः निर्दोष स गुणवर्मा प्रदोषकाले सन्ध्याकाले विनिर्ययौ श्मशानगमनाय गृहान्निर्गतः ॥११०॥

अथ तस्य श्मशानप्राप्तिमाह पाणाविति—

पाणौ कृपाणं निशितं दधानः, कुम्भीन्द्रकुम्भस्थलभेदशक्तम् ।
सकेतितं स्थानमयं श्मशाने, प्राप प्रतापक्षतचित्रभानुः ॥१११॥

पाणौ हस्ते कुम्भीन्द्रस्य गजेन्द्रस्य कुम्भस्थलस्य भेदे खण्डने शक्तं समर्थं निशितं तीक्ष्णम् कृपाणं खड्गं दधानः, प्रतापेन स्वतेजसा क्षतः पराजितश्चित्रभानुः सूर्यो येन स तादृशोऽयं गुणवर्मकुमारः स्मशाने सङ्केतितम् पूर्वसूचितचिह्नं स्थानं प्राप 'चित्रभानुर्विवस्वा'निति हैमः ॥१११॥

अथ तस्य भैरवसङ्गममाह तमिति--

तं भैरवाचार्यकमात्मतुर्यं, तत्र व्यलोकिष्ट विलोक्यभक्तिः ।
सोऽपि क्षमानायकनन्दनं तं, जटाधरः पादनतं बभाषे ॥११२॥

विलोक्या स्तुत्या भक्तिर्यस्य स तादृशः गुणवर्मा तत्र स्मशाने आत्मा स्वस्वरूपमेव स्वी-यात्मा तुर्यश्चतुर्थो यस्य तादृशं भैरवाचार्यकम् शिष्यत्रयसहितं व्यलोकिष्ट ददर्श, स जटाधरः भैरवाचार्योऽपि पादयोः नतं प्रणतं तं क्षमानायकनन्दनं राजपुत्रं गुणवर्माणं बभाषे ॥११२॥

तदुक्तिमेवाह शिष्येति—

शिष्यत्रयेणान्वितमात्मबोध-प्रागल्भ्यशालीव हृदि स्मशाने ।
त्रायस्व मां साध्वससंकुलेऽस्मिन्, नेत्रत्रयेणेव ललाटनेत्रम् ॥११३॥

हृदि आत्मबोधस्यात्मज्ञानस्य प्रागल्भ्येन वैशद्येन शालते इत्येवं शीलः मुनिरिव स्वस्वरूप-ज्ञानकुशलः त्वम् गुणवर्मा साध्वसेन भयहेतुना सङ्कुले व्याप्ते भयङ्करेऽस्मिन् स्मशाने नेत्रत्रये-णान्वितं ललाटनेत्रं शिवमिव शिष्यत्रयेणान्वितं मां भैरवाचार्यं त्रायस्व रक्ष ॥११३॥

अथ भैरवाचार्यस्य मण्डलादिकरणमाह आमेति--

आमेति तस्मिन् परिभाषमाणे,भूपालपुत्रे स जटाधरोऽपि ।
अमण्डयद् मण्डलमीक्षितं प्राक्, तदन्तरे द्राक् मृतकं च रौद्रम् ॥११४॥

भूपालपुत्रे गुणवर्मणि आमेतीत्थं स्वीकारसूचके शब्दे भाषमाणे सति स जटाधरः भैरवा-चार्योऽपि प्राग् पुरैव ईक्षितं विचारितं मण्डलमनुष्ठानाय निर्मितं शोधितं च स्थानविशेषमम-ण्डयत् उपकरणादिना सज्जं कृतवान्, तस्य मण्डलस्यान्तरे मध्ये द्राक् शीघ्रमेव रौद्रम् उग्रम् "रौद्रं तूग्रममी त्रिषु" त्यमरः । मृतकं शवं च अमण्डयदिति सम्बध्यते ॥११४॥

अथ तस्य होमादिविधानमाह तदेति--

तदाननान्तर्ज्वलने प्रणीते, प्रज्वालितेऽनेन जटाधरेण ।
कर्तुं समारभ्यत मन्त्रजाप-पुरःसरं होमविधिर्विशङ्कम् ॥११५॥

अनेन जटाधरेण भैरवाचार्येण प्रणीते "प्रणीतः संस्कृतोऽनलः" इति हैमः । प्रज्वालिते तस्य मृतकस्य आननस्य मुखस्यान्तर्ज्वलनेऽग्नौ विशङ्कं विगतभयं यथास्यात्तथा मन्त्रजापपुरस्सरं होमविधिः कर्तुं समारभ्यत ॥११५॥

अद् तेषां क्रमशो दिश्यवस्थानमाह ते इति—

ते पूर्वयाम्यापरदिक्षु तस्थुः,क्रमात् त्रयोऽपि प्रहतप्रमादाः ।
स धैर्यवर्मा दृढवर्मसूनु-र्भयं विहायोत्तरदिश्यतिष्ठत् ॥११६॥

ते त्रयोऽपि भैरवशिष्याः प्रहतप्रमादाः अप्रमत्ताः सन्तः क्रमात् पूर्वस्यां याम्यायां दक्षिणस्यामपरस्यां पश्चिमायां च दिक्षु तस्थुः, धैर्यं वर्म कवचं यस्य स तादृशः धीरः स दृढवर्मसूनुः गुणवर्मा भयं विहायोत्तरदिश्यतिष्ठत् ॥११६॥

अथतत्रोत्पातमाह अथो इति—

अथो शिवासंहतिवासितानि, घोराण्यभूवन् परितोऽशिवानि ।
वेतालमालाः कलिताट्टहासं, शब्दान् निचक्रुर्भयबीजभूतान् ॥११७॥

एतेषां निवेशानन्तरमित्यर्थः परितः समन्ततः शिवानां शृगालीनां संहतिभिः समूहैः वासितानि कृतानि अशिवानि अमङ्गलानि घोराणि भयङ्कराणि अभूवन् घोरशब्दा अजनिष्यत तथा, वेतालानां प्रेतयोनिविशेषाणां मालाः समुदायाः कलितःकृतोऽट्टहासो यथास्यात्तथा भयस्य बीजभूतान् कारणीभूतान् भयजनकानिति यावत्,शब्दान् निचक्रुः कर्तुमारेभिरे ॥११७॥

अथ तत्रनिर्घातमाह अत्रेति--

अत्रान्तरे वारिदघोषवादी, निर्घात एकः प्रससार सारः ।
पुस्फोट तेनैव वसुन्धरेयं, वियोगिवक्षःस्थलवत् प्रकामम् ॥११८॥

अत्रान्तरे अस्मिन्नवसरे, "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये" इतिकोशः एकः वारिदस्य मेघस्य घोषो गर्जनं तद्वद्वदतीत्येवं शीलः सारः बलवान् निर्घात. शब्दविशेष्यः तेजोविशेषो वा प्रससार सर्वतो व्याप्नोत्, तेन निर्घातेनैव इयं वसुन्धरा पृथ्वी वियोगिनः वक्षःस्थलवत् प्रकाममत्यर्थं पुस्फोट विदीर्णा जाता ॥११८॥

अथ तत्र प्रेतप्राकट्यमाह-युग्मेन-एक इति—

एकस्तदन्तर्निरगात् कराला-कारान्धकारावजयी जवेन ।
कृशोदरोऽत्युद्घुषितोर्ध्वकेशः, कठोरबाहुद्वयदीर्घजङ्घः ॥११९॥
पिङ्गेक्षणो दृश्यनिशातपर्शु-र्हुङ्कारसंपूरितखप्रदेशः ।
दधत् करे खण्डितमण्डलाग्रं, महापुमान् प्रेतपतिप्रकारः ॥ १२० ॥

तस्य निर्घातस्यान्तर्मध्यात् जवेन वेगेन करालाकारः भयङ्कराकृतिः अन्धकारस्य अवजयी कालवर्णत्वेन ध्वान्ताधिकः कृशोदरः अत्युद्घुषितः घोषमतिशयेन कुर्वन् ऊर्ध्वकेशः कठोरं बाहुद्वयं दीर्घे जङ्घे च यस्य स तादृशः पिङ्गेक्षणः पीतनेत्रः दृश्यः निशातस्तीक्ष्णः पर्शुरायुधविशेषो यस्य स चासौ

हुङ्कारेण संपूरितः खप्रदेश आकाशं येन स च करे खण्डितं भग्नं मण्डलाग्रं खड्गं दधत् प्रेतपति र्यमः स इव प्रकार विशेषो यस्य स यमसदृशः एकः महापुमान् निरगात्प्रादुर्बभूव ॥ १२९॥ ॥ १२० ॥

**अथ तत्प्रेतस्य चरितमाह—**

**सोऽप्येवमाचष्ट निरस्तशङ्को, निकृष्ट ! रे भैरव ! भैरवाङ्गात्(ङ्गः) ।**
**त्वया किमारब्धमिदं मदेन, पूजामकृत्वा मम बुद्धिहीन ! ॥ १२१ ॥**

स इति स भैरवाङ्गः भीषणदेहः महापुमानपि निरस्तशङ्कः निःशङ्कः सन् एवम् आचष्ट जगौ, एवमिति किमित्याह—रे । निकृष्ट नीच ! बुद्धिहीन ! अनुचिताचरणत्वान्मूर्ख ! भैरव ! भैरवाचार्य, मम प्रेतस्य पूजामकृत्वा त्वया भैरवेण मदेनाभिमानपूर्वकम् इदं दृश्यमानं भैरवाङ्गात् भयङ्करशरीरात् किमारब्धम् तवैष प्रयासो निष्फलो भवितेति भावः अत्र भैरवाङ्गादिति पाठोऽन्वयानुपपत्त्या शोधकप्रमाद इव प्रतिभाति, ततो मया भैरवाङ्ग इति पाठः कल्पित इत्यवधेयम् ॥ १२१ ॥

**ननु त्वं कोऽसि, यदेवं वदसीति चेत्तत्राह क्षेत्रस्येति—**

**क्षेत्रस्य चास्म्यस्य महाप्रभावः, स्वामी प्रसिद्धः खलु मेघनादः ।**
**त्वद्दुर्नयस्याऽस्य फलं स्वशक्त्या, तद् दर्शयाम्येव तवाधुनाऽहम् ॥ १२२ ॥**

अस्य क्षेत्रस्य श्मशानरूपस्य महाप्रभावः बलवान् मेघनादः तदाख्यः प्रसिद्धः स्वामी अस्मि खलुः एव च क्षेत्रपालत्वान्ममानादरोऽपराध इति भावः । तत्ततः अहं मेघनादः अधुना एव स्वशक्त्या कृत्वा तव अस्य त्वद्दुर्नयस्य ममापमानरूपस्य फलमहं एव निश्चयेन दर्शयामि त्वां निगृह्णामीति यावत् ॥ १२२ ॥

**अथ गुणवर्मसाहसमाह-इतीति—**

**इति प्रजल्पन्तमिमं स्वनाद–वित्रासिताग्र्योत्तरसाधकं तम् ।**
**उत्क्षिप्य कौक्षेयकमात्तक्रु–ज्जगाद चैवं दृढवर्मसूनुः ॥ १२३ ॥**

इत्युक्तप्रकारेण प्रजल्पन्तम्, स्वस्य नादेन शब्देन वित्रासितः भयं प्रापित अग्र्यः प्रधानः उत्तरसाधको येन तमिमं मेघनादाख्यं प्रेतम् दृढवर्मसूनुः गुणवर्मा आदृता क्रुत् क्रोधो येन स तादृशः क्रुद्धः सन् कौक्षेयकमसिमुत्क्षिप्योद्यम्य चैवं वक्ष्यमाणप्रकारेण जगाद ॥ १२३ ॥

**एवमिति किमित्याह-अरे इति—**

**अरे ! महामूढ ! विलज्ज ! गर्जि, करोषि किं शारदवार्दवत् त्वम् ।**
**दोर्दण्डशौण्डीर्यमवार्यवीर्य, यद्यस्ति तन्मे पुरतो भव द्राक् ॥१२४॥**

अरे ! महामूढ ! विलज्ज ! त्वं मेघनादप्रेतः शारदवार्दः शरदृतुमेघः, यो गर्जत्येव न तु वर्षति तद्वत् किं गर्जि गर्जनां करोषि ? न गर्जनमात्रेणेष्टसिद्धिरिति विफलं तदित्यर्थः। ननु तर्हि किं कर्त्तव्यमिति चेत्तत्राह—यदि दोर्दण्डयोः बाह्वोः शौण्डीर्यम् पराक्रमः अवार्यमप्रप्रतिहतं वीर्यं चास्ति, तत्तर्हि द्राक् मे मम पुरतोऽग्रतः, युद्धायेति भावः। भव तिष्ठ ॥ १२४ ।

अन्यथा प्रलापी त्वमित्याह-निरेति--

निरर्थकं यो वचनं ब्रवीति, विशिष्यते स ग्रहिलाद् न धीरैः ।
राजाऽहमस्मीति वदन् नरेन्द्रै-र्न साधुवद् दण्ड्यत एव यत् सः ॥ १२५॥

यः पुमान् निरर्थकं निष्फलं वचनं ब्रवीति धीरैः पुरुषैः स निरर्थकवादी ग्रहिलात् ग्रहगृहीतान्न विशिष्यते, मत्त एव मन्यते इत्यर्थः सः निरर्थकवादी राजा अहमस्मीत्येवं वदन नरेन्द्रैः कर्तृभिः साधुवन्न दण्ड्यत एव, अपि प्रलाप्युन्मत्तवदेवोपेक्ष्यते इत्यर्थः ॥ १२५ ॥

अथ तस्य युद्धप्रक्रममाह-इतीति—

इति ब्रुवाणः स पुरःस्थितं तं, निरायुधं प्रेक्ष्य सुरं सलज्जः ।
हित्वाऽऽयुधं शूरशिरोललामो, नियुद्धयुद्धाय समुद्यतोऽभूत् ॥१२६॥

शूराणां शिरोललामः शिरोमणि. स गुणावर्मा इत्युक्तप्रकारेण ब्रुवाणः पुरः स्थितं तं मेघनादं सुरं प्रेतं निरायुधं नि.शस्त्रं प्रेक्ष्यावलोक्य सलज्जः सन्, सायुधेन निरायुधस्य युद्धायाह्वानामनुचितमिति लज्जेति भाव' आयुधमस्त्रं हित्वा त्यक्त्वा नियुद्धयुद्धाय बाहुयुद्धाय—"नियुद्धं बाहुयुद्धे" इत्यमरः । मल्लयुद्धाय वा समुद्यतोऽभूत् ॥ १२६ ॥

अथ मेघनादपराजयमाह-कुमारेति--

कुमारदोर्दण्डनियन्त्रितोऽसौ, श्रीक्षेत्रपालो विरसं रसन् सः ।
प्राह स्वयं विस्मयमादधानः, कुमार ! मां सात्त्विक ! मुञ्च मुञ्च ॥१२७॥

कुमारस्य गुणवर्मणः दोर्दण्डाभ्यां नियन्त्रितः नियुद्धे बद्धः पीडितश्च असौ स श्रीक्षेत्रपालः मेघनादः विरसं करुणं विकृतं वा रसन् क्रन्दन् विस्मयमाश्चर्यम्, मनुष्येऽपि तादृशबलदर्शनादिति भावः । आदधानः स्वयं प्राह-किमित्याह--सात्त्विक ! बलशालिन् कुमार ! मां मुञ्च, मुञ्च, भये पीडायाञ्च द्विरुक्ति' ॥ १२७॥

अथ प्रेतप्रसादमाह-अहमिति—

अहं महासत्त्व ! तवाऽस्मि सिद्धो, वरं वृणीष्वेप्सितमाशयस्य ।
निशम्य तस्योक्तमिदं नृपस्य, सुतस्तमित्याह स साहसाढ्यः ॥ १२८ ॥

महासत्त्व ! महाबल ! अहं क्षेत्रपालः तव कुमारस्य सिद्धः वशोऽस्मि, आशयस्य मनसः ईप्सितं वरं वृणीष्व, तस्य मेघनादस्येदमुक्तं निशम्य साहसाढ्योऽतिसाहसी स नृपस्य सुतः गुणवर्मा तं मेघनादं प्रतीति वक्ष्यमाणमाह सः॥ १२८ ॥

अथ कुमारोक्तिमाह-सिद्ध इति—

सिद्धोऽसि चेद् भैरवसाधकस्य, समीहितं साधय साधयाऽस्य ।
विनिर्मिते चैवमवश्यमेव, भविष्यसे त्वं कृतकृत्यभावम् ॥ १२९ ॥

सिद्धो वशोऽसि चेत् त्वमित्यर्थवशाल्लभ्यते, तर्हि, अस्य भैरवाख्यस्य साधकस्य समीहितं साधय साधय, आग्रहे द्विरुक्तिः एवं मदुक्तप्रकारेण त्वया विनिर्मिते कृते च त्वमवश्यमेव कृतकृत्यभावं कृतकृत्यतां भविष्यसे प्राप्स्यसे, मम तु स्वस्य न प्रयोजनमिति भावः अत्र भैरवेति सम्बोधनान्तपाठः नातीवरुचिरः, यद्वा भैरव ' भयङ्कर ' इति प्रेतसम्बोधनमेव तदापि-साधकस्येति भैरवाख्यसाधकस्येत्येवार्थः ॥ १२९ ॥

अथमेघनादोक्तिमाह-जगादेति—

जगाद भूयोऽपि स मेघनादः, सत्त्वेन ते कामितमस्य दत्तम् ।
समीहितं प्रार्थककल्पवृक्ष !, किञ्चित् परं प्रार्थय निःस्पृहोऽपि ॥ १३० ॥

भूयः पुनरपि स मेघनादः जगाद, किमित्याह—ते तव सत्त्वेन बलेन हेतुना अस्य भैरवस्य कामितमिष्टं दत्तम्, किन्तु प्रार्थकेषु याचकेषु विषये ईहितप्रदत्वात्कल्पवृक्ष ! तत्तुल्य ! निःस्पृहोऽपि त्वं किञ्चित्परमन्यत्समीहितं प्रार्थय वृणीष्व ॥ १३० ॥

अथ कुमारकृतवरप्रार्थनमाह-इतीति—

इत्येष तस्यैव महाग्रहेण, प्रणुन्नरूपोऽभिदधे कुमारः ।
सा प्रेयसी मे वशगाऽस्तु तर्हि, विज्ञाय वित्त्याऽथ स चावदत् तम् ॥ १३१ ॥

इत्युक्तप्रकारेणैव तस्य मेघनादस्य महता आग्रहेण कृत्वा प्रणुन्नरूपः प्रेरितः कुमारः गुणवर्मा अभिदधे उक्तवान्, किमित्याह—तर्हि सा प्रेयसी प्रियतमा कनकवती मे मम वशगा अस्तु, अथ कुमारवरप्रार्थनानन्तरम् स मेघनादः वित्त्या ज्ञानेन विज्ञाय ज्ञात्वा तं गुणवर्माणं प्रत्यवदत् ॥ १३१ ॥

अथ क्षेत्रपालोक्तिमेवाह-सेति—

सा कामरूपत्वमधिष्ठितस्य, वशे भविष्यत्यचिरात् तवाऽपि, ।
तद् मे प्रसादाद् दलितावसादाद्, विचिन्ततं ते भवताद् यथेच्छम्, ॥ १३२ ॥

सा त्वत्प्रिया कनकवती कामरूपत्वम् यथेष्टरूपत्वम् अधिष्ठितस्य प्राप्तस्य, यद्वा कामः स्मरः स इव रूपं यस्य तद्भावम् कामवत्सौन्दर्यमित्यर्थः तव गुणवर्मणः अचिरादपि शीघ्रमेव वशे भविष्यति त्वदधीना स्यादित्यर्थः । नन्वेतत्कथं भविष्यतीति चेत्तत्राह—दलितः दूरीकृतः नाशितो वा अवसादः मनः पीडा येन तादृशान्मे मम क्षेत्रपालस्य प्रसादात् ते तव विचिन्तितं प्रार्थितं तत्प्रियावशीकरणम् यथेच्छमिच्छानुरूपं भवताद्भवतु इत्याशासे ॥ १३२ ॥

अथ क्षेत्रपालतिरोधानमाह इतीति—

इति प्रदायाऽस्य वरं वरेण्यं, क्षेत्राऽधिनाथः स तिरोबभूव ।
प्रमोदपूर्णेन जटाधरेण, राजाङ्गजोऽप्यवेक्ष्यमभाणि पश्चात् ॥ १३३ ॥

अस्य गुणवर्मकुमारस्य इत्युक्तप्रकारं वरेण्यं प्रार्थितं वरमिष्टं प्रदाय स क्षेत्राधिनाथः मेघनादः तिरोबभूवान्तर्हितो बभूव, पश्चाच्च । प्रमोदपूर्णेनातिप्रसन्नेन जटाधरेण भैरवाचार्येण राजाङ्गजः नृपपुत्रः गुणवर्माऽपि एव वक्ष्यमाणप्रकारेण अभाणि कथितः ॥ १३३ ॥

तत्कथनमेवाह सत्त्वेनेति

सत्त्वेन ते राजतनूज ! मन्त्रः, सिद्धस्ततोऽजायत वाञ्छितं मे ।
अमानुषं शौर्यमतीन्द्रियार्था—वभासि विज्ञानमियं परा रुक् ॥ १३४ ॥

राजतनूज ! नृपपुत्र ! गुणवर्मन् ! ते तव सत्त्वेन बलेन कृत्वा मन्त्रः सिद्धः आराधितः ततश्च हेतो' मे मम वाञ्छितमिष्टमजायताभवत् । किन्तु ते इष्टमिति चेत्तत्राह--अमानुषमलौकिकं शौर्यं पराक्रमः, अतीन्द्रियानिन्द्रियागोचरानर्थानवभासयतीति तादृशं विज्ञानं विशिष्टं ज्ञानम्, इयमनुभूयमाना परोत्कृष्टा रुक् कान्तिश्चेतीष्टमजायत ॥ १३४ ॥

अथ तेषां स्वस्थानगमनमाह इतीति—

इतीदृशं प्रीतिपरं निरूप्य, स तापसः शिष्यसमन्वितोऽगात् ।
स्वस्थानमन्योऽपि कृतप्रणामः, स्वनाम वित्रासितवैरिवर्गः ॥१३५॥

इत्युक्तप्रकारेण प्रीतिपरं प्रसन्नताज्ञापकमीदृशमुक्तप्रकारं निरूप्योक्त्वा स तापसः भैरवाचार्यः शिष्यसमन्वितः सन्नगात् । स्वस्य नाम्ना एव वित्रासितः प्रकम्पितो वैरिवर्गो येन स तादृशोऽन्यो गुणवर्माऽपि कृतप्रणामः भैरवं प्रणम्य स्वस्थानमगात् ॥१३५॥

अथ तस्य प्रातः कनकवती भवनगमनमाह-निद्रेति-

निद्रासुखं प्राप्य मनाग् विबुद्धः, प्राभातिकं कृत्यमसौ वितत्य ।
ईशानभूमीपतिपुत्रिकायाः, सौधं जगाम प्रभयाऽभिरामः ॥१३६॥

असौ गुणवर्मा मनाक् किञ्चित्कालं निद्रासुखं प्राप्य शयित्वेत्यर्थः, विबुद्धः गतनिद्रः प्राभातिकं प्रातःकालिकं कृत्यं स्नानादि वितत्य समाप्य प्रभया कान्त्या कृत्वा अभिरामः मनोहरः गुणवर्मा ईशानस्य तदाख्यस्य भूमीपतेः पुत्रिकायाः कनकवत्याः सौधं जगाम ॥१३६॥

अथ तयोर्वार्तालापमाह-पल्येति—

पल्यङ्कपर्यङ्कतले निविष्टः, समं तया स प्रियया न्यगादि ।
प्रहेलिकां मे प्रिय काञ्चनैकां, बुद्ध्यस्व बुद्ध्या गुरुरेव यत् त्वम् ॥१३७॥

पल्यङ्कस्य पर्यङ्कस्य शय्यायास्तले उपरि तया प्रियया समम् निविष्टः उपविष्टः स गुणवर्मा तया प्रियया कनकवत्या न्यगादि कथितः, किमित्याह प्रिय ! मम एकां काञ्चन प्रहेलिकां बुद्धयस्व ननु प्रहेलिका हि स्वकृतसङ्केतार्था गूढार्था भवति तत्कथं मया बोद्धव्यम् इति चेत्तत्राह—यतः त्वं बुद्धया कृत्वा गुरुः महानेव, निरुपमबुद्धिमांस्त्वमिति तव कृते न दुरूहा प्रहेलिका, मन्दमतयो हि तत्र मुह्यन्तीति भावः ॥१३७॥

का सा प्रहेलिकेति चेत्तत्राह महोत्पलानीति—

महोत्पलानि प्रभवन्ति केषु, दिवौकसां केषु जनैर्ध्रियन्ते ।
केष्वेव चैतन्यमिदं विभाति, रसोत्तमाङ्गात्मसु कान्त ! विद्धि ॥१३८॥

कान्त ! प्रिय ! महोत्पलानि कमलानि केषु केन कृत्वा उत्तमाङ्गः सुन्दर आत्मा येषां तेषु प्रभवन्ति उत्पद्यन्ते तथा दिवौकसां देवानां केषु कुत्रावयवेषु जनैः ध्रियन्ते कमलानि आरोप्यन्ते तथा इदं चैतन्यं ज्ञानं केष्वेव विभाति शोभते तिष्ठति वा ? इति विद्धि जानीहि ॥१३८॥

अथ गुणवर्मकृतोत्तरमाह गोपालेति—

गोपालपुत्रा अपि सारसाक्षि, निवेदितार्थां कलयन्ति चैताम् ।
तर्हि त्वमेकां विषमामपूर्वां, पूर्णेन्दुबिम्बानन ? शंस मेऽग्रे ॥१३९॥

सारसाक्षि ! कमलाक्षि ! 'सारसं सरसीरुहं' इत्यमरः एतां त्वदुक्तप्रहेलिकाम् निवेदितोऽर्थः ज्ञातव्योऽर्थो यस्यां तादृशीं निवेदितार्थत्वादेव च गोपालपुत्राः जडाः गोपालशिशवोऽपि कलयन्ति ज्ञातुं प्रभवन्ति यस्य हि अर्थो निवेदित एव, सोऽल्पमतिनाऽपि ज्ञातुं शक्य इति मादृशे बुद्धिमति सोऽकिञ्चिकर इति भावः सा प्रहेलिका निवेदितार्था चेत्थम्-रसोत्तमाङ्गात्मसु इति पदेन प्रश्नत्रयमपि समाधीयते, तथा हि कमलानि रसेषु जलेषु यद्वा रसैः जलं कृत्वा उत्तमाङ्गं शोभन आत्मस्वरूपं येषां तेषु निर्मलजलाशयेषु प्रभवन्ति, तथा जनैः दिवौकसामुत्तमाङ्गेषु मस्तकेषु कमलानि ध्रियन्ते तथा चैतन्यमात्मसु विभाति, ज्ञानसमवायित्वादात्मन इति बोध्यम् नहि मदुक्तप्रहेलिकाया अल्पसारत्वे पूर्णेन्दुबिम्बानन पूर्णचन्द्रमुख ! प्रिय!मे ममाग्रे त्वमेवापूर्वामन्यैरज्ञातामुत्तमांश विषमां दुर्बोधामेकां प्रहेलिकां शंस कथयेति कनकवती जगौ ॥१३९॥

अथगुणवर्मोक्तप्रहेलिकामाह सर्वास्विति—

सर्वासु रामासु मनोहरासु, स्त्रीरत्नरूपं परिवर्ण्यते किम् ?
इदं प्रिये! ते पुरतो मयोक्तं, स्फुटं त्वया बुध्यत एव किं न ? ॥१४०॥

सर्वासु मनोहरासु रामासु नारीषु किं स्त्रीरत्नरूपं परिवर्ण्यते ? सर्वाः स्त्रियो मनोहरा एव नहि स्त्रीरत्नमेव किमिति परिवर्ण्यते । यद्वा सर्वासु रामासु मनोहरासु

तत्स्त्रीरत्नरूपं किं वर्तते ? इति वाऽर्थः प्रिये ! प्रिये ! इदं प्रहेलिकापदं ते तव पुरतो मया उक्तं त्वया स्फुटं परिबुद्धयते किंवा नैव परिबुद्धयते इति प्रश्नः ॥१४०॥

**अथ राजपुत्र्या उत्तरमाह इतीति--**

> इतीरितां तां हृदयेश्वरेण, सा राजपुत्री हृदये निधाय ।
> क्षणं विचिन्त्य प्रतिवाक्यमूचे, कान्तानुरूपं तव केवलं तत् ॥१४१॥

हृदयेश्वरेण प्रियेण गुणवर्मणा इत्युक्तप्रकारेणेरितामुक्तां तां प्रहेलिकां सा राजपुत्री कनकवती हृदये निधाय धारयित्वा क्षणं विचिन्त्य प्रतिवाक्यमुत्तरमूचे, किमित्याह--कान्त ! प्रिय ! तत् प्रहेलिकावाच्यं केवलं तव अनुरूपं योग्यम्, किं तदिति चेदित्थम्--प्रश्ने सर्वासु मनोहरासु रामासु किं का परिवर्ण्यते प्रशस्यते इति प्रश्नः, उत्तरे-तु स्त्रीरत्नरूपम्, या रामा स्त्रीरत्नरूपा सा प्रशस्यते इत्युत्तरमपि भङ्गया तत्रैव निविष्टम् आलोच्य स्त्रीरत्नं तव स्यादिति कनकवती-भावः ॥१४१॥

**अथ वृत्तान्तरमाह तामिति--**

> तां बुद्धिवैचित्र्यमयीं विजान-न्नित्यादिगोष्ठीषु समन्वभूत् सः ।
> अदृश्यमाधाय वपुर्निशीथे, भूयो ययौ तद्भवनं कुमारः ॥१४२॥

इति प्रहेलिकादिबोधनप्रकारेण आदिगोष्ठीषु प्रथमप्रसङ्गेष्वेव विजानन् विज्ञः स गुणवर्मा कुमारः तां कनकवतीं बुद्धिवैचित्र्यं विलक्षणत्वं तन्मयीं विशिष्टबुद्धिमतीं समन्वभूत् ज्ञातवान् भूयः पुनः निशीथेऽर्धरात्रे वपुः स्वशरीरमदृश्यमाधाय कृत्वा तस्याः कनकवत्याः भवनं ययौ परीक्षणायेति शेषः ॥१४२॥

**तदेति--**

> तदाऽऽचचक्षे क्षितिपालकन्या, चेटीद्वयं चैवमुपान्तवर्ति ।
> हले ! त्रियामा कियती व्यतीते-ति सम्यगालोच्य निवेद्यतां मे ? ॥१४३॥

तदा भवने गुणवर्मप्राप्तिसमये एव क्षितिपालकन्या राजपुत्री कनकवती उपान्तवर्ति समिपस्थं चेटीद्वयं एवं च आचचक्षे कथितवती । एवमिति किमित्याह हले ! दासीसम्बोधनमेतत् । "हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रती"त्यमरः ॥ त्रियामा रात्रिः कियती कियन्मात्रा व्यतीता इति सम्यग् आलोच्य निरूप्य मे निवेद्यताम् ॥१४३॥

**अथ चेटीकृतोत्तरमाह अभाणीति -**

> अभाणि ताभ्यां प्रियवादिनीभ्यां, नाद्यापि यामद्वितयं प्रपूर्णम् ।
> उवाच सा तर्हि विधीयतां द्राक्, सामग्र्यहो ! तत्र च गम्यमस्ति ॥१४४॥

प्रियवादिनीभ्यां ताभ्यां चेटीभ्यामभाणि कथितम् । किमित्याह—अद्यापि एताव-त्कालपर्यन्तम् यामद्वितयं प्रहरद्वयं न प्रपूर्णम् सा कनवत्युवाच, किमित्याह—तर्हि यामद्व यमपूर्णं चेत्तदा द्राक् शीघ्रमेव सामग्री उपकरणं विधीयताम्, सम्पाद्यताम् कस्योपकरणमित्या-काङ्क्षायाम् प्रयोजनकथनद्वारेणैव तत्पूरयति—तत्रानिर्दिष्टस्थाने चो हेतौ, यतः गम्यं गन्तव्यमस्ति, अतः गमनसामग्री सम्पादनीयेति भावः ॥१४४॥

अथ विमानविकरणमाह तेनैवेति—

तेनैव चेटीद्वितयेन साऽथ, विधापितस्नानविलेपभूषा ।
क्षणाद् विचक्रे च विमानमेकं, समानशाला मणिचक्रशालम् ॥१४५॥

अथानन्तरं चेटीं समादिश्य समानस्य शालाऽऽस्पदं सा कनकवती तेनैव चेटीद्वित-येन कर्त्रा विधापितं कारितं स्नानं विलेपो भूषा च यस्याः सा तादृशी सती क्षणात् मणिच-क्रेण मणिसमूहेन शालते शोभते इति तत्तादृशं मणिमयमेकं विमानं विचक्रे मायया निर्मित-वती च ॥१४५॥

अथ विमानमारोहणमाह तदिति—

तच्चेटिकाभ्यां सह सा विमानं, शिश्राय विद्याधरकन्यकेव ।
अदृश्यरूपोऽस्य विमानकस्य, प्रदेशमेकं गुणवर्मकोऽपि ॥१४६॥

विद्याधरकन्यकेव सा कनकवती ताभ्यां चेटिकाभ्यां सह विमानं शिश्राय आरूढा गुणवर्मकः गुणवर्माऽपि अदृश्यरूप एव सन् अस्य कनकवतीविकृतस्य विमानकस्यैकं प्रदेशं शिश्राय ॥१४६॥

अथ नन्दनवनगमनमाह-पन्थेति—

पन्थानमाक्रम्य मरुत्पथस्य, तडागतीरोद्धतमेककालम् ।
कौबेरदिग्भागविवर्तमानं, प्रापद् वनं नन्दनसंज्ञकं तत् ॥१४७॥

एककालं युगपदेव मरुत्पथस्याकाशस्य पन्थानं मार्गमाक्रम्योल्लङ्घ्य कौबेरदिग्भागे उत्तरस्यां दिशि विवर्तमानं स्थितम् तडागानां तीरेणोद्धतमुच्छोभितं तत्प्रसिद्धं नन्दनसंज्ञकं वनं प्रापत् गतवती ॥१४७॥

अथ तस्या विद्याधरसमीपगमनमाह सैषेति—

सैषा विमानादवतीर्य तूर्णं, चेटीद्वयालङ्कृतपार्श्वभागा ।
अगादशोकद्रुमवीथिकान्त—र्निविष्टविद्याधरसन्निधाने ॥ १४८ ॥

सा एषा कनकवती तूर्णं शीघ्रं विमानादवतीर्य चेटी द्वयेनालङ्कृतावन्वितौ पार्श्वभागौ यस्याः सा तादृशी सती अशोकद्रुमवीथिकायाः अशोकवृक्षपङ्क्तेरन्तर्निविष्टस्योपविष्टस्य विद्याधरस्य सन्नि-धाने समीपे अगात् ॥ १४८ ॥

अथ तत्रत्यवृत्तमाह विनम्येति-

विनम्य सा भक्तिपुरःसरं तं, निदेशमासाद्य पुरो निविष्टा।
अत्रान्तरेऽन्या अपि तिस्र एयु-स्तदन्तरे तत्सदृशो रमण्यः ॥ १४९ ॥

सा कनकवती तं विद्याधरं भक्तिपुरस्सरं विनम्य प्रणम्य निदेशं विद्याधरस्य आज्ञामासाद्य प्राप्य पुरः विद्याधराग्रतो निविष्टोपविष्टा, अत्रास्मिन्नन्तरेऽवसरे अन्या अपि तस्याः कनकवत्याः सदृशाः तिस्रः रमण्यः स्त्रियः तयोर्विद्याधरकनकवत्योः अन्तरे मध्ये एयुरागतवत्यः ॥१४९॥

अथ तत्र जिनमन्दिरमाह विद्याधरेति--

विद्याधराणामसमः समाजः, क्षणान्तरे तत्र समाजगाम ।
युगादिनाथस्य जिनेश्वरस्य, तटेऽस्ति तत्राऽऽयतनं महीयः ॥ १५० ॥

तत्र तस्मिन् स्थाने क्षणान्तरे क्षणादेव विद्याधराणामसमोऽनुपमः समाजः समुदायः समाजगाम । तत्र तटे तडागतटे जिनेश्वरस्य युगादिनाथस्य महीयोऽतिमहत् आयतनं प्रासादोऽस्ति आसीत् ॥ १५० ॥

अथ तत्कृतजिनभक्तिमाह विद्येति-

विद्याधरस्ताश्च ततः समस्ताः, समागमन्नायतनं तदेव ।
चक्रुश्च भक्तिं जिननायकस्य स्नानार्चनालेपनपूर्विकां ते ॥ १५१ ॥

विद्याधराः ताः स्त्रियश्च समस्ताः सकलाः, तत' सर्वेषामागमनानन्तरम् तत्पूर्ववर्णितमेवायतनं प्रासादं समागमन्नागतवन्तः, तथा, ते सर्वे जिननायकस्य स्नानमर्चनमालेपनं च पूर्वं यस्याः तां तादृशीं भक्तिं सेवां चक्रुश्च ॥ १५१ ॥

अथ तत्र नृत्यप्रस्तावमाह केति--

का साम्प्रतं नृत्यमहो! विधाते-त्युदीरिते खेचरनायकेण ।
ईशानचन्द्रक्षितिपालकन्ये-त्याचख्युरन्याः क्षितिपालकन्याः ॥ १५२ ॥

खेचरनायकेण विद्याधरेन्द्रेण अहो! सम्प्रति का नृत्यं विधाता विधास्यतीतीत्थमुदीरिते पृष्टे अन्या क्षितिपालकन्या इत्याचख्युः इतीति किमित्याह ईशानचन्द्रक्षितिपालस्य कन्या कनकवती, नृत्यं विधास्यतीति सम्बध्यते ॥ १५२ ॥

अथ तस्याः रङ्गावतारमाह क्रमेति--

क्रमागतं स्वावसरं विबुध्य, ततः क्षणात् श्रीगुणवर्मकान्ता ।
विधाय सज्जं चलनाख्यत्रासः, सा रङ्गभूमिं प्रविवेश रङ्गात् ॥ १५३ ॥

ततः उक्तप्रतिवचनानन्तरम् श्रीगुणवर्मणः कान्ता क्रमतः आगतं प्राप्तं स्वस्यावसरं वारं विबुध्य ज्ञात्वा क्षणात् सा कनकवती चलनाख्यं वासो वस्त्रं सज्जं स्थित्यनुगुणं विधाय रङ्गात् हर्षपूर्वकं रङ्गभूमिं नृत्याङ्गणं प्रविवेश ॥ १५३ ॥

अथ तत्र वाद्यवादनमाह अवेति—

**अवादयंस्तत्र च वेणुवीणा–तालादिकांस्ताः क्रमशोऽपि तिस्रः ।**
**तदा समं प्रेक्षणकं बभूव, समग्रविद्याधरविस्मयाय ॥ १५४ ॥**

तत्रावसरे च ताः तिस्रः पूर्वमागताः रमण्यः क्रमशः वेणुवीणातालादिकानवादयन्, तदा समग्राणां सर्वेषां विद्याधराणां विस्मयाय सानन्दाश्चर्याय असममनुपमं प्रेक्षणकं नाट्यं बभूव ॥ १५४ ॥

अथ तत्र किङ्किणीपतनमाह अस्या इति—

**अस्या विलासातिशयेन लास्यं, प्रवर्त्तयन्त्याः कटिसूत्रसूत्रात् ।**
**एकाऽपतत् किङ्किणिका सवेगं, तामग्रहीद् राजसुतस्तटस्थः ॥ १५५ ॥**

विलासातिशयेन सविशेषभावं लास्यं नृत्यं प्रवर्त्तयन्त्याः कुर्वन्त्याः अस्याः कनकवत्याः कटिसूत्रस्य मेखलायाः सूत्रादेका किङ्किणिका क्षुद्रघण्टिका सवेगमपतत्, तां किङ्किणीं तटस्थः पार्श्वस्थः राजसुतः गुणवर्मा अग्रहीत् नीतवान् ॥ १५५ ॥

अथ किङ्किणीशोधनमाह तयेति—

**तया समन्तादवलोकिताऽथ, लास्यावसाने निजकिङ्किणी सा ।**
**विद्याधरैरप्यनुयुज्यमानैः, प्रयत्नतः क्वापि न चाऽऽपि किन्तु ॥ १५६ ॥**

अथानन्तरं लास्यस्य नृत्यस्यावसाने समाप्तौ सत्यां तया कनकवत्या सा निजा पतिता किङ्किणिका समन्तात् सर्वतोऽवलोकिता शोधिता, किन्तु विद्याधरैरपि प्रयत्नतः अनुयुज्यमानैः शोधयद्भिः सद्भिरपि क्वापि न च नैव आपि प्राप्ता ॥ १५६ ॥

अथ तस्यास्तत प्रस्थानमाह तस्मिन्निति—

**तस्मिन् समं स्वानुचरैः समग्रै–र्विद्याधराणामधिपे प्रयाते ।**
**सहैव चेटीद्वितयेन सापि, विमानमाश्रित्य चचाल बाला ॥ १५७ ॥**

विद्याधराणामधिपे समग्रैः सर्वैः स्वस्यानुचरैः भृत्यवर्गैः समं सह प्रयाते गते सति सा बाला कनकवत्यपि चेटिद्वितयेन सह एव विमानमाश्रित्यारुह्य चचाल प्रस्थितवती ॥ १५७ ॥

अथ तेषां स्वस्थानागमनमाह कुमारेति—

**कुमारवीरोऽपि पुरावदेतं, विमानभागं रभसाद् बभाज ।**
**स्थानं समायासिपुरात्मनस्ते, सर्वेऽपि तेनैव महारयेण ॥ १५८ ॥**

कुमारेषु वीरः गुणवर्माऽपि पुरावत्पूर्ववत् रभसाद् झटिति एतमुक्तं विमानस्य भागं प्रदेशं बभाज शिश्राय ते कनकवतीकुमारादयः सर्वेऽपि महारयेण महावेगेन तेन विमानेनैव द्वारा आत्मनः स्वस्य स्थानं समायासिषुरागतवन्तः ॥ १५८ ॥

अथ कुमारस्य शयनमाह अलेति—

अलक्षितः प्रेष्यजनैः कुमारः, स्वमन्दिरं प्राप्य सहेमकुम्भम् ।
पल्यङ्कमाश्रित्य सुपुष्पगंधं, शेषां त्रियामां गमयाम्बभूव ॥ १५९ ॥

कुमारो गुणवर्मा प्रेष्यजनैः भृत्यवर्गैरलक्षितोऽदृश्य एव सहेमकुम्भम् सुवर्णघटशोभितं स्वं मन्दिरं गृहं प्राप्यागत्य सपुष्पगन्धं पुष्पामोदचारुपल्यङ्कमाश्रित्य शेषामवशिष्टां त्रियामां रात्रि गमयाम्बभूव व्यतीयाय ॥ १५९ ॥

अथ मन्त्रिपुत्राय किङ्कणीदानमाह अमात्येति—

अमात्यपुत्राय निजाय सख्ये, यथार्थनाम्ने मतिसागराय ।
तां किङ्किणीं पाणिगतां विधाय, शिक्षां ददौ राजसुतः स एवम् ॥१६०॥

स राजसुतो गुणवर्मा अमात्यपुत्राय निजाय सख्ये मित्राय यथार्थनाम्ने मतिसागराय मतेः सागराय मतिसागरनाम्ने तां किङ्किणीं पाणिगतां विधाय कृत्वा शिक्षामुपदेशं ददौ ॥१६०॥

का सा शिक्षेत्याह ममेति—

ममोपनेया भवता प्रियायाः, पार्श्वस्थितस्येयमनर्घ्यरत्ना ।
इतीरयित्वा गतवांस्तदीयं, सौधं समं तेन ससंभ्रमेण ॥१६१॥

भवता अनर्घ्यरत्ना अमूल्यरत्नरूपा इयं किङ्किणी प्रियायाः कनकवत्याः पार्श्वे स्थितस्य मम उपनेया दातव्या इतीत्थमीरयित्वोपदिश्य ससंभ्रमेण हर्षपूर्वकं तेन निजमित्रेण मन्त्रिपुत्रेण समं सह तदीयं कनकवतीसम्बन्धिनं सौधं प्रासादं गतवान् ॥१६१॥

अथ तत्र द्यूतक्रीडामाह–तयेति—

तया समं सारिभिरुग्रसारः, प्रचक्रमे क्रीडितुमेष वीरः ।
अभाणि भर्ता विजितस्तयाऽयं, संचार्यतां कोऽपि पणोऽत्र धीमन् ॥१६२॥

उग्रसार' उत्कटबलः एष वीरः गुणवर्मा तया कनकवत्या समं सारिभिः पाशकैः क्रीडितुं प्रचक्रमे प्रारब्धवान् तया कनकवत्या विजितः पराजितः अयं भर्त्ता गुणवर्मा अभाणि कथितः किमित्याह—धीमन् ! अत्र जयपराजयविषये कोऽपि पणः ग्लहः संचार्यताम् क्रियताम् दीयतां वा ॥१६२॥

अथ किङ्किणीदानमाह विज्ञायेति—

विज्ञाय कौमारमतं स विज्ञ-स्तां किङ्किणीं मन्त्रिसुतो मुमोच ।
इमां स्वकीयामुपलक्ष्य लक्ष्यां, लक्ष्यैरथाऽवादि तया सुदत्या ॥१६३॥

स विज्ञः धीमान् गुणवर्ममित्रम् मन्त्रिसुतः कौमारं गुणवर्मणां मतमाशयं विज्ञायोपलक्ष्य तां पुरा कुमारदत्तां किङ्किणीं मुमोच ददौ लक्ष्यां दर्शनीयां इमां किङ्किणीं स्वकीयां ममेयमित्येवं लक्ष्यैः चित्तैरुपलक्ष्य परिचित्य अथानन्तरम् तया सुदत्या शोभनदन्तया कनकवत्या अवादि ॥१६३॥

किमवादीत्याकाङ्क्षायामाह मदिति—

मच्छ्रोणिसूत्रात् पतिता कुतोऽसौ, प्रापि त्वया पापविनाकृतेन ? ।
अथो कुमारेण जगे मृगाक्षि !, निवेद्यतामित्यपतत् क्व चैषा ? ॥१६४॥

मम श्रोणिसूत्रात्कटिसूत्रात्पतिता असौ किङ्किणी पापविनाकृतेन पुण्यात्मना त्वया पुण्यात्मत्वाच्चौर्यादिप्रकाराभावे कुतः प्रकारात्प्रापि ? इति वदेति शेषः । अथो अनन्तरम् कुमारेण गुणवर्मणा जगे कथितम्, किमित्याह—मृगाक्षि ? एषा किङ्किणी क्व अपतदिति निगद्यताम् ? ॥१६५॥

अथ कनकवत्या उत्तरमाह-पपातेति—

पपात कुत्रेयमिति स्वतोऽहं, न वेद्मचनाभोगवशादवश्यम् ।
तया विचिन्त्येत्युदिते कुमारः, पुनर्जगौ हास्यविभासितोष्ठः ॥१६५॥

तया कनकवत्या विचिन्त्य इयं किङ्किणी कुत्र स्थाने पपात पतिता इतीदमनाभोगवशादननुसन्धानाद्धेतोरहमवश्यं निश्चयतो न वेद्मीतीत्थं स्वतः स्वयमेवोदिते कथिते पुनः हास्येन विभासितौष्ठः विकसितौष्ठः सन् कुमारः गुणवर्मा जगौ कथितवान् ॥१६५॥

किं कथितवानित्यपेक्षायामाह-नैमीति—

नैमित्तिकोऽयं मतिसागरो मे, प्रिये ! वयस्यः परिपृच्छ्यतां ज्ञः, ।
अस्या निपातास्पदमात्तलील-मयं विदा प्राप्स्यति भास्वरेण ॥१६६॥

प्रिये ! ज्ञ' विद्वान् नैमित्तिकः निमितज्ञः मे मम वयस्यः मित्रमयं समक्षस्थितो मतिसागरः परिपृच्छ्यताम् अयं मतिसागरः भास्वरेण उज्ज्वलेन विदा ज्ञानेन आत्तलीलमनायासमेवास्याः किङ्किण्याः निपातस्य पतनस्यास्पदं स्थानं प्राप्स्यति ज्ञास्यति ज्ञात्वा कथयिष्यतीति यावत् अत्र विच्छब्दविशेषणस्य भास्वरशब्दस्यास्त्रीलिङ्गत्वं चिन्त्यम्, विच्छब्दस्य भावाविचप्रत्ययान्तस्य स्त्रीत्वादिति ध्येयम् ॥१६६॥

अथ कनकवतीप्रश्नमाह-तयेति—

तया जगे तर्हि निवेद्यतां मे, पुरस्त्वयैषा पतिता क्व नाम ? ।
बुद्‌ध्वा कुमाराशयमाह सोऽपि, बुद्धः प्रभाते कथयिष्यतेऽदः ॥१६७॥

तया कनकवत्या जगे उक्तम्--किमित्याह–तर्हि मे मम कनकवत्याः पुरस्त्वया मतिसागरेण एषा किङ्किणी क्व नाम पतिता, निवेद्यताम् कथ्यताम् । स मतिसागरोऽपि कुमारस्य गुणवर्मण आशयमाभिप्रायं बुद्ध्वा वाऽभिलक्ष्य आह - किमित्याह - बुद्धः ज्ञातवृत्तान्तः सन् प्रभाते अदः त्वत्प्रश्नोत्तरं कथयिष्यते, मयेति शेषः ॥१६७॥

अथ पुनरपि कुमारस्य जिनालयगमनमाह पूर्वेति—

**पूर्वक्रमेणाऽवनिपालपुत्रः, समं स्ववध्वा दिवसेऽपि तत्र ।**
**विमानमास्थाय समानधामा, जिनालयं प्रास्थित तं लयेन ॥१६८॥**

पूर्वक्रमेण पूर्ववत् समानधामा माननीयतेजाः अवनिपालपुत्रः राजपुत्रो गुणवर्मा तत्र तस्मिन् दिवसेऽपि स्ववध्वा कनकवत्या समं विमानं गुप्तरीत्या आस्थायारुह्य लयेन रसात् तं प्रागुक्तं जिनालयं प्रति प्रास्थित प्रस्थितवान् ॥१६८॥

अथ तस्याः सुवर्णाङ्गदापहारमाह तस्येति

**तस्यास्तदा वैणिकतां श्रयन्त्याः, स्रस्तः सुवर्णाङ्गद एव तत्र ।**
**क्षिप्रं कुमारेण स किङ्किणीवत्, प्रच्छन्नमादीयत कौशलेन ॥१६९॥**

तदा तत्र जिनालये वैणिकतां वीणावादनं श्रयन्त्याः कुर्वन्त्यास्तस्याः कनकवत्याः स्रस्तः पतितः सुवर्णास्याङ्गदो बाहुभूषणम् । कुमारेण गुणवर्मणा कौशलेन चातुर्यपूर्वकं किङ्किणीवत् क्षिप्रं शीघ्रं प्रच्छन्नं गुप्तरीत्या यथा नान्यो लक्षयेदित्येवमादीयत गृहीतः ॥१६९॥

अथ पुनरपि कुमारस्य कनकवतीभवनगमनमाह विमानेति –

**विमानमारुह्य तथैव पूर्व-क्रमेण ते स्थानमथाऽऽययुः स्वम् ।**
**प्रातः कुमारः सुहृदे समर्प्य, स्वर्णाङ्गदं तद्भवनं समागाद् ॥१७०॥**

अथानन्तरं नृत्यसमाप्तौ तथैव पूर्वक्रमेण पूर्ववत् ते कुमारादयः विमानमारुह्य स्वं स्थानमाययुः कुमारः गुणवर्मा प्रातः स्वर्णाङ्गदं सुहृदे मित्राय मतिसागराय समर्प्य दत्त्वा तस्याः कनकवत्याः भवनं समागात् समागतवान् ॥१७०॥

अथ कनकवत्याः पुनः प्रश्नमाह भयादिति—

**भयात् तयाऽप्रच्छयथ मन्त्रिपुत्र–स्तत्किङ्किणीवृत्तमवृत्तपूर्वम् ।**
**स प्राह तत्किङ्किणिकानिपात–स्थानं मया नेत्रपथेऽध्यरोपि ॥१७१॥**

अथ कुमारागमनानन्तरं तया कनकवत्या भयाद्रहस्यभङ्गभिया मन्त्रिपुत्रः मतिसागरः अवृत्तपूर्वम् अभूतपूर्वम् किङ्किणीवृत्तं तन्निपातस्थानादिरूपमपृच्छि पृष्टः स मतिसागरः प्राह, किमित्याह मया मतिसागरेण तस्याः किङ्किणिकाया निपातस्थानं नेत्रपथेऽध्यरोपि कृतमित्यर्थः दृष्टिगोचरीकृतमित्यर्थः ॥१७१॥

अथ तयोरपरमपि प्रश्नोत्तरमाह किञ्चेति—

किञ्चापरं किञ्चन ते प्रणष्टं, मयाऽपि तत्स्थानमवेक्षितं च ।
अजानती सा तमपृच्छदेवं, तत् किं स च प्राह भुजाङ्गदस्ते ॥१७२॥

किञ्च अपरञ्च अपरमन्यदपि किञ्चन ते प्रणष्टमस्ति मया मतिसागरेण च तस्यान्यस्य त्वद्वस्तुनोऽपि स्थानमवेक्षितम् । सा कनकवती अजानती अजानाना सति किं तन्मम पतितं वस्त्वित्येवमपृच्छत् स मतिसागरश्च प्राह किमित्याह ते तव भुजाङ्गदः इति ॥१७२॥

क्वास्ते तदिति चेत्तत्राह अवापीति—

अवापि तद् येन ममापि तेन, समर्पितं तर्पितकोविदेन ।
इदं निशम्याऽवनिपालकन्या, स्वचेतसा चिन्तयति स्म चैवम् ॥१७३॥

तत्पतितस्ते भुजाङ्गदः येनावापि प्राप्तः तर्पितकोविदेन सन्तोषितविज्ञेन विद्वज्जनप्रियेण तेन पुरुषेण मम समर्पितं दत्तमपि, इदं मतिसागरोक्तं निशम्य अवनिपालकन्या राजपुत्री कनकवती स्वचेतसा एवं वक्ष्यमाणप्रकारेण च विचिन्तयति स्म ॥१७३॥

तस्याश्चिन्तनमेवाह ज्ञानादिति—

ज्ञानादयं तद्द्वितयप्रपात-स्थानं विजानाति न तद् विचित्रम् ।
चित्रं तदेतद् मम मानसस्य, जज्ञेऽपि यद् द्वैतमिदं करस्थम् ॥१७४॥

अयं मतिसागरः ज्ञानात् ज्ञानप्रभावाद् तस्य द्वितयस्य किङ्किण्या अङ्गदस्य प्रपातस्य पतनस्य स्थानं विजानाति तज्ज्ञानं विचित्रमाश्चर्यकरं न ज्ञानप्रभावादतीतस्यापि ज्ञानसंभवादिति भावः, ननु तर्हि किं चित्रमिति चेत्तत्राह मम मानसस्य एतच्चित्रमाश्चर्यम् यत्तदङ्गदः करस्थमपि द्वैतं संशयास्पदं जातम्, तदेव चित्रमित्यर्थः ॥१७४॥

अथ तस्या अग्रिमवितर्कमाह तदत्रेति—

तदत्र केनापि हि कारणेन, भाव्यं ध्रुवं साम्प्रतमन्यथा न ।
अदृश्यताप्राप्तिमृते तु तत्र, स्वयं समायाति कथं प्रियोऽपि ॥१७५॥

तत्करस्थमपि द्वैतमजनीत्यतोऽत्र विषये साम्प्रतं केनाप्यज्ञातेन कारणेन हि ध्रुवमवश्यं भाव्यम्, अन्यथा प्रकारान्तरं न नास्ति, प्रियागमनं जिनालये सन्देग्धि अदृश्येति प्रियः गुणवर्माऽपि तत्र देवजिनालये अदृश्यताप्राप्तिम् अदृश्यशरीरतालब्धिमृते विना स्वयं कथं समायाति गन्तुं प्रभवति ? नैव प्रभवतीत्यर्थः ॥१७५॥

अपरमपि तस्याः चिन्तितमाह दिनमिति—

दिनं द्वितीयं समुपैति चात्र, विखिन्ननेत्रमिय एष एव ।
जडाशयानामपि तद् विगेया, हहा ! भविष्यामि निरुत्तराऽहम् ॥१७६॥

एषः प्रिय एव गुणवर्माऽपि विखिन्ननेत्रः रात्रिजागृतवदलसनेत्र एवं द्वितीयं दिनं परदिवसे जिनालयगमनात् परदिवसे इति यावत् अत्र मद्भवने समुपैति आगच्छति, तत्ततः अहं कनकवती हहा इति खेदे निरुत्तरा उत्तरं दातुमसमर्था सती जडाशयानामपि साधारण-जनानामपि किम्पुनः शिष्टानां विगेया निन्दनीया भविष्यामि पत्युरुचितोपचाराकरणादिति-भावः ॥१७६॥

अथ तस्या उक्तिमाह-चिरमिति—

**चिरं विचिन्त्येति नरेन्द्रपुत्री, प्रोचे प्रिय ! क्वास्ति स बाहुरक्षः ? ।**
**आदेशतस्तस्य स मन्त्रिपुत्रः, समर्पयामास तमेव तस्यै ॥१७७॥**

' इत्युक्तप्रकारेण चिरं विचिन्त्य नरेन्द्रपुत्री कनकवती प्रोचे किमित्याह प्रिय ! स बाहु-रक्षोऽङ्गदः क्वास्ति ? तस्य गुणवर्मणः आदेशतः स मन्त्रिपुत्रः मतिसागरः एव तस्यै कनकवत्यै तमङ्गदं समर्पयामास ॥१७७॥

अथ कुमारकृतपतनस्थानमाह अवादीति—

**अवादि भूपालसुतेन भूयः, क्व कान्तिकान्ते पतितस्तवायम् ।**
**तयाऽभ्यधायि स्वयमेव चास्य, पातं न जानाति किमार्यपुत्रः ? ॥१७८॥**

भूपालसुतेन गुणवर्मणा भूयः पुनरवादि पृष्टम् किमित्याह कान्त्या रुच्या कृत्वा कान्ते कमनीये तव कनकवत्या अयमङ्गदः क्व स्थाने पतितः ? । तया कनकवत्या अभ्यधायि उत्त-रितम्, किमित्याह आर्यपुत्रः स्वयमेव चास्याङ्गदस्य पातं पतनस्थानं न जानाति किम् ? अपि त्ववश्यं जानातीत्यर्थः एवञ्च मया तत्स्थानकथनेनालमिति भावः ॥१७८॥

अथ कुमारकृतोत्तरमाह-जानामीति—

**जानामि नाहं मम चापरेण, त्वद्बाहुरक्षश्च समर्पितोऽयम् ।**
**इतीरयन्तं तमुवाच साऽपि, प्रियोत्तरेणाऽलमनुत्तरेण ॥१७९॥**

अहं गुणवर्मा न जानामि अङ्गदपतनस्थानमिति शेषः ननु तर्हि कथं प्राप्त इति चेत्त्राह अयं त्वद्बाहुरक्षोऽङ्गदः अपरेणान्येन पुरुषेण मम समर्पितो दत्तः । इतीत्थमीरयन्तं कथयन्तम् गुणवर्माणं सा कनकवत्युवाच, किमित्याह—प्रिय ! अनुत्तरेण पूर्वोक्तेण उत्तरेण अलम् पर्याप्तम्, त्वं स्वयमेव जानासीति पूर्वोक्तमेवोत्तरमित्यन्येनालमित्यर्थः ॥१७९॥

अथ तदापत्तिमाह त्वयेति—

**त्वया यदि स्वेन युगं तदाऽऽप्तं, ममाङ्गदः किङ्किणिका च तत् सद् ।**
**अथापरेण प्रतिपादितं ते, तदा ममाऽग्नावपि नास्ति शुद्धिः ॥१८०॥**

यदि त्वया गुणवर्मणा स्वेनात्मनैवा तत्किङ्किणिकाऽङ्गदं च युगं द्वयमाप्तं तदा सदुत्तमं जातं, अथ पक्षान्तरे, अपरेण पुरुषेण ते तव तद्द्वयं प्रतिपादितं दत्तं चेत्तदा मे ममाग्ना-

वपि अग्निस्नाने कृतेऽपि शुद्धिः पातिव्रत्यं नास्ति पतिव्रताया भूषणस्य परयन्यपुरुषप्राप्तिः संशय-स्थानमिति गूढाशय इति भावः ॥१८०॥

**अथ तस्या लज्जामाह-इतीति—**

**इति प्रकाश्यैवमवाङ्मुखी सा, द्वेधा विवेकापगमाद् बभूव ।**
**अथावनीवासवनन्दनस्तां, प्रसाद्य वाक्यैर्मधुरैस्ततोऽगात् ॥१८१॥**

इत्युक्तप्रकारेण प्रकाश्य उक्त्वा 'सा कनकवती विवेकापगमादनौचित्यसमाचाराद्धेतोः द्वेधा वचसा मुखेन चावाङ्मुखी नम्रमुखी अनुत्तरा च बभूव । लज्जया नम्रमुखी रहस्यभङ्गाद-नुत्तरेत्यर्थः । अथानन्तरमवनीवासवनन्दनो गुणवर्मा तां कनकवतीं मधुरैः वाक्यैः प्रसाद्य ततः स्थानादगात् ॥१८१॥

**अथ कुमारस्य पुनः कनकवती भवनागमनमाह-स्नानेति—**

**स्नानाशनादीनि वितत्य कृत्या-न्ययं तथैवेत्य पुनर्निशायाम् ।**
**इमां समालोकत हा ! विलक्षां, प्रेष्याद्वयेनेतिकथाप्रसक्ताम् ॥१८२॥**

अयं गुणवर्मकुमारः स्नानाशनादीनि कृत्यानि वितत्य समाप्य तथैव पूर्ववदेव निशायां रात्रौ पुनः एत्य आगत्य, हा खेदे प्रेष्याद्वयेन दासीद्वयेन सह इति वक्ष्यमाणप्रकारेण कथा-प्रसक्ताम् वार्त्तालापसंलग्नां विलक्षां खिन्नामिमां कनकवतीं समालोकत दृष्टवान् ॥१८२॥

**का सा कथेत्याह-अहमिति—**

**अहं हले ! किं विदधेऽतिमन्द-भाग्योदयानेन विधापिता यत् ।**
**एतं कनीत्वे शपथं कथञ्चिद्, विद्याधरेन्द्रेण दुराशयेन ॥१८३॥**

हले ! दासि ! यत् अनेन बुद्धिस्थेन दुराशयेन दुष्टेन विद्याधरेन्द्रेण कनीत्वे कन्याऽवस्थायां कथञ्चिदेतं वक्ष्यमाणप्रकारं शपथं प्रतिज्ञां विधापिता कारिता, अतोऽहं अतिमन्दः भाग्योदय यस्याः सा तादृशी किं विदधे कुर्वे ॥१८३॥

**कोऽसौ शपथ इत्याह-ममेति—**

**ममानिदेशेन कदाचनाऽपि, काम्यो भवत्या न निजोऽपि भर्त्ता ।**
**भयं दधत्या मयकाऽपि तस्मा-दिदं वचः स्वीकृतमल्पबुद्ध्या ॥१८४॥**

भवत्या कनकवत्या मम विद्याधरेन्द्रस्य अनिदेशेन निदेशं विना कदाचनापि निजः भर्ताऽपि अन्यस्य तु कथैव केति भावः । न काम्यः कामसुखाय श्रयणीय' । ननु त्वया ईदृशः शपथो न स्वीकर्तुमुचित इति चेत्तत्राह—मयका मया कनकवत्याऽपि तस्माद्विद्याधरेन्द्रात्सकाशात् भयं दधत्या सत्याऽल्पबुद्ध्या मन्दमतित्वाद्धेतोः इदमुक्तप्रकारं वचो वचनं स्वीकृतम् ॥१८४॥

ननु अज्ञानकृतस्य ज्ञाने सति परिहार एव प्रतीकार इति चेत्तत्राह-प्राणेति—

प्राणप्रियोऽयं मम चाहमस्य, प्राणप्रिया रूपगुणानुरूपा ।
अवैमि तन्नेदमहं यदस्य, जय्योऽस्ति वा नैव स खेचरेन्द्रः ॥१८५॥

अयं गुणवर्मा मम कनकवत्याः प्राणप्रियः रूपैर्गुणैश्च कृत्वाऽनुरूपा योग्या अहं कनकवती चास्य गुणवर्मणः प्राणप्रिया ननु तर्हि तादृशशपथत्यागे कोऽन्तराय इति चेत्तत्राह—अहं कनकवती तदिदं नावैमि जानामि, इदमिति किमित्याह यत् स खेचरेन्द्रः अस्य मम पत्युः जय्यः जेतुं शक्योऽस्ति न वाऽथवा नैव, एतदज्ञानेऽपि शपथत्यागेऽनिष्टस्यापि सम्भवादिति भावः ॥१८५॥

तस्य जय्यत्वे स्वेष्टसिद्धिमाह-यदीति—

यद्यार्यपुत्रस्य भवेत् स जय्यो, मनोरथास्तद् मम पूरिताः स्युः ।
अथाऽन्यथा दैवमिदं विधत्ते, तद् व्योमपुष्पायितमेव भूयात् ॥१८६॥

यदि आर्यपुत्रस्य मम पत्युर्गुणवर्मणः स विद्याधरेन्द्रः जय्यो भवेत् तत्तर्हि मम कनकवत्याः मनोरथाः कामसुखाद्यभिलाषाः पूरिताः स्युः अथ अथवा दैवं भाग्यमिदं स्वेष्टं अन्यथा स्वमनोरथविपरीतं विधत्ते, यदि दैववशात् स मम पत्युः जय्यो नास्ति, तत्तर्हि तन्मम स्वेष्टं व्योमपुष्पायितं व्योमपुष्पवदेव कृतं स्यात् अपूर्णमेव तिष्ठेदित्यर्थः ॥१८६॥

अथात्र दासीदत्तमन्त्रमाह-इत्यादिकमिति—

इत्यादिकं तां पुनरुक्तयन्तीं, प्रेष्याऽब्रवीत् स्वाभिमतं हितं च ।
गृहाधिदेवीव गृहेऽद्य तिष्ठ, त्वं स्वामिनीहैमि विशिष्य तत्र ॥१८७॥

इत्यादिकमुक्तप्रकारं तां दासीं प्रति पुनरुक्तयन्तीं पुनः पुनः कथयन्तीं तां कनकवतीं प्रेष्या दासी स्वस्य अभिमतं सम्मतं हितं पथ्यं चाब्रवीत्, किन्तदित्याह—स्वामिनि ! त्वं कनकवती अद्य गृहाधिदेवीव गृहदेवतेव इह गृहे तिष्ठ, तत्र जिनालये अहं दासी विशिष्य वेशभूषादिना विशिष्य भूत्वा एमि यामि ॥१८७॥

ननु तत्र यदि मदीया पृच्छा स्यात्तदा किं स्यादिति चेत्तत्राह-त्वदिति—

त्वत्स्वामिनो किं न समागताऽद्ये-त्येवं यदि प्रक्ष्यति मां स खेटः ।
तदा तदग्रे विदधे पुराऽह-मप्युत्तरं ते वपुषः सरुक्त्वम् ? ॥१८८॥

यदि स खेटः विद्याधरः अद्य त्वत्स्वामिनी कनकवती किं कुतो हेतोर्न समागतेत्येवं मां दासीं प्रक्ष्यति तदा तस्य विद्याधरस्याग्रे अहं दासी अपि ते तव कनकवत्याः वपुषः सरुक्त्वम-स्वस्थता एवोत्तरं पुरा विदधे विधास्यामि, पुरा योगे वर्तमानेति बोध्यम् ॥१८८॥

एवं कृतेऽन्यदपीष्टं सिद्धयेदित्याह प्रेति—

प्रकुर्वती त्वेवमहं तदीयं, ज्ञास्याम्यभिप्रायमपि प्रकृत्या ।
ईदृक् तु युक्तं विनिशम्य सम्यक्, सा राजकन्या दिशति स्म तां च ॥१८९॥

एवं त्वित्थं प्रकुर्वती तत्प्रश्नस्यैवं प्रकारेणोत्तरं ददत्यहं दासी प्रकृत्या तदाकारेङ्गितेन तदीयं विद्याधरस्याभिप्रायमपि ज्ञास्यामि ईदृगुक्तप्रकारं युक्तं युक्तियुक्तं विनिशम्य तु सा राजकन्या कनकवती तां दासीं सम्यग् दिशति आज्ञापयति स्म च ॥१८९॥

अथ दासीकुमारयोर्विमानरोहणमाह-अथेति—

अथ क्षणात् तद्विहिते विमाने, समारुरोह प्रयता भुजिष्या ।
मारोहकारी स कुमार एव, तस्यैकदेशं स तथैव भेजे ॥१९०॥

अथानन्तरम् क्षणात् तया कनकवत्या विहिते विकृते विमाने भुजिष्या दासी प्रयता सावधाना सती समारुरोह मायाः लक्ष्म्याः आरोहकारी अतिशायकः विशिष्टलक्ष्मीसम्पन्नः स कुमारो गुणवर्मा एव च तथैव पूर्ववदेव तस्य विमानस्यैकदेशं भेजे विमानैकदेशे क्वचित्कोणे स्थितवान् अत्र श्लोके स स इति पुनरुक्तपाठः मया तु एकत्र चकारमाश्रित्य व्याख्यातम् ॥१९०॥

अथ विद्याधरप्रश्नमाह-प्रेष्यामिति—

प्रेष्यां समीक्ष्योपगतां स तत्र, विद्याधरोऽपृच्छदतुच्छदर्पः ।
न स्वामिनी ते कथमागताऽद्य, श्रुत्वेति सोवाच वचस्विनी तम् ? ॥१९१॥

अतुच्छदर्पोऽत्यभिमानी स विद्याधरः तत्र जिनालये प्रेष्यां दासीमेकाकिनीमेवोपगतामागतां समीक्ष्य अपृच्छत् किमित्याह—अद्य ते स्वामिनी कनकवती कथं नागता, इतीत्थं श्रुत्वा वचस्विनी वाक्पटुः सा दासी तं विद्याधरं प्रत्युवाच ॥१९१॥

तदुक्तिमेवाह-नेति—

न स्वामिनी स्वामिसमीपमागाद्, यदद्य तद्वर्ष्मणि पाटवं न ।
भ्रूभङ्गभीमं विदधत् क्रुधाऽऽस्यं, ततो बभाषे स च खेचरेन्द्रः ॥१९२॥

स्वामिनी कनकवती स्वामिनः तव विद्याधरेन्द्रस्य समीपं नागात् तत्र हेतुमाह—यतोऽद्य तस्याः कनकवत्याः वर्ष्मणि शरीरे "शरीरं वर्ष्म विग्रहः" इत्यमरः पाटवं स्वस्थता न, नह्यस्वस्थेन शरीरेण कोऽपि क्वापि गन्तुं प्रभवतीति भावः, ततस्तदुत्तरं श्रुत्वा स खेचरेन्द्रश्च क्रुधा क्रोधेनास्यं मुखं भ्रुवो भङ्गेन कौटिल्येन भीमं भयङ्करं विदधत्सद् बभाषे ॥१९२॥

तद्भाषणमेवाह भोः इति—

भोः खेचराः यूयमगण्यपुण्या, युगादिनाथस्य जिनेश्वरस्य ।
स्नानं विधद्ध्वं त्वहमद्य तस्या, द्विधाऽपि मान्द्यापगमं करोमि ॥१९३॥

भोः खेचराः अद्य अगण्यपुण्याः अमितपुण्यवन्तः यूयम् जिनेश्वरस्य युगादिनाथस्य स्नानमभिषेकं विधद्ध्वम् कुरुध्वम्, ननु भवान् किं करिष्यतीति चेत्तत्राह–अहं विद्याधरेन्द्रस्तु तस्याः कनकवत्याः द्वेधा बुद्धिकृतस्य स्वशरीरकृतस्य च मान्धस्य जडताया अस्वस्थतायाश्चापगमं प्रतिकारं करोमि मन्दबुद्धिमान्द्यव्याजान्नायातेति तां दण्डयामीतिस्वाभिप्रायोक्तेः परिकरालङ्कारः ॥१९३॥

अथाग्रिमं खेचरकृत्यमाह—प्रेष्यामिति

प्रेष्यां विकृष्य स्वकरेण वेण्या, बभाण खेटः स रुषाऽरुणाक्षः ।
निर्वातु पूर्वं मम रोषवह्नि–स्तवाऽसृजा दासि ? विनाशितायाः ॥१९४॥

स खेटो विद्याधरः रुषा अरुणाक्षः सन् स्वकरेण प्रेष्यां दासीं वेण्या कृत्वा वेणीं गृहीत्वेत्यर्थः विकृष्याकृष्य बभाणोचे, किमित्याह–दासि ! पूर्वमादौ मम रोषवह्निः क्रोधाग्निः विनाशिताया हतायास्तव दास्या असृजा रक्तेन निर्वातु शाम्यतु, त्वां हन्मीति यावत् ॥१९४॥

अथ दासीकृतोत्तरमाह-सेति—

सा धैर्यमालम्ब्य जगौ विधेहि, तवोचितं यद् रुचितं च यत् ते ।
अस्मादृशां स्तोकमिदं न किंवा, युष्मादृशोपासनललासानाम् ? ॥१९५॥

सा दासी धैर्यमालंब्य जगौ, किमित्याह यत्तव विद्याधरेन्द्रस्योचितं स्वरूपयोग्यम् स्त्रियोऽवध्यत्वात्तत्र तव प्रवृत्तिः दुर्जनोचितेति काकुरिति भावः। यच्च ते तुभ्यं रुचितमिष्टं तद्विधेहि युष्मादृशानां दुर्जनानामुपासने सेवने लालसानां साभिलाषाणामस्मादृशा मन्दभाग्यानामिदं वधादि स्तोकमल्पमेव किं न ? अपि त्वल्पमेवत्यर्थः दुर्जनसेवकानां वध उचित एवेति भावः अत्रापि पूर्ववत्परिकराऽलङ्कारः ॥१९५॥

अथ विद्याधरोक्तिमाह सेति—

स चाब्रवीत् तां ग्रहिले किमेतद्,ब्रवीषि कालप्रतिमस्य मेऽग्रे ? ।
त्वमिष्टदेवं स्मर चैकताना–शरण्यमन्यं यदि वा श्रयस्व ॥१९६॥

तां दासीं प्रति स विद्याधरश्चाब्रवीत्, किमित्याह ग्रहिले ! मत्ते ! दासि ! कालप्रतिमस्य प्राणापहारकत्वादन्तकतुल्यस्य मे मम विद्यधरस्याग्रे एतदुक्तप्रकारं किं ब्रवीषि? नैवमुक्त्या त्वत्त्राणमिति भावः, तदेवाह– एकताना एकाग्रचित्ता सति स्वमिष्टं देवं स्मर, यथा स प्रसद्य त्रायेतेति भावः, यदि वाऽन्यं स्वेष्टदेवान्यं शरण्यं रक्षकं श्रयस्व न च तावताऽपि त्वत्त्राणमिति साभिप्रायोक्तिः ॥१९६॥

अथ दासीप्रतिवचनमाह देवस्येति—

देवस्य पादान् सततं स्मरामि,युगादिनाथस्य न चापरस्य ।
अन्यं शरण्यं न समाश्रयामि,मुक्त्वा कुमारं गुणवर्मसंज्ञम् ॥१९७॥

इत्युद्धतां वाचमुदीरयन्ती-मिमां स खड्गेन लुनाति यावत् ।
तावत् कुमारोऽयमभूत् पुरस्तात्, तस्यैव कृष्टासिरतिप्रकृष्टः ॥१९८॥

देवस्य युगादिनाथस्य पादान् चरणान् सततं नत्वापत्काल एव स्मरामि, अपरस्य कस्यचिन्न तथा गुणवर्मसंज्ञं कुमारं मुक्त्वा अन्यं शरण्यं रक्षकं न समाश्रयामि, इतीत्थमुद्धताम् उच्छृङ्खलां वाचमुदीरयन्तीमुच्चारयन्तीमिमां दासीं स विद्याधरः खड्गेन यावल्लुनाति छिनत्ति तावच्चायं कुमारो गुणवर्मा अति प्रकृष्टोऽतिबलवान् कृष्टासिरुद्यतासिः सन् एव तस्य विद्याधरस्य पुरस्तादग्रतोऽभूत् ॥१९७॥ ॥ १९८॥ ॥ युग्मम् ॥

अथ कुमारोक्तिमाह एवमिति—

एवं बभाषे स च खेचरं तं, दोर्दण्डकण्डूमपनेतुमिच्छुः ।
रणेन तेनैव वराक ! गेहे, नर्दिन्नरे ! स्त्रीषु पराक्रमस्ते ॥१९९॥

तेन खेचरेण सहैव रणेन दोर्दण्डयोः बाहुदण्डयोः युद्धेन कृत्वा कण्डूं खर्जूं युद्धाभिलाषमित्यर्थः अपनेतुं दूरीकर्तुम् पूरितुमिति यावत् इच्छुः सन् स कुमारश्च त खेचरं एवं बभाषे एवमिति किमित्याह-अरे ! वराक ! दुर्जन ! गेहे नर्दिन् ! न तु बहिः तादृशपराक्रमाभावादिति साभिप्रायोक्तिः । ते तव स्त्रीष्वेव पराक्रमः, न तु पुरुषेषु, दुर्जनानां मिथ्याबलभिमानिनामन्यत्रावसराभावादिति भावः ॥१९९॥

स्त्रीषु शस्त्रप्रवृत्तिं निन्दन्नाह उन्मत्तेति—

उन्मत्तबालाऽर्भकवृद्धमत्त-प्रमत्तरोगार्तनिरायुधानाम् ।
वधाय धावन्ति गृहीतशस्त्रा, ये केऽपि तेषां किल जीवितं धिक् ॥२००॥

ये केऽपि दुर्वृत्ताः उन्मत्तानाम् भ्रान्तचित्ततया प्रतिकर्तुमसमर्थत्वादयोग्यानाम् बालानां प्रथमवयःस्थानामप्राप्तविधानाम् स्वभावत एवाकुशलानाम् अबलाजनानां वा अर्भकाणां बलबुद्धिगत्राद्ययोग्यानां शिशूनान् वृद्धानां गतबलानां शिथिलेन्द्रियाणाम् मत्तानां प्रमत्तानां रोगार्तानाम् निरायुधानाम् च वधाय गृहीतशस्त्राः सन्तो धावन्ति, तेषामन्यायिनां जीवितं धिङ् निन्दितं किल प्रतीकारासमर्थे शस्त्रप्रवृत्तिर्न वीरयोग्येति भावः ॥२०० ॥

अथ विद्याधरसरम्भमाह तदिति—

तदग्रतस्त्वं मम तिष्ठ तिष्ठे-त्युदीरयन्तं क्षितिपालपुत्रम् ।
दासीं विमुच्यैष समाजगाम, पुरः स्वपाणौ निदधत् कृपाणम् ॥२०१॥

तत्ततो हेतोः त्वं विद्याधरः मम त्वत्प्रतिभटस्य योग्यस्य गुणवर्मणोऽग्रतः तिष्ठ तिष्ठ ! इतीत्थमुदीरयन्तं भर्त्सयन्तं क्षितिपालपुत्रं गुणवर्माणं प्रति एष विद्याधरः स्वपाणौ कृपाणं खड्गं निदधद् दासीं विमुच्य त्यक्त्वा पुरोऽग्रतः समाजगाम ॥२०१॥

अथ तयोर्युद्धमाह-तत इति—

ततः सशङ्कं समवेक्षितौ ता-वेकत्र राशाविव जीवशुक्रौ ।
विद्याधरैरायुधसंविधानै-श्चिरं रणं चक्रतुरुग्रबाहू ॥ २०२ ॥

ततोऽनन्तरम् एकत्र एकस्मिन् राशौ प्रसिद्धे मेषादिनक्षत्रे जीवशुक्रौ बृहस्पतिभार्गवाविव स्थितौ उग्रबाहू बाहुबलभूयिष्ठौ तौ गुणवर्मविद्याधरौ विद्याधरैः सशङ्कं को जेष्यतीति शङ्कापुरस्सरं यथास्यात्तथा समवेक्षितौ विलोकितौ सन्तौ आयुधानां संविधानैः सम्यक्प्रयोगैः कृत्वा चिरं रणं युद्धं चक्रतुः ॥ २०२ ॥

अथ विद्याधरवधमाह-वरीति—

वरिष्यते खेचरराजमेव, ध्रुवं जयश्रीरिति खेचराणाम् ।
यावद् गिरः खेऽपि समुल्लसन्ति, तावत् कुमारेण शिरोऽस्य लूनम् ॥ २०३॥

जयश्रीः जयलक्ष्मीः ध्रुवं निश्चयेन खेचरराजं विद्याधरेन्द्रमेव वरिष्यति, विद्याधरेन्द्र एव-जेष्यतीत्यर्थः । इत्येवं गिरः खेचराणां यावद्यदवधि खे आकाशे समुल्लसन्ति निःसरन्ति तावत्त-दवध्येव कुमारेण गुणवर्मणा अस्य विद्याधरेन्द्रस्य शिरो लूनम् छिन्नम्, हतः स इत्यर्थः ॥ २०३ ॥

विद्याधरवधप्रकारमाह-पौरोगव इति

पौरोगवः सूरणकन्दकस्य, यथैव खण्डद्वितयं कृपाण्या ।
निशातधारेण तथाऽसिनैव, चक्रे कुमारः स च खेचरस्य ॥ २०४ ॥

यथैव येन प्रकारेणैव पौरोगवः पाकागारिकः कृपाण्या लघुकर्त्तरिकया सूरणस्य तन्नाम्नः कन्दकस्य खण्डद्वितयं भागद्वयं करोतीति शेषः तथा तेन प्रकारेणैव स कुमारो गुणवर्मा च निशितधारेणातितीक्ष्णेनासिना खड्गेन खेचरस्य विद्याधरेन्द्रस्य चक्रे खण्डद्वितयमिति सम्बध्यते अल्पप्रयासेनैव गुणवर्मणा खेचरो हत इति यावत् ॥ २०४ ॥

ननु पातकमिति चेत्तत्राह-कुर्वन्तीति—

कुर्वन्ति किं नाम न दुष्कराणि, नराः प्रियार्थं विषयोपतप्ताः ?
रामोऽम्बुधिं किं न बबन्ध सीता-कृते महाभारतमन्यथा किम् ? ॥ २०५ ॥

विषयेण उपतप्ताः पीडिताः विषयप्राप्तावुत्कटेच्छावन्त इति यावत्, नराः प्रियार्थं प्रिया-प्राप्त्यर्थं, प्रियामुद्दिश्य यथास्यात्तथा वा, किंनाम दुष्कराणि न कुर्वन्ति ? अपि तु सर्वाणि दुष्कराण्यपि कुर्वन्त्येवेत्यर्थः । तत्र दृष्टान्तमाह रामः प्रसिद्धो दाशरथिः सीतायाः स्वभार्यायाः कृते निमित्तमम्बुधिं समुद्रं न बबन्ध किम् ? अपि तु बबन्धैव, समुद्रबन्धनात्मकमतिदुष्करमपि कर्म प्रियार्थं कृतवानेवेति भावः । महाभारतं तदाख्यं प्रसिद्धं युद्धम् अन्यथा प्रियानिमित्तं

विनैव किम् ? अपि तु न, किन्तु द्रौपदीनिमित्तमेव तादृशं सकललोकक्षयकरं महाभारतं जातमिति भावः ॥ २०५ ॥

अथ शेषविद्याधरवशीकारमाह-परीति

परिच्छदस्तस्य कुमारकस्य, तमेव भीरुः शरणं प्रपेदे।
अत्रान्तरे ताः प्रवरा रमण्य-स्तिस्रोऽपि तं राजसुतं समेयुः ॥ २०६ ॥

तस्य विद्याधरस्य परिच्छदः परिजनवर्गः कुमारकस्य कुमारसकाशाद्, शेषे षष्ठी, भीरुः भीतः सन् तं कुमारं गुणवर्माणमेव, शरणं रक्षकं प्रपेदे प्रपन्नवान्, अत्रास्मिन्नन्तरेऽवसरे ताः पूर्वोक्ताः प्रवराः उत्तमाः तिस्रः रमण्योऽपि तं राजसुतं गुणवर्माणं प्रति समेयुरागता. ॥ २०६ ॥

अथ तासां कुमारप्रशंसनमाह-महेति—

महानुभावोत्तम ! साधु साधु, त्वयाऽद्य विद्याधरपाशतोऽस्मात् ।
यद् रक्षिता इत्यधिकं ब्रुवाणा-स्ता भाषितास्तेन कुमारकेण ॥ २०७ ॥

महानुभावेषु तेजस्विषु उत्तम ? श्रेष्ठ ! कुमार ? साधु साधु पुनः पुनः स्तुत्यो भवानित्यर्थः, तत्र हेतुमाह—यद्यतः त्वया अद्य अस्मात् त्वया हतद्विद्याधरपाशतः निन्द्यविद्याधरतः रक्षिताः इतीत्थमधिकं पुनः पुनः ब्रुवाणास्ता रमण्यः तेन कुमारकेण गुणवर्मणा भाषिताः पृष्टाः ॥ २०७ ॥

किं पृष्टा इत्याह-यूयमिति

यूयं सुताः कस्य कथं गृहीताः, क्षुद्रेण रौद्रेण बलादनेन ?
इदं निगाद्यं यदि तद् ममाग्रे, सहोदरस्येव विशंसमात्थ ॥ २०८ ॥

यूयं कस्य सुताः ? क्षुद्रेण नीचेन रौद्रेण क्रूरेण चानेन मृतेन विद्याधरेण बलाद् बलपूर्वकं कथं केन प्रकारेण गृहीताः ? यदि इदं मया पृष्टं निगाद्यं वक्तुं योग्यं तर्हि सहोदरस्य सोदरभ्रातुरिव मम गुणवर्मणोऽग्रे विशंसमनाशङ्कम् आशङ्कां विहायेति यावत्, आत्थ कथयत ॥ २०८ ॥

अथ तदुत्तरमाह एकेति—

एकाऽवदत् तासु शुचिस्मितासु, सुतास्म्यहं शङ्खपुराधिपस्य।
श्रीदुर्लभस्याश्रितकल्पवृक्ष-च्छायाभृतो दुर्लभभूमिभर्तुः ॥ २०९ ॥

तासु शुचिस्मितासु विशदहासासु एका मुख्या प्रथमा वा अवदत्, किमित्याह-अहं शङ्खपुराधिपस्य आश्रितेषु शरणापन्नेषु कल्पवृक्षस्य छायां प्रतिबिम्बं बिभर्तीति तस्य, आश्रितेषु कामितप्रदत्वात्कल्पद्रुकल्पस्य दुर्लभायाः लब्धुमशक्यायाः अत्युत्कृष्टाया इति यावत्, भूमेः भर्तुः श्रीदुर्लभस्य तदाख्यस्य नृपस्य सुता अस्मि ॥ २०९ ॥

अथ स्वापहारमाह-स्वप्ने इति—

स्वप्नोऽम्बया यत्कमला व्यलोकि ख्याताऽस्मि नाम्नी कमलावती तत् ।
अनेन कन्यैव सुखेन सुप्तो-त्पाटच स्वयं कुट्टिमतोऽपि नीता ॥ २१० ॥

यद्यतः अम्बया मात्रा मयि गर्भस्थायां सत्यामित्यर्थः बलाल्लभ्यते, कमला लक्ष्मीर्व्यलोकि दृष्टा, तस्माद्धेतोः कमलावती इति नाम्ना ख्याताऽस्मि । कन्या कुमारिका शिशुर्वा एव सुप्ता सत्यहम्, अनेन त्वया हृतेन विद्याधरेण स्वयमेव सुखेनानायासेनैव, यद्वा सुखेन सुप्तेति सबंधनीयम् । उत्पाटच कुट्टिमतः बद्धभूमेः सकाशान्नीताऽपहृता "कुट्टिमं त्वस्य बद्धभू" इति हैमः ॥ २१० ॥

अथानन्तरवृत्तमाह दन्तैरिति—

दन्तैं रसज्ञामपि खण्डयन्ती, मुमुर्षुरेतेन दुरात्मनाऽहम् ।
इत्युद्रुषाऽभाणिषि तद् विमुञ्चे, त्वां चेत् करोषीदमुदाहृतं मे ॥२११॥

अहं मुमूर्षुः मर्तुमिच्छुः दन्तैः कृत्वा रसज्ञां जिह्वामपि यथा मरणं स्यादिति खण्डयन्ती सती उद्रुषा उद्गतक्रोधेन दुरात्मना एतेन हृतेन विद्याधरेण इत्यभाणिषि कथिता, इतीति किमित्याह त्वां कमलावतीं तदा विमुञ्चे त्यजामि, चेद्यदि मे मम उदाहृतं कथितमिदं वक्ष्यमाणं करोषि, नान्यथेति भावः ॥२११॥

इदमिति किमित्याह तदिति—

तत्किं मयैवं·परिपृष्ट एष, प्राह स्म पाणिग्रहणं भवत्या ।
विना निदेशं मम नैव कार्यं, वर्षैर्घनैरप्यतियौवनेऽपि ॥२१२॥

तत्तदुक्तं किमित्येवं मया कमलावत्या पृष्ट एष विद्याधरः प्राह स्म, किमित्याह भवत्या कमलावत्या मम निदेशमाज्ञां विना घनैः बहुभिरपि वर्षैः गतैः, अतियौवनेऽपि पाणिग्रहणं नैव कार्यम् ॥२१२॥

ततः किमभूदित्याह ममेति—

मम प्रसादेन सदा विमानं, मानप्रथं वैक्रियकं तवाऽस्तु ।
चैत्ये समागम्यमगम्यशक्तेर्युगादिदेवस्य ममान्तिकेऽत्र ॥२१३॥

मम विद्याधरस्य प्रसादेन तव कमलावत्याः सदैव वैक्रियकं मानप्रथं तदाख्यं विमानमस्तु, तथा, अत्र ममान्तिके समीपे अगम्यशक्तेः अज्ञेयसामर्थ्यस्य युगादिदेवस्य चैत्ये समागम्यमागन्तव्यम् ॥२१३॥

अथ वीणाशिक्षामाह तदिति—

तदुक्तमेतत् प्रतिपद्यमाना, विमोचिता तेन सुमोचिताऽहम् ।
नैपुण्यमेतेन च वेणुवाद्ये, सुशिक्षिता वीक्षितसारसार ॥२१४॥

एतदीदृशं तस्य विद्याधरस्योक्तं प्रतिपद्यमाना स्वीकुर्वती सुमोचिता पुष्पयोग्या पुष्पवत्कोमलेत्यर्थः अहं कमलावती तेन विद्याधरेण विमोचिता, तथा, वीक्षितसारेषु दृष्टश्रेष्ठष्वपि सार ? श्रेष्ठ ? सर्वश्रेष्ठेत्यर्थः । यद्वा वीक्षितः सारः श्रेष्ठः सारो बलं यस्य तादृशः, एतेन विद्याधरेण वेणुवाद्ये नैपुण्यं कौशलञ्च सुशिक्षिता ॥२१४॥

**अथ कमलावत्युक्तमुपसंहरति इयन्तीति—**

इयन्त्यहानि प्रतिपन्ननिष्ठा, कौमारधारिण्यत एव तस्थौ ।
उभे तदन्ये तदनन्तरं स्वं, स्वमेवमेवावदतां तदग्रे ॥२१५॥

अत एव कारणात्, इयन्ति एतावत्परिमाणानि अहानि दिनानि यावत्, प्रतिपन्ने प्रतिज्ञाते निष्ठा अवश्यं स्वीकृतं पालनीयमित्येवमास्था यस्याः सा तादृशी प्रतिज्ञापालनपरायणा अत एव कौमारधारिणी कुमारी एव न तु व्यूढा, तस्थावास्थम्, तस्याः कमलावत्याः अन्ये-इतरे उभे द्वे तदनन्तरं कमलावती पश्चात् तस्य गुणवर्मणोऽग्रे स्वं स्वं, वृत्तमितिशेषः, एवमेवावदतां आवेदयतामेव ॥२१५॥

**अथ कुमारस्य ततः प्रस्थानमाह--तिस्रेति—**

तिस्रोऽपि तेन प्रहितास्ततस्ता, निजे निजे सद्मनि संस्तुतेन ।
स्वयं समारुह्य च तद्विमानं ययौ तया चेटिकया समेतः ॥ २१६ ॥

संस्तुतेन परस्परालापद्वारा परिचितेन तेन गुणवर्मणा ततोऽनन्तरम् तास्तिस्रोऽपि रमण्यः निजे निजे सद्मनि प्रहिताः प्रेषिताः, स्वयञ्च तया चेटिकया दास्या समेतः सहितः तत्पूर्वोक्तं विमानं समारुह्य ययौ ॥२१६॥

**अथ कनकवतीकृततत्प्रशंसनमाह-चेटीति—**

चेटीमुखात् खेटवधं विबुध्य, सेशानकन्याऽपि पतिं बभाण ।
[नृ] ननाथ ! युक्तं विहितं हितं च, यत्तज्जनोऽनर्थनिबन्धनं नौ ॥२१७॥

चेटीमुखात्खेटस्य विद्याधरस्य वधं विबुध्य ज्ञात्वा ईशानस्य तदाख्यनृपस्य कन्या सा कनकवती अपि पतिं गुणवर्माणं बभाण, किमित्याह—नृनाथ ! नृप ! युक्तमुचितं हितमिष्टं च विहितम्, खेटवधो युक्त इष्टश्चेत्यर्थः कुत इत्याह— यद्यतः तज्जन. स जनो विद्याधरः नौ आवयोः अनर्थस्यानिष्टस्य कामसुखविघ्नस्य निबन्धनं निमित्तमासीदिति शेषः । न नाथ इति पाठे तु न नाथः परो यस्मादित्येवं न शब्देन सह बहुव्रीहिर्बोध्यः, परमनाथ इत्यर्थः ॥२१७॥

**अथ गुणवर्मोत्तरमाह-अवाचीति—**

अवाचि तेनेन्दुमुखि ! प्रियायाः, कृते न किं वा क्रियते महद्भिः ।
निजं कलत्रं च परस्य वश्यं, पराभवो दुःसह एष यस्मात् ॥११८॥

तेन गुणवर्मणा अवाच्युक्तम्, किमित्याह– इन्दुमुखि ! महद्भिः प्रियायाः कृते निमित्तं किं न क्रियते ! अपि तु सर्वम् एव क्रियते इत्यर्थः तत्र हेतुमाह–यस्मात्, निजं कलत्रं भार्या च परस्यान्यस्य वश्यमधीनमित्येव पराभवस्तिरस्कारः दुःसहः सोढुमशक्य इत्यर्थः ॥२१८॥

**अथ द्वयोः सहशयनमाह इतीति—**

**इत्युज्ज्वलप्रेममनोरमां ता–मालप्य बालां प्रबलानुरागः ।**
**निशीथिनीशेषमशेत सत्रा, तयैव सुत्रामकलत्रभासा ॥२१९॥**

इतीत्थम् उज्ज्वलेनोत्कटेन प्रेम्णा, यद्वा उज्ज्वलं प्रेम यस्याः सा चासौ मनोरमा च ताम् तां बालां कनकवतीमालप्याभाष्य प्रबलानुरागः सातिशयप्रेमा गुणवर्मा सुत्रामकलत्रस्य इन्द्राण्या भाः कान्तिरिव भाः यस्याः सा तया तया कनकवत्या सत्रा सह एव निशिथिनीशेषं रात्रिशेषं यावत्, अशेत निद्रितवान् ॥२१९॥

**अथ कुमारस्याब्धिप्रक्षेपमाह रतेति—**

**रतश्रमार्तौ भजतः स्म यावत्, निद्रासुखस्वादमिमौ प्रहृष्टौ ।**
**तत्सोदरः खेचर एव ताव–दुत्क्षिप्य चिक्षेप कुमारमब्धौ ॥२२०॥**

इमौ कनकवतीगुणवर्माणौ प्रहृष्टौ प्रसन्नौ सन्तौ एतस्य श्रमेण आर्तौ खिन्नौ यावन्निद्रासुखस्वादं निद्रामित्यर्थः भजतः प्राप्नुतः स्म, तावत् तस्य हतस्य विद्याधरस्य सोदरः सहोदरो भ्राता खेचरः विद्याधरः कुमारमुत्क्षिप्य उत्तोल्याब्धौ चिक्षेप ॥२२०॥

**अथ कुमारस्य तीरप्राप्तिमाह—अवाप्येति—**

**अवाप्य किञ्चित् फलकं स्वपुण्य–फलानुकारं दृढवर्मजन्मा ।**
**असौ दिनैः सप्तभिरूर्मिनुन्नः, पयोनिधेस्तीरमवाप धीरः ॥२२१॥**

असौ दृढवर्मजन्मा दृढवर्मपुत्रो गुणवर्मा धीरः धैर्यवान् सन्, स्वपुण्यस्य फलस्यानुकारं प्रतिरूपमिव किञ्चित्फलकं काष्ठखण्डमवाप्य ऊर्मिभिः तरङ्गैः नुन्नः प्रेरितः सप्तभिर्दिनैः कृत्वा पयोनिधेः समुद्रस्य तीरमवाप ॥२२१॥

**अथ तस्य जटाधराश्रमगमनमाह तमिति—**

**तं प्राणवृत्तिं मधुरैः फलाद्यै–र्जटाधरः कश्चन कारयित्वा ।**
**विलोकनानन्तरमेव पूज्य–निदेशतः स्वाश्रममानिनाय ॥२२२॥**

कश्चन जटाधरः योगी तं गुणवर्माणं विलोकनानन्तरमेव मधुरैः फलाद्यैः प्राणवृत्तिं प्राणधारणं कारयित्वा 'भोजयित्वेत्यर्थः' एतेन तस्य जटाधरस्य निष्कारणदयालुत्वं सूचितम् । पूज्यस्य गुर्वादेः निदेशतः स्वाश्रममानिनायानीतवान् ॥२२२॥

अथ तत्र कनकवत्यवलोकनमाह ईशानेति—

ईशानचन्द्रस्य नरेश्वरस्य, कन्यां स संप्रेक्ष्य तुतोष तत्र।
अस्मै नताया॒ऽथ स सुस्थिताय, तद्वृत्तमाख्याद् गुरुरच्छवृत्तः ॥२२३॥

स गुणवर्मा तत्राश्रमे नरेश्वरस्य नृपस्य ईशानचन्द्रस्य कन्यां कनकवतीं सम्प्रेक्ष्यावलोक्य तुतोष तुष्टोऽभूत् अथानन्तरम् अच्छवृत्तः निर्मलाचारः स गुरुर्जटाधरगुरुः, सुस्थिताय स्वस्थाय नताय प्रणतायास्मै गुणवर्मणे तस्याः कनकवत्यास्तत्रागमनादिरूपं वृत्तं वृत्तान्तमाख्यत्कथितवान् ॥२२३॥

किं तद्वृत्तमित्यपेक्षायामाह राजेति—

राजाङ्गजाऽऽकर्णय सावधानो, दिनादितस्तुर्यदिने विनोदात्।
वनं प्रयातेन मयेक्षितेय-मन्तर्हितेनेति निवेदयन्ती ॥२२४॥

राजाङ्गज ! नृपपुत्र ! गुणवर्मन् ! सावधानो दत्तकर्णः सन् आकर्णय शृणु। किमित्याह-इतोऽस्माद्दिनात्तुर्यदिने व्यतीते चतुर्थे दिने विनोदात् मनोरञ्जनहेतोः वनं प्रयातेन मया जटाधरेण अन्तर्हितेन वृक्षादिभिरन्तरितेन सता इति वक्ष्यमाणं निवेदयन्ती ब्रुवाणेक्षिता इयम् ॥२२४॥

किं ब्रुवाणेत्यपेक्षायामाह-वनेति—

वनान्तदेव्यो भगवत्य एता! दिगीश्वरा अप्यपराश्च देव्यः ?
दौर्भाग्यवर्णोपचिते ललाटे, कृत्वाऽञ्जलिं विज्ञपयामि युष्मान् ॥२२५॥

एताः भगवत्यः वनान्तदेव्यः दिगीश्वरा दिक्पाला दिक्पालिकाश्चाप्यपराः अन्याश्च देव्यः! युष्मान् दौर्भाग्यस्य मन्दभाग्यतायाः यो वर्णोऽक्षरम् तेन उपचिते समन्विते, भाग्यं ललाटे लिखितं भवतीति भाव. ललाटे मस्तके अञ्जलि करसम्पुटं कृत्वा विज्ञपयामि निवेदयामि ॥२२५॥

किन्तन्निवेदनमित्यपेक्षायामाह-मदिति—

मत्प्रेयसा तेन कृते ममैव, बाढं विसोढं गुरुदुःखजातम्।
किञ्चित् कदाचित् किल तस्य कार्ये, कुत्राऽप्युपाकार्षमहं तु नैव ॥२२६॥

मम कृते हेतोरेव, नत्वन्यस्याः कृते,तेन मच्चित्तस्थेन मम प्रेयसा प्रियतरेण पत्या गुणवर्मणा गुरु महद् दुःखजातं बाढं भृशं विसोढम्, अहं कनकवती तु तस्य कार्ये कदाचित्किल किञ्चिदपि कुत्राऽपि नैव उपकार्षम् उपाकारमाधाम् ॥२२६॥

तज्जीवनधारणासामर्थ्यमाह दिनेति—

दिनत्रयं नीरनिधेः स तीरे, मया समालोकि विलोक्यमूर्तिः।
ततः परं नैव विना ततस्तं, न जीवितं धर्तुमहं क्षमाऽस्मि ॥२२७॥

मया कनकवत्या नीरनिधेः समुद्रस्य तीरे दिनत्रयं यावत् विलोक्यमूर्तिः दर्शनीयरूपः स मत्प्रियः गुणवर्मा समालोकि एष आगच्छतीत्येवमपेक्षित. तत तत. दिनत्रयात्परम् नैव समालोकि, अशक्यत्वादेव, ततो हेतोरग्रतः तं प्रियं विना अहं जीवितं धर्तुं नैव क्षमाऽस्मि ॥२२७॥

ननु ततः किमित्यपेक्षायामाह वियोगेति—

वियोगदाहज्वरपीडिताऽहं, तस्यैव तेनैव परित्यजामि ।
प्राणान् निजानित्यभिधायवृक्ष-मारुह्य कण्ठे विततान पाशम् ॥२२८॥

अहं कनकवती तस्य प्रियस्य गुणवर्मणः वियोगस्य तज्जिनितो यो दाहस्तापः स एव पीडकत्वाज्ज्वरस्तेन पीडिता व्यथिता, तेन हेतुनैव निजान् प्रणान परित्यजामीतीत्थमभिधाय वृक्ष-मारुह्य कण्ठे पाशं पाशरज्जुं विततान चकार ॥२२८॥

ननु ततः त्वया किं कृतमिति चेत्तत्राह एतामिति –

एतां तथास्थां समवेक्ष्य वेगा-दागत्य पार्श्वे दयया परीतः ।
अभापिषीति प्रकृतिप्रशस्ये ? मा मा कृथाः साहसमाः ? वृथा त्वम् ॥२२९॥

एतां कनकवतीं तथास्थां कण्ठलग्नपाशरज्जुं समवेक्ष्य वेगात् झटिति पार्श्वे समीपे आगत्य दयया परीतः परवशः सन् इति अभाषिषि आख्यम्, इतीति किमित्याह—प्रकृत्या स्वभावत एव प्रशस्या तत्सम्बोधने, त्वम्, आः खेदे, खेदकरोऽयं साहस इत्यर्थः । वृथा साहसम् आत्मवधादिरूपं मा मा कृथाः, सम्भवे द्विरुक्तिः ॥२२९॥

अथ पतिप्राप्तिनिवेदनेन तत्समाश्वासनमाह इत इति—

इतो दिनादेव दिने तृतीये, भर्ता तवैवात्र समेष्यतीति ।
ज्ञानेन विज्ञाय यथार्थमस्यै, न्यवेदयं वेदविचारचारुः ॥२३०॥

वेदानां विचारे चारुर्निपुणः वेदतत्त्वज्ञोऽहं जटाधरः ज्ञानेन यथार्थं तथ्यं भाविनमर्थं विज्ञाय अस्यै कनकवत्यै इतोऽस्माद्दिनात्तृतीये आगामिनि दिने एव, न तु ततोऽधिके तव भर्त्ता अत्रैव समेष्यत्यागमिष्यतीतीत्य न्यवेदयमकथयम् ॥२३०॥

ननु तदनन्तरं किं जातमित्यपेक्षायामाह मदुक्तेति—

मदुक्तमेतं विनिशम्य तस्मात्, तरोः समुत्तीर्य विनम्य मेयम् ।
मदाश्रये त्यक्तमदाश्रयेऽस्थाद्, मया सहागत्य दिनत्रयं सा ॥२३१॥

एतदुक्तप्रकारं मम जटाधरस्योक्तं समाकर्ण्य तस्मात्तरोर्वृक्षात्समुत्तीर्यावारुह्य मा मां जटाधरं विनम्य इयं सा कनकवती मया सहागत्य दिनत्रयं यावत्त्यक्तः मदस्याभिमानस्याश्रयो यस्मिन्नेतस्मिन् शान्ते निष्पापे च ममाश्रये गृहे अस्थास्थितवती ॥२३१॥

अथ कनकवत्याः पुनरपि स्ववचोद्यममाह—

विनिःसरन्ती पुनरद्य शक्त्या, धृत्वा करेऽस्थाप्यत तापसोघैः ।
यावत् त्वमत्रागम एव भद्रा-दिश्येति विद्वान् स मुनिर्व्यरंसीत् ॥२३२॥

पुनः अद्य विनिःसरन्ती स्ववधार्थं तापसाश्रमान्निर्गच्छन्ती एषा कनकवती तापसानां मुनीनामोघैः समूहैः शक्त्या बलपूर्वकेन, एतेन तस्यास्तीव्रो गमनोद्यमः सूचितः करे धृत्वा अस्थाप्यत रक्षिता, भद्र ! यावत्त्वमत्रागमः आगतवानसि, एव इतीत्थमादिश्य कथयित्वा स विद्वान् मुनिर्व्यरंसीन्मौनमास्थात् ॥२३२॥

अथ कनकवत्याः स्ववृत्तकथनमाह-साऽपीति—

**साऽपि स्ववृत्तं दयितेन पृष्टा, शिष्टा यथावृत्तमभापतैवम् ।**
**विद्याधरेणाऽहमिलाभृतोऽस्य, समुन्नते सानुनि तेन मुक्ता ॥२३३॥**

शिष्टा सदाचारा सा कनकवत्यपि दयितेन पत्या गुणवर्मणा पृष्टा सती एवं वक्ष्यमाणेन प्रकारेण यथावृत्तं वृत्तमनतिक्रम्य स्वस्य वृत्तं समाचारमभाषत, एवमिति किमित्याह-अहं कनकवती तेन त्वदब्धिक्षेपकेण विद्याधरेण अस्य दृश्यमानस्येलाभृत. पर्वतस्य समुन्नते अत्युच्चे सानुनि शिखरे मुक्ता क्षिप्ता ॥२३३॥

ततः किं जातमित्यपेक्षायामाह-अवेति—

**अवातरं तस्य महीधरस्य, शृङ्गादहं कान्त ! कथञ्चनाऽपि ।**
**समागमं चात्र परं भ्रमन्ती, शेषं ततस्ते विदितं समस्तम् ॥२३४॥**

कान्त ! प्रिय ! गुणवर्मन् ! अहं कनकवती कथञ्चनापि महता कष्टेन तस्य महीधरस्य पर्वतस्य शृङ्गात् शिखरात् अवातरं नीचैः आगाम् । भ्रमन्ती अत्राश्रमे समागाम् च ततः परं शेषं समस्तं वृत्तान्तं ते तव विदितं, मुनिकथनेनेति भावः ॥२३४॥

अथ तत्र तयोर्दिनयापनमाह-अथेति—

**अथाप्लवन्तौ प्रवितत्य शैल-कूलङ्कषावारिणि सत्तरङ्गे ।**
**माधुर्यधुर्यं च फलादि भुक्त्वा, शेषं दिनं निन्यतुरेकचित्तौ ॥२३५॥**

अथानन्तरम् सत्तरङ्गे सत्तरङ्गशोभिते शैलस्य कूलङ्कषाया नद्याः वारिणि जले आप्लवन्तौ मज्जन्तौ प्रवितत्य स्नानादिक्रियां समाप्य माधुर्यधुर्यमतिमधुरं फलादि भुक्त्वा च एकाकचित्तौ निरतिशयप्रेमाणौ तौ कनकवतीगुणवर्माणौ शेषमवशिष्टं दिनं निन्यतुः ॥२३५॥

अथ तयोः पुनरब्धिक्षेपमाह-एकत्रेति—

**एकत्ररम्भानिलये प्रसुप्तौ, परस्पराश्लेषपरौ रजन्याम् ।**
**विद्याधरः सोऽप्यपहृत्य रोषाद्, वारांनिधौ निक्षिपति स्म भूयः ॥२३६॥**

एकत्रैकस्यां रजन्यां रात्रौ रम्भानिलये कदलीगृहे प्रसुप्तौ परस्परमाश्लेषपरावाश्लिष्टौ तौ कनकवतीगुणवर्माणौ स विद्याधरः भूयोऽपि रोषादपहृत्य वारांनिधौ समुद्रे निक्षिपति मुञ्चति स्म ॥२३६॥

अथ पुनस्तयोः सङ्गममाह-पाथ इति—

पाथोनिधे रोधसि पूर्ववत् तौ, तत्रैव भूयो मिलितौ कथञ्चित् ।
इदं स निर्वेदमवोचताऽयं, पुरः प्रियाया दृढवर्मसूनुः ॥२३७॥

तौ कनकवतीगुणवर्माणौ पूर्ववत् तत्र तस्मिन्स्थाने एव पाथोनिधेः समुद्रस्य रोधसि तटे कथञ्चित्केनापि प्रकारेण भूयः पुनरपि मिलितौ सङ्गतौ अयं दृढवर्मसुनुः गुणवर्मा प्रियायाः कनकवत्याः पुरः सनिर्वेदं सवैराग्यमिदं वक्ष्यमाणमवोचत ॥२३७॥

किमवोचतेत्यपेक्षयामाह-नेति

न भास्वता नैव कलावताऽपि, न चाऽपि सूरेण बुधेन नाऽपि ।
अहो ! बलेनापि पुरा कृतं तद्, विलङ्घितुं कर्म न शक्यतेऽदः ॥२३८॥

भास्वता सूर्येण न, कलावता चन्द्रेणापि नैव, सूर्येण बलवता न चाऽपि बुधेन विदुषा नाऽपि, बलेन बलभद्रेणापि पुरा पूर्वजन्मनि कृतमदः परोक्षं कर्मादृष्टं विलङ्घितुमतिक्रामितुं न शक्यते, तद् अहो आश्चर्यम् ॥२३८॥

राज्यमिति—

राज्यं क्व तत् प्राज्यमहीमहेन्द्र-शिरःस्रजाऽभ्यर्चितपादपीठम् ?
उपर्युपर्यागतिपीवराणि, क्वेमानि दुःखान्यपि नौ महान्ति ? ॥२३९ ॥

तत्प्रागनुभूतम् प्राज्यानां बहूनां महीमहेन्द्राणां नृपाणां शिरःस्रग्भिः मूर्धमाल्यैः अभ्यर्चितं पादस्य पीठमासनं यत्र तादृशं राज्यं क्व कुत्र, तथा नौ आवयोः उपर्युपरि पुनः पुनः आगतिभिरागमनैः पीवराणि विपुलानि महान्ति चिरस्थायीनि इमानि अनुभूतानि दुःखान्यपि क्व, अनयोर्महदन्तरमिति भावः ॥२३९॥

अथ कनकवतीकृतगुणवर्माश्वासनमाह-तत इति—

ततस्तयेशाननरेन्द्रपुत्र्या-ऽस्य धीरवृत्तानि परःशतानि ।
निदर्शनीकृत्य मनःस्थखेद-च्छेदः क्षणेन क्रियते स्म सत्या ॥२४०॥

ततः तया कनकवत्या इशाननरेन्द्रपुत्र्या सत्या अस्य गुणवर्मणः परःशतानि शतशः धीरवृत्तानि निदर्शनीकृत्य दृष्टान्तं दत्वा मनःस्थखेदच्छेदः चित्तवर्तिविषादापनयनं क्षणेन तत्कालं क्रियते स्म ॥ २४० ॥

अथ तदा सूर्यास्तमाह-उदेतीति—

उदेति सम्पद् महतामवश्यं, विपच्च तेषामपि नापरेषाम् ।
इत्यर्थमुद्भावयितुं तदाऽस्य, सहस्रधामाऽस्तमियाय सोऽपि ॥२४१॥

महताम् संम्पदुदेति आगच्छति, वर्धते च अवश्यं नात्र संदेहः, विपच्च विपदपि तेषामपि महतामेव न अपरेषाममहताम्, यस्योदयस्तस्यैव क्षयोऽपि इति भावः। अस्य गुणवर्मणः इति इमि-

मर्थमुद्भावयितुं प्रकटयितुमिव तदा तस्मिन् काले स सहस्रधामा सूर्योऽपि अस्तमियाया-दृश्यतां गत. ॥२४१॥

अथ तमो वर्णयति प्रभेति—

प्रभाकरे चास्तमिते तमस्सु, समन्ततो विस्तृतिमाश्रितेषु ।
प्राचीप्रतीचीप्रमुखो बुधेन, केनाऽपि नालक्षि दिशां विशेषः ॥२४२॥

प्रभाकरे सूर्ये अस्तमिते अस्तं प्राप्ते तमस्सु अन्धकारेषु समन्तत सर्वतः विस्तृतिं वृद्धि-माश्रितेषु प्राप्तेषु च सत्सु केनापि बुधेन विदुषापि, किमुतापरेण, प्राचीप्रतीचीप्रमुखः दिशां विशेषः भेद' नालक्षि न ज्ञातः, गाढान्धकारत. दिग्विवेको विलुप्तो धीमतामपीत्यर्थ' ॥२४२॥

तमसो भङ्ग्या अवधिमाह—कलानिधेरिति

कलानिधेरभ्युदयो न यावत्, कवेर्गुरोर्वा न च तारकस्य ।
सूरस्य यावद् न पुनः प्रकाश-स्तावत् तमांसि प्रसरन्तु नाम ॥२४३॥

नामेति प्रसिद्धौ, तमांसि तावत् तदवधि प्रसरन्तु, यावत् कलानिधेः चन्द्रस्याभ्युदय. उदयः न, कवेः शुक्रस्य, गुरोः जीवस्य, तारकस्य वा नाभ्युदय', पुनः यावत्सूरस्य सूर्यस्य न प्रकाशः एतेषु उदितेषु तमांसि नश्यन्त्येवेति भावः ॥२४३॥

अथ श्लेषेण तमोऽज्ञानयोः सामानाधिकरण्यमाह न इति—

न वर्णभेदः क्वचनापि यत्र, कनीयसो यत्र गुरोर्न मानः ।
शब्देन यत्रास्ति विशेषबोध-स्तमांसि तत्र प्रसरन्ति किं न ॥२४४॥

यत्र स्थाने क्वचनापि कुत्रापि वर्णभेदः ब्राह्मण्यादिवर्णविवेकः अथ च नीलपीतादिवर्णविवेकः तमसि रूपस्याप्रत्यक्षत्वादिति भावः । तथा यत्र, कनीयसः अल्पतमस्यापेक्षया गुरोर्महत' मानः सम्मान. अथ च यत्र ह्रस्वदीर्घयोः उच्चनीचयोर्वा मानः प्रमाणं नास्ति तमसा पदार्थानामाच्छादनेन तत्प्रमाणाज्ञानादितिभावः, तथा यत्र शब्देन साधनेन कृत्वा विशेषबोध. तत्पदार्थबोधः न तु प्रत्यक्षतः तथा यत्र उच्चैर्विहितस्य वक्ता एव विशिष्टो मन्यते तत्र तमांसि अन्धकारा अज्ञा-नानि वा किं कुतो न प्रसरन्तु ? अपितु प्रसरन्त्येव तमसि अज्ञाने च प्रसृते उक्तरूपगुणमेव जायते इति भाव. श्लेषः ॥२४४॥

अथ चन्द्रोदयमाह-जगदिति—

जगत् समस्तं निहतव्यवस्थं, प्रसृत्वरैर्वीक्ष्य तमःप्रपञ्चैः ।
राजा ततोऽयं प्रकटीबभूव, करान् वितन्वन्ननिमन्दमन्दम् ॥२४५॥

समस्तं जगत् प्रसृत्वरैः प्रसरद्भिः तमसां प्रपञ्चैः विस्तारैः निहता [illegible] लोकनादिस्थितिः यस्मिन् तादृशं निहतव्यवस्थमव्यवस्थं वीक्ष्य ततो [illegible]

चन्द्रः कश्चिन्नृपश्च 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयो' रित्यमरः । करान् किरणान् राजग्राह्यभागांश्च वितन्वन् विस्तारयन् आरोपयंश्च अति मन्दं मन्दं शनैः शनैः प्रकटीबभूव उदगाद् व्यवस्थामस्थापयच्च । अव्यवस्थं नियमानुलङ्घयन्तं हि लोकं नृपः करारोपणादिद्वारा क्रमशः प्रजा वशीकरोतीति भावः । अत्र विशेषणबलाच्चन्द्रे नृपव्यवहारप्रतीतेः समासोक्तिरलङ्कारः ॥२४५॥

अथ चन्द्रोदयस्य व्यक्तिविशेषे फलवैगुण्यमाह सुधेति—

**सुधामयूखेऽप्युदिते हिमांशौ, यच्चक्रवाकैः स वियोगतापः ।**
**सुदःसहः प्राऽऽपि तदत्र हेतुं, संभावयामो नियतेर्नियोगम् ॥२४६॥**

सुधा एव मयूखो किरणो यस्य तादृशे सुधामयूखे अमृतकिरणे, अपि, अत्रापिना अमृतेनापि दुःखमिति 'विरोधाभास.' सूच्यते । हिमांशौ चन्द्रे उदिते उदयं गते सति चक्रवाकैः स्वनामप्रसिद्धैः पक्षिविशेषैः यत्सुदुःसहः वियोगतापः वियोगरूपो ज्वरः प्रापि, रात्रौ चक्रवाकद्वन्द्वं वियुज्यते इति कविसमयप्रसिद्धेरिति भावः । तत्ततोऽत्र विषये नियतेर्भाग्यस्य नियोगं प्रेरणामेव हेतुं संभावयामः अनुमिनुमः, कथमन्यथा सुखहेतोरपि दुःखमिति भाव । पदार्थानां सुखादिहेतुत्वं भाग्याधीनं, न तु तेषां स्वत सुखदुःखजनकतेत्यर्थ. ॥२४६॥

अथ चकोरतृप्तिमाह-सुधाकर इति—

**सुधाकरो हन्त ! करोति चेद् न, ज्योत्स्नाप्रसिद्धामृतपानसत्रम् ।**
**चकोरडिम्भाः कथमाश्रयन्ते, तत्पुष्टिमेषां न परं यदिष्टम् ॥२४७॥**

हन्तेति विस्मये, पदार्थानां विस्मयकरे वैगुण्यसाद्गुण्ये इति भावः । सुधाकरः चन्द्रः चेद्यदि ज्योत्स्नानाम् प्रसिद्धममृतपानाख्यं सत्रम् यज्ञमुत्सवं वा न करोति कुर्यात्, तर्हि, चकोराणां पक्षिविशेषाणां डिम्भाः शावकाः "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशु" रित्यमरः । तैः करैः कृत्वा पुष्टिं तृप्तिं पोषणञ्च कथं केन प्रकारेणाश्रयन्ते आश्रयेयुः प्राप्नुयुः नैवेत्यर्थः । चकोराश्चन्द्रिकाः पिबन्तीति कविसमयप्रसिद्धिरिति भावः ननु पेयान्तरेण तेषां तत्साध्यमिति चेन्न, तदाह एषां चकोरडिम्भानां परमन्यत्पेयान्तरं, यद्यतः इष्टमुपादेयं तृप्तिकरं च न नास्तीत्यर्थः । यः सुधाया आकरः करो वा, तस्य लोकसुखार्थं सत्रारम्भ उचित एवेति भावः ॥२४७॥

अथ चन्द्रकरप्रभावं वर्णयतीत्याह-हंसीति—

**हंसी समालिङ्गति चक्रवाकं, स्वकान्तबुद्ध्या सितपक्षिकान्तम् ।**
**चक्री पुरस्तादपि राजहंसं, नवस्य राज्ञोऽभ्युदये किमन्यत् ? ॥२४८॥**

नवस्यापूर्वस्य राज्ञः चन्द्रस्य, कस्यचिन्नृपस्य वा अभ्युदये उदये, अत्युन्नतौ च, सम्भ्रमवशाद् भ्रान्तेश्च, हंसी वरटा "हंसी वारटावरटा" इति हैमः । चक्रवाकं स्वकान्तबुद्ध्या हंस-

बुद्धया, चन्द्रकिरणेन तस्य श्वेतिमप्राप्तेर्भ्रान्तेरिति भावः समालिङ्गति, तथा चक्री चक्रवाकी पुरस्तादपि अग्रत. स्थितम्, सितपक्षिणं श्वेतगरुतं हंसमेव कान्तम् मत्वा भ्रान्तेरेवेति भावः । राजहंसम्, समालिङ्गति, अन्यत्किम् ? कोऽन्यश्चन्द्रकरप्रभावो वर्ण्यताम् ? अयमेव महाविस्मयकरः इति भावः । अत्र चन्द्रकिरणैः रूपपरावृत्ते भ्रान्त्या स्वजातिविरोधिप्रवृत्तिप्रतिपादनाद् भ्रान्तिमानलङ्कारः ॥२४८॥

अथ कुमारप्रवृत्तिमाह-विनोदेति—

विनोदगोष्ठीमनुभूय वध्वा, तया समं निर्दलितप्रमीलः ।
तदा कुमारः स च यावदस्थात्, तावत् स खेटः पुनरागमद् द्विट् ॥२४९॥

तदा तादृशचन्द्रे जाग्रति, स कुमारः गुणवर्मा तया वध्वा भार्यया कनकवत्या समं सह विनोदगोष्ठीम् क्रीडामनुभूय, निर्दलिता भग्ना प्रमीला निद्रा तन्द्रा वा येन स तादृशः निर्दलितप्रमीलः जाग्रदेव यावदस्थात् स्थितः, तावच्च स द्विट् दुष्टः शत्रुर्वा खेटः विद्याधरः पुनः आगमदागतवान् ॥२४९॥

अथ कुमारकृततत्तर्जनमाह-तेनैवेति—

तेनैव साक्षेपमितीरितोऽसा-वरे ! प्रमीलापहतस्य मे द्विः ।
तदा त्वयैवापगतं क्व गन्ता, तत् सांप्रतं तिष्ठ निकृष्ट ! मेऽग्रे ? ॥२५०॥

तेन कुमारेण गुणवर्मणा एव साक्षेपं सतिरस्कारमसौ विद्याधरः इतीरितः कथितः, इतीति किमित्याह— अरे ! निकृष्ट ! अनुचितकारित्वान्नीचतर ! तदा पुरा त्वया दुष्टेनैव द्विः द्विवारम्, प्रमीलया निद्रया अपहतस्यासज्ञस्य मे मम अपगतं वञ्चयित्वा पलायितम्, तत् साम्प्रतं मयि जाग्रति सति क्व गन्ता यास्यसि ? नाद्य क्वापि गते त्वत्त्राणमित्यर्थः मम अग्रे तिष्ठ, अद्य स्वकृत्यफलं भोक्ताऽसीतिभावः ॥२५०॥

अथ तस्य भयंवर्णयतीत्याह-समिति—

संतर्जितस्यास्य नृपाङ्गजेन, तनैवमस्त्रं गलितं करस्थम् ।
दृष्ट्वा कुमारोऽपि निरायुधं तं, पाणिस्थितं शस्त्रममुञ्चदाशु ॥२५१॥

तेन नृपाङ्गजेन राजपुत्रेण गुणवर्मणा एवमुक्तप्रकारेण सन्तर्जितस्य भर्त्सितस्यास्य विद्याधरस्य करस्थमस्त्रमायुधं गलितं भयाज्जडीभूतात्करात्पतितम् । कुमारः गुणवर्माऽपि तं विद्याधरम् निरायुधमस्त्ररहितं दृष्ट्वा आशु शीघ्रमेव पाणिस्थितं स्वकरस्थमस्त्रममुञ्चदत्यजत् निरायुधे आयुधप्रहारस्य वीरधर्मविरुद्धत्वादिति भावः ॥२५१॥

अथ कुमारकृततिरस्कारमाह-तमिति—

तमग्रकेशेषु विधृत्य कृष्ट्वा, नरेन्द्रसूरित्यवदत् सदर्पम् ।
अरे ! त्वया संप्रति तत् स्ववीर्यं, न्यासीकृतं कुत्र हतप्रताप ! ॥२५२॥

नरेन्द्रसूः राजपुत्रो गुणवर्मा तं विद्याधरमग्रकेशेषु केशानामग्रभागेषु धृत्वा गृहीत्वा कृष्ट्वा आकृष्य च सदर्पम् साटोपमित्यवदत्, इतीति किमित्याह-- अरे ! हतप्रताप ! नष्टतेज ? त्वया विद्याधरेण सम्प्रति मयि जाग्रति तत्पूर्वमपि प्रयुक्तम् स्ववीर्यं स्वसामार्थ्यं कुत्र स्थाने न्यासीकृतं गोपितम् ? शयाने प्रभवतस्तव जाग्रति मयि बलहीनता कथमिति स्वबलमविचार्यैव प्रवर्त्तमानस्य तव महानीचतेति भावः ॥२५२॥

अथ कुमारकृतविद्याधरमुक्तिमाह-तदिति—

**तत् सांप्रतं याहि मयाऽसि मुक्तः, पुनः प्रशस्यं न बलं छलेन । |**
**प्रवर्त्तते नैव मयैव शस्त्रं, निशातमप्यस्त्रविवर्जितेऽदः ॥२५३॥**

तत्ततः निरायुधत्वादल्पबलत्वेन कृपापात्रत्वाच्च हेतोः मया गुणवर्मणा अधिकबलवता उदात्तचरित्रेण च मुक्तः क्षान्तापराधोऽसि, सांप्रतं याहि, पुनः छलेन कपटेन बलप्रयोगः न प्रशस्यमुचितम्, अतस्तथा त्वया पुनर्नाचरणीयमिति भावः त्वादृशस्य नीचस्य तु वध एवोचितः, किन्तु उदात्तचरित्रस्य मम गुणवर्मण' एव, शस्त्रम् निशातं तीक्ष्णमपि, त्वत्प्राणहरणसमर्थमपि अदो दृश्यमानम् अस्त्रविवर्जिते निरायुधे त्वयि अन्यत्रापि च क्वापि न प्रवर्त्तते पतति, तस्य वीरानुचितत्वादिति भावः ॥२५३॥

अथ विद्याधरस्य स्ववृत्तनिवेदनमाह-तमिति—

**तं तत्प्रियाऽभापत कान्दिशीकं केनाऽत्र भूयोऽसि जड ? प्रणुन्नः ?**
**मां प्रेरयामास पुनः पुनः सा प्रजावती भर्तृवियोगदग्धा ॥२५४॥**

तस्य गुणवर्मणः प्रिया कनकवती कान्दिशीकं, भयार्तं तं विद्याधरमभाषतापृच्छत्, किमित्याह--जड़! अज्ञानिन् । नहि विज्ञः कश्चित्तथाऽनुचितं विधत्ते इति भावः अत एव दयापात्रत्वमपि सूचितम् । अत्र दृश्येऽनुचिते कार्ये केन कर्त्रा प्रणुन्नः प्रेरितो नियुक्तो वाऽसि ! अथ विद्याधरकृतोत्तरमाह-- मां विद्याधरं भर्तुः वियोगेन कुमारकृतवधेन हेतुना दग्धा पीड़िता सा प्रजावती पुत्रवती गर्भिणी वा विद्याधरेन्द्रपत्नी पुनः पुनः प्रेरयामास ॥२५४॥

अथ गुणवर्मकृतां सोपदेशां तद्विद्याधरमुक्तिमाह-नरेन्द्रेति—

**नरेन्द्रसूरभ्यधितेदृशं मा, भूयः कृथास्तत्प्रतिपादनेन ।**
**इति प्रणम्रं स च तं विनीय, विनीतविद्यप्रवरो मुमोच ॥२५५॥**

नरेन्द्रसूः राजपुत्रो गुणवर्मा अभ्यधितोचे, किमित्याह— तस्य विद्याधरस्य स्त्रियः प्रतिपादनेन निवेदनेन प्रेरणेन वा कृत्वा भूयः पुनरपि ईदृशमेवमुक्तप्रकारं मा कृथा न कुर्याः, इतीत्थं प्रणम्रं कृतप्रणामं तं विद्याधरं विनीतया अभ्यस्तया विद्यया कृत्वा प्रवरः उदात्तचरित्रः स गुणवर्मा च विनीयोपदिश्य मुमोच ॥२५५॥

अथ तयोः दम्पत्योः पुरसमीपगमनमाह-ताविति—

तौ जम्पती तापसचक्रवर्ती, मुमोच नेदिष्ठपुरोपकण्ठे ।
अतिष्ठतां तौ कमनीयबाह्यो-द्याने क्षणं वृक्षदिदृक्षयैव ॥२५६॥

तापसे ऋषिषु चक्रवर्तीव स. ऋषिश्रेष्ठः तौ द्वौ जम्पती जायापती कनकवतीगुणवर्माणौ नेदिष्ठस्य समीपस्थस्य पुरस्योपकण्ठे समीपे मुमोच प्रापयामास, तौ कनकवतीगुणवर्माणौ कमनीये मनोहरे बाह्योद्याने वृक्षाणां दिदृक्षया द्रष्टुमिच्छयैवातिष्ठतां स्थितवन्तौ ॥२५६॥

अथ तयोः सूरिदर्शनमाह-महेति—

महामुनिश्रावकमध्यसंस्थं, तं तत्र च श्रीगुणरत्नसूरिम् ।
परिस्फुरच्छ्रीगुणरत्नराशि-रत्नाकरं सूरिमपश्यतां तौ ॥२५७॥

तत्र बाह्योद्याने च तौ कनकवतीगुणवर्माणौ महामुनीनां श्रावकाणां च मध्यसंस्थं मध्ये स्थितम् परिस्फुरतां शोभमानानाम्, श्रीणां लक्ष्मीणाम् गुणानामेव रत्नानां राशीनां रत्नाकरः सागर इव तं परिस्फुरच्छ्रीगुणरत्नराशिरत्नाकरं सूरिम् श्रीगुणरत्नसूरिं तदाख्यं मुनिश्रेष्ठम् पश्यतां दृष्टवन्तौ ॥२५७॥

अथ तयोस्तत्प्रणाममाह—तौ इति—

तौ तस्य धर्मं दिशतो मुनीशः, पादारविन्दद्वितयं निषेव्य ।
धत्तः स्म धर्मैकपरागलब्ध्या, प्रीतिं परां षट्पददम्पती व ॥२५८॥

तौ कनकवतीगुणवर्माणौ धर्मं दिशत उपदिशतस्तस्य मुनीशः मुनीन्द्रस्य श्रीगुणरत्नसूरेः पादारविन्दद्वितयं षट्पददम्पती भ्रमरमिथुनमिव निषेव्य, प्रणम्येत्यर्थः, धर्मरूपस्यैकस्यानन्यस्य परागस्य पुष्परसस्य लब्ध्या लोभेन कृत्वा परां सातिशयां प्रीतिं प्रसन्नतां धत्तः प्राप्नुतः स्म भ्रमराणां रसलाभेन तृप्तिरुचितैवेति भावः, रूपकोज्जीवितोपमाऽलङ्कारः ॥२५८॥

अथ तयोः शुभनिवेशमाह-तत इति—

ततस्तदन्ते गुणवर्मणेय-मभण्यतैवं दयिते ! भवत्या ।
अनित्यतोद्द्योतकरं भवस्य, नीतं वचः श्रोत्रपथं यथार्थम् ॥२५९॥

ततः धर्मदेशनाश्रवणानन्तरम्, तस्य मुनेरन्ते समीपे गुणवर्मणा इयं कनकवती एवमभण्यताभाण्यत, एवमिति किमित्याह—दयिते ! प्रिये ! भवत्या त्वया भवस्य संसारस्य अनित्यताया उद्योतकरं प्रकाशकं यथार्थम् सत्यं वचः श्रोत्रपथं नीतं श्रुतम् ॥२५९॥

ननु ततः किमिति चेत्तत्राह-चारित्रेति—

चारित्रपात्रस्य तदस्य कान्ते ! धर्मोपदेष्टुः सगुणेः समीपे ।
हित्वाऽधिदुःखां विषयोपसेवा-मादीयते संप्रति देवि ! दीक्षा ॥२६०॥

तद्भवानित्यत्वाद्धेतोः, देवि ! कान्ते ! प्रिये ! चारित्रपात्रस्य निर्मलचारित्रास्पदस्यास्य सुगुरोः श्रीगुणरत्नसूरेः समीपे अघिदुःखां दुःखबहुलां विषयाणामुपसेवां सेवनं हित्वा त्यक्त्वा सम्प्रति दीक्षा परिव्रज्या आदीयते गृह्यते ॥२६०॥

अथ कनकवतीप्रतिवचनमाह-प्रत्याहेति

प्रत्याह सा कान्त ! तदेतदुक्तं, स्थाने त्वया स्थानसमानधाम्ना ।
परं महोन्मादनिदानभूत-मद्याऽपि नौ यौवनमस्ति तावत् ॥२६१॥

सा कनकवती प्रत्याह-- प्रतिवचनं ददौ, किमित्याह--कान्त ! प्रिय ! स्थानसमानं स्थानोचितं धाम प्रभावो यस्या तेन स्थानसमानधाम्ना स्थानोचितविचारेण त्वया तदेतदुक्तं स्थाने युक्तमेव. तदाऽऽदिशेति चेत्तत्राह– परं किन्तु, तावत्, नौ आवयोः अत्राप्यधुनाऽपि महतः उन्मादस्य मदोन्मत्तस्य चित्तक्षोभस्य निदानं हेतुभूतं यौवनं तारुण्यमस्ति, न तु तद्व्यतीतमिति भाव. ॥२६१॥

अद्यापि विषयतृष्णा वर्त्तत एवेत्याह नैवेति—

नैवोपभुक्ता विषया यथेच्छं, प्राणप्रियाऽथापि निकाममेते ।
न लक्ष्यते तावदिदं कथञ्चित्, कीदृग् विवर्त्तो भविता ह्यमीषाम् ? ॥२६२॥

प्राणप्रिय ! अद्यापि अद्ययावदपि एते पञ्चेन्द्रियजन्यविलासादिविषया यथेच्छमातृप्ति निकामम् बाहुल्येन नैव उपभुक्ताः उपभोगविषयीकृता', तावदतः इद न लक्ष्यते ज्ञायते कथञ्चिदपि केनापि प्रकारेण, हि यदमीषां विषयाणाम् अनुभुक्तानाम् विवर्त्त. परिणामः कीदृग्भवितेति, गृहीतायां दीक्षायां विषयेच्छा बाधिष्यते, अनुपभुक्तत्वादिति विषयानुपभुज्य पश्चात्तथा विचारश्चेत्तदा गृहीता दीक्षा निर्बाधा स्यादिति भाव' ॥२६२॥

सम्प्रति संशये यत् कर्तव्यं तदाह-तदिति—

तज्ज्ञानपात्रं परिपृच्छ्य कञ्चिद्, गुरुं यथौचित्यमिदं विधेयम् ।
निशम्य चैतद् गुणवर्मणाऽपि, प्रियां प्रति स्पष्टमिदं न्यगादि ॥२६३॥

तत्स्वयं विषयविवर्तापरिज्ञानाद्धेतोः ज्ञानपात्रं ज्ञानिनं कञ्चिद् गुरुं परिपृच्छ्य स्वसन्देहनिवृत्तये पृष्ट्वा, पश्चाद्यथौचित्यमौचित्यानुसारेणेदं दीक्षाग्रहणादि विधेयमनुष्ठेयम्, एतत्कनकवत्युक्तं निशम्य च गुणवर्मणाऽपि प्रियां कनकवतीं प्रति स्पष्टं यथा स्यात्तथा इदं वक्ष्यमाणं न्यगादिकथितम् ॥२६३॥

यौवनं न बाधकमित्याह-उन्मादकमिति—

उन्मादकं यौवनमस्ति ताव-दितीरितं यद् न तदेव चारु ।
जितेन्द्रियाः सुन्दरि यौवनेऽपि, विलोक्यमाना बहवोऽपि सन्ति ॥२६४॥

सुन्दरि मनोरमे तावदादौ यौवनमुन्मादकं संयमस्यान्तरायोत्पादकमस्तीति यदुदितं कथितं तत् चारु युक्तं नैव, तत्र हेतुमाह—यौवनेऽपि त्वदुक्त्या उन्मादकेऽपि युवत्वेऽपि बहवो जना जितेन्द्रियाः संयमवन्तोऽनुन्मत्ताः विलोक्यमानाः सन्ति दृश्यन्ते. एवञ्च यौवनमुन्मादकमिति न नियम इति भावः ॥२६४॥

इन्द्रियासन्तोष एवोन्मादक इत्याह—वृद्धेति

वृद्धत्वमाप्याऽजितगोचराश्च, स्वमन्वयं चाऽपि विगोपयन्ति ।
तद्यौवनं नोन्मदतानिदान-मक्षाणि सन्तोषपराङ्मुखानि ॥२६५॥

वृद्धत्वम्—अनुन्मादकत्वेनेष्टं वार्धक्यमाप्यापि अजितगोचराः विषयतृष्णापरवशाश्च स्वमन्वयं कुलं विगोपयन्ति दूषयन्ति विषयार्थमनुचितप्रवृत्तेरिति भावः. तद्यौवनं नाऽनुन्मादकत्वस्वरूपव्यतिरेकव्यभिचारसत्त्वात् पूर्वोक्तरीत्या यौवनेऽप्यनुन्मादकत्वरूपान्वयव्यभिचारसत्त्वाच्च यौवनमुन्मादतायाः प्रमत्ततायाः निदानं हेतुभूतं न तर्हि किं तन्निदानमिति चेत्तत्राह—सन्तोषपराङ्मुखानि असन्तुष्टानि अक्षाणि इन्द्रियाणि. उन्मदतानिदानमिति भावः ॥२६५॥

सन्तोषेणोन्माद उन्मूलनीय इत्याह—सन्तोष इति—

सन्तोष एव क्रियते महद्भिः, क्लीबैर्विधातुं च न शक्यते सः ।
महाशया एव तपांसि चक्रुः, स्वीकृत्य सन्तोषरसायनं यत् ॥२६६॥

सन्तोषः तृष्णोपशमः महद्भिरात्मवश्यकृद्भिरेव क्रियते, संतोषः क्लीबैः आत्मबलहीनैः विधातुं न च नैव शक्यते, ननु तत्र किं मानमिति चेत्तत्राह—यद्यतः महाशयाः विषयतृष्णावर्जितत्वेन निर्लोभोदाराशया एव सन्तोष एव बलोपचयहेतुत्वाद्रसायनमौषधविशेष इव तत् स्वीकृत्य तपांसि तपोव्रतानि चक्रुः पालयामासुः, नोपभोगेन विषयेच्छा निवर्तते, किन्तु सन्तोषेणेति भावः ॥२६६॥

ज्ञानी गुरुरपि न प्रष्टव्य इत्याह—ज्ञानीति—

ज्ञानी गुरुः कश्चन पृच्छ्यते चे-त्येतद् यदुक्तं न वरं तदेव ।
धर्मेऽन्तरायाभिधमेव कर्म, संजायते सुभ्रु ! यतः कथञ्चित् ॥२६७॥

सुभ्रु ! कश्चन ज्ञानी गुरुः पृच्छ्यते चेत्येतद् यदुक्तं तद् नैव वरं श्रेष्ठम्, यतस्तथा कृते सति, कथञ्चिद्गुरुपृच्छादिना कालव्ययगमादेतो. धर्मे धर्मविषये अन्तरायाभिधं कर्म एव संजायते, पृच्छादिना धर्मकार्ये कालविलम्बोऽन्तरायहेतुरेवेति भावः ॥२६७॥

अथ गुणवर्मणः पुरप्रवेशमाह इत्येवमिति—

इत्येवमुक्त्वाऽपि विबुध्य तस्या, दीक्षानिषेधप्रवणाभिमन्धिम् ।
मुक्त्वा बहिः शीलकृतात्मरक्षां, तां प्रेयसीं सोऽपि पुरं विवेश ॥२६८॥

इत्येवमित्थमुक्त्वा कथयित्वाऽपि तस्याः कनकवत्याः दीक्षायाः उपलक्षणत्वात्तद्ग्रहणस्य निषेधे प्रवणामुन्मुखामभिसन्धिमाशयं विवुध्य शीलेन स्वचारित्रेण कृता आत्मरक्षा यस्यास्तां तादृशीं शीलबल-शालिनीं तां प्रेयसीं कनकवतीम् बहिः पुराद्—बहिर्मुक्त्वा स गुणवर्माऽपि पुरं विवेश ॥२६८॥

अथ तस्य द्रव्योपार्जनमाह स इति—

**स द्यूतकृद् द्यूतजयेन रायं, किञ्चित् समादाय परं प्रदाय ।**
**पौरोगवस्यापण एव गत्वा, व्यदीधपत् वण्डकमण्डकान्नम् ॥२६९॥**

स गुणवर्मा द्यूतकृद् द्यूतकर्मनिपुणः, अत एव द्यूते जयेन किञ्चित् रायं धनम्, समादाय प्राप्य "पौरोगवः सूदाऽध्यक्ष." इति हैमः । पौरोगवस्य सूदाध्यक्षस्य पाचकस्यापणे विपणौ गत्वा परं कञ्चित्पाचकमेव प्रदाय धनं दत्वा वण्डकमण्डकान्नं भक्षणार्थमन्नविशेषं व्यदीधपत् कारयामास ॥२६९॥

अथ तयोर्भोजनमाह-निधायेति—

**निधाय तत्पत्रपुटे पवित्रे, संगृह्य गत्वा विपिनान्तरे ताम् ।**
**अम्भोजनेत्रां लघु भोजयित्वा, भुंक्ते स्म शेषं स्वयमेव धीरः ॥२७०॥**

तत्पक्वमन्नं पवित्रे पत्रपुटे निधाय स्थापयित्वा सङ्गृह्य नीत्वा विपिनान्तरे वनमध्ये गत्वा अम्भोजनेत्रां पद्माक्षीं ता कनकवतीम् लघु शीघ्रम् भोजयित्वा धीरः गुणवर्मा स्वयं शेष कनकवतीभुक्तावशिष्टमेव भुंक्ते स्म ॥२७०॥

अथ तस्य चिन्तामाह भुजीति—

**भुजिक्रियानन्तरमेष वृक्ष—तले निविष्टो निजवल्लभां ताम् ।**
**दृष्ट्वा मनाक् शून्यहृदं स्वचित्त, इदं स दध्यौ विगलत्समाधिः ॥२७१॥**

एष स गुणवर्मा भुजिक्रियानन्तरम् भोजनानन्तरम् वृक्षतले निविष्ट उपविष्टः तां निजवल्लभां कनकवतीं मनाक् किञ्चित् शून्यहृदं शून्यमनस्कां दृष्ट्वा विगलत्समाधिः चञ्चलचित्तः सन् स्वचित्ते इदं वक्ष्यमाणं दध्यौ चिन्तयामास ॥२७१॥

तच्चिन्तामेवाह—किमिति

**किं दुःखितेयं निजबान्धवानां, सस्मार किं वाऽपरमेव किञ्चित् ?**
**ततः स चैवं प्रविचिन्त्य राजा—ङ्गजोऽप्युदस्थाद् गजराजशौर्यः ॥२७२॥**

इयं कनकवती दुःखिता केनाऽपि दुःखेन पीडिता, किमिति वितर्के निजबान्धवानां सस्मार किम्? किं वा अपरमेव किञ्चित् तत्र कारणमिति शेषः ततोऽनन्तरम् गजराजशौर्यः गजेन्द्रवद्बलवान् स राजाङ्गजः गुणवर्मा एवमुक्तप्रकारेण प्रविचिन्त्य उदस्थादुत्थितोऽभूत् ॥२७२॥

अथ कनकवत्यवस्थां युग्मेण वर्णयति विलोकेति—

विलोकयामास महीन्द्रपुत्र-स्तत्र स्थितरतां चकितैणनेत्राम् ।
महीतले मर्त्ययुगं लिखन्तीं, निरीक्षमाणां परितोऽपि काष्ठाः ॥२७३॥
निःश्वासधारामतिदीर्घदीर्घां, विमुञ्चतीं मृत्युमिव प्रयान्तीम् ।
कपोलदेशे विधृताग्रपाणिं, वितन्वतीं पञ्चमहुंकृतिं च ॥२७४॥

महीन्द्रपुत्रो गुणवर्मा तत्र वृक्षतले स्थितः सन् चकितस्य भीतस्यैणस्य मृगस्य नेत्रमिव नेत्रं यस्यास्तां चकितैणनेत्रां तां स्वप्रियां कनकवतीं महीतले पृथिव्यामेव मर्त्ययुगं मनुष्यद्वयं लिखन्तीं चित्रयन्तीं परितः सर्वत. काष्ठाः दिशोऽपि निरीक्षमाणामवलोकमानाम् अतिदीर्घदीर्घां महल्लम्बायमानाम् निःश्वासधारां निःश्वासपरम्परां मुञ्चन्तीम्, अत एव, मृत्युमिव प्रयान्तीम् मृत्युतुल्यावस्थामाश्रयमानां कपोलदेशे गण्डस्थले विधृतोऽग्रपाणिः कलकरतलं यया तां तादृशीं करतलन्यस्तकपोलां पञ्चमहुङ्कृतिं वितन्वतीं पीडया फूत्कुर्वन्तीं विलोकयामास ददर्श ॥२७३॥२७४॥

अथ तां तथा दृष्ट्वा गुणवर्मणो वितर्कमाह ईदृगिति—

ईदृग्व्यवस्थां समवेक्ष्य चैतां, दध्यौ स्वचित्ते नृपतेस्तनूजः
कन्दर्पबाणैरिव पीडितेयं, किं लक्ष्यते लक्षविकारलक्ष्या ॥२७५॥

एताम् कनकवतीमिदृशी वर्णितप्रकारा व्यवस्था विशिष्टा दशा यस्यास्तां तादृशीं समवेक्ष्य च नृपतेस्तनूजः राजपुत्रो गुणवर्मा दध्यौ किमित्याह — इयं प्रत्यक्षतो दृश्यमाना कनकवती लक्षेण कपटेन विकारेणावस्थाविशेषेण लक्ष्या अनुमेया, किमिति वितर्के, कन्दर्पबाणैः कामबाणैः पीडितेव कामज्वरार्तेव लक्ष्यते दृश्यते ? ॥२७५॥

अथ वितर्कान्तरमाह-मयेति—

मया समं वा विरहं किमेषा, सोढुं क्षणं न क्षमते मृगाक्षी ? ।
स्नेहेऽसमाने हि विजृम्भमाणे, स्वल्पो वियोगोऽपि सुदुःसहः स्यात् ॥२७६॥

वा अथवा एषा मृगाक्षी कनकवती क्षणं क्षणमात्रमपि मया गुणवर्मणा समं सह विरहं सोढुं न क्षमते किम् ? ननु तस्य कथं संभावनेति चेत्तत्राह — हि यतः असमाने असाधारणे स्नेहे प्रेमणि विजृम्भमाणे विलसति सति स्वल्पः क्षणात्मकोऽपि वियोगः सुदुःसहः सोढुमशक्यः स्यादिति सम्भावनायाम् सातिशयप्रेम्णोर्द्वयोर्वियोगोऽसहनीयो भवतीत्यर्थः ॥२७६॥

अथ तन्निश्चयार्थं हेतुं संगृह्णाति-तदिति—

तन्मां वीक्ष्य यदीयमाकुलमनाः, संपत्स्यते तद् ध्रुवं,
तीव्रौर्वानलवद् ममैव विरहः, संतापयत्येतकाम् ।
आगच्छन्तमवेक्ष्य मां यदि पुनः, कर्ताऽवहित्थां स्वयं,
नूनं क्वापि नरान्तरे तदियम-प्यासक्तिमालम्बते ॥२७७॥

तत्ततः मां गुणवर्माणं स्वपतिं वीक्ष्य यदि इयं कनकवती आकुलमनाः व्याकुलाः संपत्स्यते भविष्यति तर्त्तिहं ध्रुवं निश्चयेन एतकां कनकवतीं तीव्र उत्कटो य औवानलः वडवानलः अतिताप-प्रदत्वात्स इव तीव्रौर्वानलवलत्, "और्वस्तु वाडवो वडवानल" इत्यमरः मम गुणवर्मणो विरह एव नत्वन्यः. संतापयति पीडयति, पुनरिति विशेषान्तरे, तदेवाह--यदि मां गुणवर्माणमागच्छन्तमवेक्ष्य स्वयमवहित्थामाकारगुप्तिं "अवहित्थाऽऽकारगुप्ति"रित्यमरः कर्ता विधाता, स्वाकारगोपनं करिष्य-तीत्यर्थः। तर्त्तिहं, इयं नूनं क्वापि कस्मिन्नपि नरान्तरे पुरुषान्तरविषये आसक्तिं रागमालम्बते आश्रयति ॥२७७॥

अथ गुणवर्मणस्तज्जिज्ञासामाह-ध्यात्वैवमिति--

ध्यात्वैवं दृढवर्मराजतनयस्तस्यै स्वमालोकयत्,<br>
साऽपि प्रेक्ष्य तमापतन्तमकरोदाकारसंगोपनम् ।<br>
स प्रोचे निजबान्धवाः स्मृतिपथं, किं देवि ! नीतास्त्वया ?<br>
सम्प्रत्यङ्ग ! निरीक्ष्यसे प्रियतमे! प्रोद्विग्नचित्तेव यत् ॥२७८॥

एवमुक्तप्रकारेण ध्यात्वा विचार्य दृढवर्मराजतनयो गुणवर्मा तस्यै कनकवतीमुद्दिश्य स्वं स्वस्वरूपमालोकयददर्शयत् । सा कनकवत्यपि तं गुणवर्माणमापतन्तमागच्छन्तं प्रेक्ष्य आकारस्य वर्त्तमानस्योक्तप्रकारस्याकारस्य संगोपनमाच्छादनमवहित्थामकोरोत्, स गुणवर्मा प्रोचे पृष्टवान्, किमित्याह-- अङ्गेति कोमलामन्त्रणे, देवि प्रियतमे ! त्वया निजबान्धवाः स्मृतिपथं नीताः प्रापिताः, स्मृता इत्यर्थः, किमिति प्रश्ने, नन्वेतादृशप्रश्नस्य कोऽवसर इति चेत्तत्राह- यद्यतः सम्प्रति त्वम् प्रोद्विग्नं किञ्चित्स्मरणाद्व्याकुलं चित्तं यस्यास्तादृशी प्रोद्विग्नचित्तेव निरीक्ष्यसे दृश्यसे ? ॥२७८॥

अथ कनकवतीकृतोत्तरमाह-दम्भेति--

दम्भारम्भपुरःसरं नृपसुतः, प्रोचे तया सादरं,<br>
प्राणेशे त्वयि देव ! नदंति चिरं, किं बन्धुवर्गेण मे ! ।<br>
एतत् तद्वचनं निशम्य स पतिः संचिन्तयामासिवान् ।<br>
कण्ठस्थं ध्रुवमेपिका प्रवदति, स्वान्तः स्थितं नाऽऽत्मनः ॥२७९॥

तया कनकवत्या दम्भारम्भपुरस्सरं सकपटं सादरं नृपसुतो गुणवर्मा प्रोचे किमित्याह-देव ! त्वयि प्राणेशे चिरं नन्दति सानन्दं वर्त्तमाने सति मे बन्धुवर्गेण किम् ? न किमपि प्रयोजनमि-त्यर्थः। तस्याः कनकवत्याः एतदुक्तप्रकारं वचनं निशम्य स तस्याः पतिः गुणवर्मा संचिन्तया-मासिवान् दध्यौ किमित्याह एषिका कनकवती ध्रुवं निश्चयेन कण्ठस्थं मुखत एव प्रवदति, आत्मनः स्वस्य स्वान्तः स्थितं मनोगतं स्वाशयं गोपायति, कल्पितं चोत्तरं ददातीति मां च्छलयतीत्यर्थः ॥२७९॥

अथ तस्य वैलक्ष्यमाह–दम्पत्योरिति–

दम्पत्योरतिरागसागररस–प्रोन्मग्नमानात्मनोः,
प्रेमाऽऽधिक्यसमन्वयेऽपि चटुता, नैवौचितीमञ्चति ।
मत्वैवं तदुपान्ततः स च समु–त्थायाऽवनीन्द्रात्मजः,
पश्यन् विष्वगयं वनं तरुचितं केनाऽपि पुंसोदितः ॥२८०॥

अतिरागः उत्कृष्टः प्रेमा एव सागररसः समुद्रवारि तत्र प्रोन्मग्नः लीनः मानः परिमाणं ययो-स्तादृशात्मनोः सर्वथा मग्नयोरिति यावत् तादृशोर्दम्पत्योः जायापत्योः प्रेमाधिक्यस्य सातिशयप्रेम्णः समन्वयेऽनुवृत्तावपि सति चटुता मिथ्याऽभिकथनम् औचितीं युक्ततां नैवाञ्चति प्राप्नोति रागिणोर्निश्छलव्यवहारौचित्यमिति भावः एवमित्थं मत्वा निश्चित्य सोऽवनीन्द्रात्मजः अयं गुणवर्मा तस्याः कनकवत्या उपान्ततः समीपादुत्थाय च विष्वक् समान्तात्तरुभिश्चितं व्याप्तं वनं पश्यन् केनाऽप्यलक्षितेन पुंसा उदितः कथितः ॥२८०॥

किं कथित इत्यपेक्षायामाह–श्रीमदिति–

श्रीमत्कुमार ! गुणचन्द्रकुमारसिंहः, क्रीडन् वने किमधुनाऽपि स विद्यतेऽत्र ! ।
मत्याह तं स च स कोनु कुमारसिंहो, भद्र ! त्वया शुभधिया परिपृच्छ्यते यः ॥२८१॥

श्रीमत्कुमार ! गुणवर्मन् ! स प्रसिद्धः गुणचन्द्रः तदाख्यः कुमारसिंहः कुमारश्रेष्ठः अधुना साम्प्रतमपि अत्रास्मिन् वने क्रीडन् रममाणो विद्यते किमिति प्रश्ने स गुणवर्मा च तं पुरुषं प्रत्याह नु इति वितर्के, भद्र ! स त्वदुक्तः कुमारसिंहः कः यः त्वया शुभधिया सुमतिना परिपृच्छ्यते ? ॥२८१॥

अथ तत्पुरुषकृतोत्तरमाह–व्याचष्टेति–

व्याचष्ट सोऽत्र नगरे नगराजसार, ईशानचन्द्र इति भूमिपतिर्बभूव ।
तन्नन्दनः पृथुमतिर्गुणचन्द्रनामा, कामाऽऽकृतिर्विजितधामनिधिः स्वधाम्ना॥२८२॥

स प्रच्छकः पुरुषो व्याचष्ट कथयामास किमित्याह-अत्रास्मिन्नगरे नगराजसारः पर्वतेन्द्रतुल्य सत्त्वः ईशानचन्द्र इत्याख्यः भूमिपतिर्बभूव, तस्येशानचन्द्रस्य नन्दनस्तनयः पृथुमतिः मतिमान् कामाकृतिः कामदेवतुल्याकृतिः स्वधाम्ना स्वतेजसा विजितो धामनिधिश्चन्द्रो येन तादृशः गुणचन्द्रनामा, स कुमार इति सम्बध्यते ॥२८२॥

ननु स क्वासीद्यत् त्वयैवं पृच्छ्यते इति चेत्तत्राह–प्रस्थाप्येति–

प्रस्थाप्य कुत्रचन कर्मणि मामितोऽत्रो–द्याने समैत् स परिमेयपदातिपार्श्वः ।
क्रीडारसप्रचयसंचितमानसानां, दृष्टा स्थितिः क्वचन नैव कुमारकाणाम् ॥२८३॥

कुत्रचन कर्मणि किमपि कार्यार्थे मामितोऽस्मात् स्थानात्प्रस्थाप्य प्रेष्य अत्रास्मिन्नुद्याने परिमेयः अल्पः पदातिः पत्तिः पार्श्वे यस्य स तादृशः अल्पबलसमन्वितः स गुणचन्द्रः समैदागतवान्

तदागमनमेव समर्थयति क्रीडारसः रमणाग्रहः तस्य प्रचयेन वृद्ध्या संचितमानसानी सम्भृतचित्तानाम् क्रीडनोत्सुकानामित्यर्थः कुमारकाणां क्वचन कुत्राप्येकत्र स्थाने स्थितिः स्थिरतया अवस्थानं नैव दृष्टा, अतोऽत्रागत इत्यर्थः ॥२८३॥

अथ गुणवर्मकृतोत्तरमाह—तदिति--

**तदनु स गुणवर्मा व्याजहृद् व्याजहार, भवनमधिगतेष्टः प्राप विध्वस्ततापः।**
**पुनरपि स बभाषे तस्य सा सङ्गता किं, कुसुमविशिखकान्तारूपसंस्पर्धिरूपा ॥२८४**

तदनु तत्पश्चात् स गुणवर्मा व्याजहृद् सकपटं व्याजहारोक्तवान्, किमित्याह अधिगतेष्टः प्राप्ताभिलषितः अत एव, विध्वस्ततापः नष्टदुःखः स त्वदुक्तः कुमारः गुणचन्द्रः भवनं प्राप गतः पुनरपि स पुरुषः बभाषे, किमित्याह तस्य गुणचन्द्रस्य कुमारस्य कुसुमविशिखः पुष्पबाणः कामः तस्य कान्तायाः प्रियाया रूपेण संस्पर्धि स्पर्धायुक्तं रूपं यस्याः सा तादृशी सा नारी सङ्गता मिलिता किमिति प्रश्ने, तद्वदेत्यर्थः ॥२८४॥

अथ कुमारकृतोत्तरमाह—अवददिति—

**अवददिति कुमारः केवलं सङ्गता नो, अगमदसमरागा तेन सा सार्धमेव।**
**समभवदतिवेलं भद्र! भद्रं तदेतद्, यदियमुदितभाग्या सङ्गता तेन साकम् ॥२८५॥**

कुमारः गुणवर्मा इत्यवदत्, इतीति किमित्याह—सङ्गता मिलिता केवलं नो न केवलं मिलिता, अपितु असमरागा अनुपमप्रेमवती सा नारी तेन गुणचन्द्रकुमारेण सार्धमेवागमत्, तच्छ्रुत्वा पुरुषोल्लासमाह—भद्र! तदेतत्तेन सार्धं तस्या गमनमतिवेलमत्यन्तं भद्रं सुष्ठु समभवत् तेन गुणचन्द्रकुमारेण साकम् सह उदितभाग्या भाग्यवती, तेन सह विशिष्टसुखप्राप्तेस्तयोः परस्परमनुरूपत्वाच्चेति भावः, इयम् प्रस्तुता नारी सङ्गता कृतसङ्गा जाता ॥२८५॥

प्रेमसत्त्वं तयोराह--यदिति

**यद्दर्शने प्रथम एव तयोरतुल्यः, प्रेमा स कोऽप्युदभवद् वचनातिगोऽत्र।**
**जन्मान्तरानुभवसंभव एव यद्वा, स्त्रीपुंसयोः प्रभवति प्रियताऽतिरेकः ॥२८६॥**

यत्प्रथमे दर्शने एव तयोः गुणचन्द्रकुमारप्रस्तुतनार्योः अतुल्योऽनुपमः स कोऽपि वचनातिगोऽनिर्वचनीयः प्रेमा प्रेम उदभवत् प्रकटितः, ननु प्रथमदर्शन एव कथं प्रेमा जात इति चेत्त्राह—यद्वा यतः स्त्रीपुंसयोः जन्मान्तरस्यानुभवात्संभवो यस्य तादृशः पूर्वजन्मकृतप्रेमसम्बन्धजः एव प्रियतायाः प्रेम्णोऽतिरेकोऽतिशयः प्रभवति जायते, नान्यथेति भावः ॥२८६॥

अथ कुमारवितर्कमाह--इतीति--

**इत्युक्त्वा तत्र याते नरपतितनयश्चित्तवृत्त्येति दध्यौ,**
**केचिल्लीलावतीनां प्रविलसितमहो! वेदितुं नैव शक्ताः।**

**सौदामन्यातिलोलं प्रविरचितमिदं कामिनीनां मनः किं ?**
**सन्ध्यारागेण किं वा सुरपतिधनुषा स्वित् किमेतद् विधात्रा ॥२८७॥**

इति पूर्वोक्तमुक्त्वा तत्र तस्मिन् पुरुषे याते गते सति नरपतितनयः राजपुत्रो गुणवर्मा चित्तवृत्त्या मनसा इति दध्यौ चिन्तयामास, इतीति किमित्याह—अहो इति सखेदाश्चर्ये, केचिदपि लीलावतीनां नारीणां प्रविलसितं चरित्रं वेदितुं ज्ञातुं नैव शक्ताः समर्थाः । "स्त्रिय चरित्रं पुरुषस्य भाग्यं देवो न जानाति कुतो मनुष्य" इत्युक्तेरिति भावः नारीचित्तचाञ्चल्य-मेवोपमीयते विधात्रा ब्रह्मणा सौदामन्या विद्युता अतिचपलया कृत्वा इदं कामिनीनां स्त्रीणां मनः अतिलोलमतिचञ्चलं प्रविरचितं निर्मितं किम् ? कथमन्यथा क्षणादेवैकतोऽन्यत्र यातीति भावः, कारणगुणानां कार्यगुणारम्भकत्वात्तथैव कार्यात्कारणानुमानात् चेत्थमेव सम्भाव्यते, वस्त्व-न्तरेणापि चाञ्चल्यं सम्भावयति किम्वा अथवा—सन्ध्यारागेणाल्पकालवृत्तिना सुरधनुषा इन्द्रधनुषा स्वल्पकालदृश्यमानेन, स्विदिति वितर्के, एतत्स्त्रीमनः किं, निर्मितम् ? चाञ्चल्यस्यान्यथाऽनुपप-त्तेरिति भावः । उत्प्रेक्षाऽलङ्कारः ॥२८७॥

स्त्रीमनो नियन्त्रणं दुष्करमित्याह-मन्त्र-इति—

**मन्त्रः कोऽपि स नास्ति साध्यविषयो, नाप्यौषधं तादृशं,**
**यन्त्रं किञ्चन नैव तन्त्रमपि तद्, नैवास्ति लोकत्रये ।**
**वाताऽऽन्दोलितसौधकेतुवसन-प्रान्ताञ्चलाच्चञ्चलं**
**वामानां मन एव येन नियतं, केनाऽपि तद् यन्त्र्यते ॥२८८॥**

लोकत्रयेऽपि स प्रसिद्धः साध्यविषयः जपादिना साधनीयः तादृशः कोऽपि मन्त्रो देवा-धिष्ठिताक्षररूपः नास्ति, तादृशं विशिष्टशक्तिमदौषधमपि नास्ति, किञ्चन यन्त्रं यन्त्रशास्त्रप्रसिद्धम् नैव किञ्चन किमपि, तादृशम्, तत्तादृशं तन्त्रं तन्त्रशास्त्रप्रसिद्धं तन्त्रमपि नैवास्ति, येन मन्त्रादिना केनापि साधनेन कृत्वा वातेन पवनेन कृत्वा आन्दोलिताद् धुताद् सौधकेतोः प्रासा-दध्वजस्य वसनप्रान्ताद्वसनान्तादेवाञ्चलात् तदपेक्षयाऽपि चञ्चलं तत्प्रसिद्धं वामानाम् नारीणां मनः नियतं निश्चितरूपेण यन्त्र्यते स्थिरीक्रियते एव, उपायासाध्यं स्त्रीमन इत्यर्थः ॥२८८॥

सम्प्रति गुणवर्मनिर्वेदमाह-यदिति—

**यत्प्रेमप्रतिबन्धतोऽपि सुगुरोः, सङ्गो विमुक्तो मया,**
**साऽपीदृश्यभवद् विवेकविकला, हा ! दैवमत्रेरितम् ।**
**एतस्मात्तुल्यपत्तनं तदपि तन्नेदिष्टमाकर्ण्यते,**
**तस्मैतां प्रविमुच्य जन्म सफलं, कुर्वे स्वकीयं पुन ॥२८९॥**

मया गुणवर्मणा यस्याः कनकवत्याः प्रेम्णः प्रतिबन्धतः प्रतिबन्धकतया सुगुरोः गुणरत्नसूरेः सङ्गः विमुक्तः व्यक्तः, ततो दीक्षां नाग्रहिषम्, साऽपि विवेकविकला औचित्यविचाररहिता सती इदृशी मां विहायान्यत्रासक्ता अभवत्, वेधसो ब्रह्मणश्चेष्टितं हा ! खेदकारि, निन्दितं चेत्यर्थः । अथ तन्मतिमाह—तदापि तथापि, एतस्याः कनकवत्याः मातुलस्य मातृभ्रातुः पत्तनं नगरं नेदिष्ठमतिसमीपस्थमाकर्ण्यते श्रूयते तत्र तन्मातुलनगरे पुराऽऽदौ एतां कनकवतीं प्रविमुच्य स्थापयित्वा त्यक्त्वा वा, स्वकीयं जन्म सफलं कुर्वे गुरुसङ्गमादिना साधयामीत्यर्थः ॥२८९॥

**अथ गुणवर्मणः कनकवतीमातुलपुरगमनमाह-संमिति—**

**संचिन्त्येत्यभिगम्य तत् पुरमसौ, वध्वा तयाऽमा क्रमात्**
**तस्या मातुलमन्दिरान्तरविशद्, दौवारिकाऽऽवेदितः ।**
**आनन्दं कलयन् स चापि विदधे, संलाप्य जाम्यङ्गजा-**
**जामात्रोरनयोर्महेन महनं, रैसौधपट्टांशुकैः ॥२९०॥**

इत्युक्तप्रकारेण सञ्चिन्त्य विचार्य असौ गुणवर्मा तया वध्वा भार्यया कनकवत्या अमा सह तत्पुरम् कनकवतीमातुलपुरमधिगम्य गत्वा क्रमाद् दौवारिकेण द्वारपालेन आवेदितः निवेदितः सन् तस्याः कनकवत्याः मातुलस्य मन्दिरस्य गृहस्यान्तरविशत्प्रविष्टवान् स :कनकवतीमातुलश्चापि संलाप्याभाष्यानन्दं कलयन् प्राप्नुवन् जाम्यङ्गजायाः भगिनीपुत्र्याः जामातुस्तत्पतेश्च कनकवतीगुणवर्मणोः महेनोत्सवपूर्वकं राभिः द्रव्यैः कनकादिभिः सौधैः प्रासादैः पट्टांशुकैः पट्टवस्त्रैश्च महनं सम्माननं विदधे ॥२९०॥

**अथ गुणवर्मणो दीक्षादिप्राप्तिमाह-यामिन्यामिति—**

**यामिन्यामपरेद्युरात्मदयितां, सुप्तां विमुच्यैव तां**
**गत्वा सद्गुरुसन्निधौ शुभमना, दीक्षां समादाय सः ।**
**चारित्रं प्रतिपाल्य चारु निरती—चारं निजायुःक्षये**
**संप्राप्याऽनशनं विपद्य सपदि, प्रापत् पदं स्वःसदाम् ॥२९१॥**

अपरेद्युरेकदा शुभे धर्मकार्ये मनो यस्य स चारित्रेच्छुः स गुणवर्मा यामिन्यां रात्रौ तामात्मनो दयितां प्रियां कनकवतीं सुप्तां विमुच्य सद्गुरोः सन्निधौ गत्वा दीक्षां समादाय निरतीचारं शुद्धाचारं चारु चारित्रं प्रतिपाल्य निजस्यायुषः क्षये चरमसमये अनशनं सम्प्राप्य कृत्वा विपद्य मृत्वा सपदि शीघ्रमेव स्वःसदां देवानां पदं स्थानं प्रापत् ॥२९१॥

**अथ गुणवर्मणो भविष्यमुक्तिप्राप्तिमाह-च्युत्वेति—**

**च्युत्वा ततस्त्रिदिवतोऽप्युपलभ्य जन्म, मानुष्यकं शुचिकुलान्वयशीलशालि ।**
**दीक्षां प्रपद्य परितप्य तपांसि नित्यं, विज्ञानमाप्य परमं पदमाप्स्यते सः ॥२९२॥**

ततः त्रिदिवतः स्वर्गात् च्युत्वा शुचिना पवित्रेणोत्तमेन कुलेन अन्वयेन वंशेन च शीलेन च शालते शोभते इत्येवं शुचिकुलान्वयशीलशालि मानुष्यकं मनुष्यस्य जन्म उपलभ्य दीक्षां प्रपद्य तपांसि परितप्य विधाय स गुणवर्मा नित्यं विज्ञानं केवलज्ञानमाप्य प्राप्य परमं सर्वोत्कृष्टं पदम् स्थानम्, मुक्तिपदमित्यर्थः, आप्स्यते ॥२९२॥

अथ कनकवतीवृत्तमाह-इतश्चेति—

इतश्च गतनिद्रया कनकवत्यभिख्याभृता
तया स न समीक्षितः पतिरधिश्रितव्याजया ।
व्यधायि परिदेवनं, स विनिशम्य यद् मातुलः
ससंभ्रममुपागतः प्रवदति स्म चैतद् वचः ॥२९३॥

इतोऽस्मिन् पक्षे च गतनिद्रया सुप्तोत्थितया तया कनकवत्यभिख्यां कनकवतीत्यभिधां बिभर्त्ति तया अधिश्रितव्याजया कपटाशयया स पतिः गुणवर्मा न समीक्षितः, शयने इति शेषः । अतः परिदेवनं विलापो व्यधायि चक्रे । यत्परिदेवनं विनिशम्य स कनकवत्या मातुलः ससम्भ्रमं सत्वरं समुपागतः सन् स तद्वक्ष्यमाणं वचः प्रवदति कथयति स्म च ॥२९३॥

अथ तन्मातुलस्य कनकवत्याश्वासनमाह—मेति--

मा रोदीस्तनये ! गतः स भविता, कुत्राऽपि कार्यान्तरे,
जामाता किल तस्य दैवमपि ना-निष्टं विधातुं क्षमम् ।
आप्तैरेव नरैर्विशोध्य वसुधा-मानाययिष्यामि तं,
तत् स्वस्था भव पुण्यमाचर परं, दुःखं न धार्यं त्वया ॥२९४॥

तनये ! पुत्रि ! वात्सल्याधिक्यादित्थं सम्बोधनमिति न भागिनेय्यां तथोक्तिरसङ्गतेति ध्येयम् मा न रोदीः अश्रूणि विमुञ्च, स जामाता त्वत्पतिः कुत्रापि स्थाने कार्यान्तरे कार्यविशेषनिमित्तम्, गतो भविता गतः स्यात्, नन्वज्ञातस्थाने अनिष्टस्यापि सम्भवः इति चेत्त्राह तस्य त्वत्पतेर्गुणवर्मणः, किलेत्यलीके, दैवमदृष्टमपि अनिष्टं विधातुं न क्षमम् न समर्थम्, कार्यमात्रकारणेऽनिष्टं विधातुमप्रभवत्यन्यस्य का चर्चेति भावः ननु स चेत्स्वयं नागच्छेदिति चेत्तत्राह—आप्तैः विश्वासपात्रैः स्वैः नरैः भृत्यादिपुरुषैः कृत्वा वसुधामखिलां पृथिवीं विशोध्यान्विष्य तं गुणवर्माणमानाययिष्याम्येव, स्वयमनागच्छन्तमपि बलादप्यानाययिष्यामीत्यर्थः । तत्तस्मादुक्ताश्वासनाद्धेतोः स्वस्था व्याकुलताविमुक्ता भव, पुण्यमाचर, तस्याभिलषितसाधकत्वेऽधिकारादितिभावः परं किन्तु त्वया कनकवत्या दुःखं पतिवियोगजन्यतापं न धार्यं कार्यं, इतीति शेषः ॥२९४॥

अथ तत्कृतगुणवर्मशोधनाद्याह—प्रोच्येति

प्रोच्येति प्रहितैर्नरैः स परितो, व्यालोकि नालोकितः
कुत्राऽपि प्रतिचत्वरं प्रतिपुरं, संशोधयद्भिर्भृशम् ।
आगत्याऽपि निवेदितं नरपतेस्तेनाऽपि ते शिक्षिता
जामेय्याः पुरतो न केनचिदिदं, वाच्यं न वाच्यं ततः ॥२९५॥

इत्युक्तप्रकारेण प्रोच्याश्वास्य, कनकवतीमित्यर्थाल्लभ्यते, स कनकवतीमातुलः प्रहितैः प्रेष्यैः नरैः प्रेषितैः सद्भिरपि परितः सर्वतो भृशं प्रतिचत्वरं प्रतिपुरं संशोधयद्भिरन्वेषयद्भिः व्यालोकि अन्वेषणं गुणवर्मणो कारयति स्म, किन्तु नालोकितः गुणवर्मा कुत्रापि न दृष्टः। तथा आगत्य प्रतिनिवृत्त्य नरपतेः कनकवतीमातुलस्य निवेदितमस्माभिः स गुणवर्मा क्वापि न दृष्ट इत्येवं विज्ञापितमपि, ततस्तत्पश्चात् तेन कनकवतीमातुलेन ते भृत्याः शोधका अपि शिक्षिताः उपदिष्टाः, किमित्याह—जामेय्याः भागिनेय्याः पुरतः केनचित्केनापि न वाच्यमकथनीयम्, दुःखोद्बोधकत्वादिति भावः न वाच्यं कथनीयम् ॥२९५॥

अथ कनकवतीचिन्तामाह—सा इति—

साऽप्याध्यायदयं ध्रुवं मम तकद्, दुश्चेष्टितं जज्ञिवां-
स्तेनैवाहमभूवमस्य मनसो, वैरङ्गिकी निश्चितम् ।
प्राप प्रागपि सोऽपि सद्गुरुगिरा, संसारवैराग्यकं
संप्रत्येष विशेषतो मम पुन-र्दुर्वृत्तसंप्रेक्षणात् ॥२९६॥

सा कनकवत्यपि अध्यायत् चिन्तयामास, किमित्याह–मम कनकवत्याः तकत्पुरावृत्तं दुश्चेष्टितम् दुष्कृत्यम् अयं मम पतिर्गुणवर्मा जज्ञिवान् ज्ञातवान् ध्रुवं निश्चितमेतत्, तेन दुश्चेष्टितेन पुराजातेनैव हेतुना अहं कनकवती निश्चितमस्य गुणवर्मणो मनसो वैरङ्गिकी विरसतापादिका स्वस्मिन्नप्रीतिसाधिकेति यावत्, अभूवम्। स गुणवर्माऽपि प्राक् पुरा अपि सद्गुरोः गुणरत्नसूरेः गिरा उपदेशतः संसारे वैराग्यकं विरक्ततां प्राप, एष गुणवर्मा सम्प्रति मम कनकवत्याः दुर्वृत्तस्यान्यत्रासक्तिरूपस्य प्रेक्षणात्कृत्वा पुनः, द्विगुणं वैराग्यं प्राप्तवानित्यर्थः ॥२९६॥

अथ कनकवत्याः गुणचन्द्रसमीपगमनमाह—तदिति—

तद् नूनं विदुषाऽमुनोत्तममुनेरादीयते स्म व्रतं
स्वार्थं तद् वितनोम्यहं किमधुना व्यर्थैर्विकल्पैरिमैः ।
ध्यात्वैवं परिवञ्च्य मातुलनृपं दुष्टाऽऽशया तत्क्षणात्
गत्वा सा गुणचन्द्रमेव दयिती–चक्रेति चन्द्रं रुचा ॥२९७॥

तत्ततो वैराग्याद्धेतोः अमुना विदुषा धीमता गुणवर्मणा नूनं ध्रुवमुत्तमान्मुनेः गुणरत्नसूरेः सकाशात् व्रतं दीक्षाम् आदीयते स्म गृहीता स्यात् । तत्ततो हेतो. अहं कनकवती स्वार्थं स्वेष्टं वितनोमि साधयामि, अधुना इमैः एभिः व्यर्थैः फलाभावान्निरर्थकैः विकल्पैः गुणवर्मा किं

कृतवानित्यादिरूपैः विचारैः किम्? न किमपीष्टं सिद्ध्यत्येमित्यर्थः। अत्रेमैरितीदमो बहुवचने तृतीयायाः कथं प्रयुक्तमिति ध्येयम्। एवमुक्तप्रकारेण ध्यात्वा विचार्य दुष्टाशया दुर्वृत्ता सा कनकवती मातुलं नृपं परिवञ्च्य छलयित्वा तत्क्षणात् गत्वा रुचा कान्त्या कृत्वा अतिचन्द्रम् चन्द्रातिशायिनं गुणचन्द्रमेव दयितीचक्रे प्रियमकरोत् ॥२९७॥

अथ गुणचन्द्रस्त्रीणां विरोधमाह-तदिति—

तदासक्तस्वान्तं स्वपतिमवलोक्य प्रियतमा-<br>स्तदीया बिभ्राणाः प्रचुरतरखेदं च हृदये।<br>मिलित्वा निःशेषाः समवधृतदुःखैकविरहा,<br>रहोदेशेऽन्योऽन्यं प्रणिजगदुरेतत् स्फुटतरम् ॥२९८॥

तदीयाः गुणचन्द्रस्य प्रियतमाः स्त्रियः स्वपतिं गुणचन्द्रं तस्यां कनकवत्यामासक्तस्वान्तमनुरक्तचित्तमवलोक्य हृदये प्रचुरतरं सातिशयं खेदं तापं बिभ्राणाः धारयन्त्यः सत्यः समवधृतः दुःखमेकं प्रधानं यस्मिन्नेवंभूतो विरहः पत्युः स्वोपेक्षारूपो याभिस्ताः तादृश्यः निःशेषाः सकला एव रहोदेशे एकान्तप्रदेशे मिलित्वा सङ्गत्यान्योऽन्यं परस्परं स्फुटतरम् व्यक्तमेतद्वक्ष्यमाणं प्रणिजगदुः ब्रुवन्ति स्म ॥२९८॥

अथ तासां परस्परोक्तिमेवाह-ज्वालेति—

ज्वालाजालकरालपावकमहाकुण्डे प्रवेशो वरं,<br>कल्लोलस्फुटनक्रचक्रविषमे पातः पयोधौ वरम्।<br>क्रुद्धाऽऽशीविषभीष्मवक्त्रकुहरे क्षिप्तः करो वा वरं,<br>दुःखं मानविनाशकारि न परं नार्याः सपत्नीभवम् ॥२९९॥

ज्वालानां जालैः समूहैः कराले भयङ्करे पावकस्याग्नेः महाकुण्डे प्रवेशः वरमीषत्प्रियम्, तथा, कल्लोलैः महद्भिस्तरङ्गैः स्फुटैः दृश्यमानैः नक्रचक्रैः ग्राहवृन्दैः विषमे गहने भयङ्करे वा पयोधौ पातः झम्पापातः वरम्, "महत्सूल्लोलकल्लोलौ" "ग्राहोऽवहारो नक्रस्तु" इति चामरः तथा क्रुद्धस्याशीविषस्य सर्पस्य भीष्मे भयानके वक्त्रे मुखे एव कुहरे विवरे करः पाणिः क्षिप्तः न्यस्तो वा वरम्, "दारुणं भीष्मं घोरं भीमं भयानकम्" "अथ कुहरं शुषिरं विवरं बिलमि"ति चामरः। ननु तर्हि किं न वरमिति चेत्तत्राह-परं किन्तु नार्याः मानस्य विनाशकारि सपत्नीभवं दुःखं न, वरमितिशेषः। पूर्वोक्तदुःखानां मानविनाशकारित्वाभावादिति सहेतुको व्यतिरेकाऽलङ्कारः ॥२९९॥

अथ कनकवती मृत्युमाह-यावदिति—

यावज्जीवति चैपिका विजयते तावत् पुनः कार्मणं,<br>तस्मिन् जीवति भर्तृसङ्गमसुखं नास्माकमस्ति ध्रुवम्।<br>रूपं तेन विनाऽपि जीवितमिदं व्यर्थं विचार्येति ता-<br>स्तस्यै क्ष्वेडमदीदपन्नथ मृता ध्यानेन रौद्रेण सा ॥३००॥

एषिका सपत्नी कनकवती च यावज्जीवति, तावत्पुनः कार्मणं दुरदृष्टं विजयते, एतस्यां जीवन्त्यां सत्यामस्माकं दौर्भाग्यमेवावशिष्यते इत्यर्थः। यद्वा, कार्मणम् कर्मकराणां भृत्यानां समूहः, विजयते, अस्माकमेव सपत्न्या कार्येषु नियुक्तत्वात्तेषां कार्यकरणाभावादुत्कृष्टं वर्त्तते इत्यर्थः, तस्मिन् कार्मणे जीवति अस्माकं गुणचन्द्रपत्नीनां ध्रुवं निश्चयेन भर्तृसङ्गमसुखं नास्ति, भर्तुर्गुणचन्द्रस्य सपत्नीवशत्वादिति भावः, तेन भर्तृसङ्गमेन विना इदं वर्तमानं जीवितं रूपं सौन्दर्यमपि व्यर्थं निष्प्रयोजनमिति विचार्य ताः गुणचन्द्रस्त्रियः तस्यै सपत्न्यै कनकवत्यै क्ष्वेडं विषमदीदपन् केनचित्कृत्वा दापयन्ति स्म, अथ विषदानानन्तरं सा कनकवती रौद्रेणाशुभेन ध्यानेन कृत्वा मृता, मरणं प्रापेत्यर्थः ॥३००॥

अथ तस्याः पुनर्भवमाह-संजज्ञे इति—

संजज्ञे दुरितैश्चतुर्थनरके सा नारकी प्राक्कृतै-
रुद्वृत्याऽपि ततो भ्रमिष्यति भवेऽमुत्राऽपि दुःखाकुले।
मत्वैवं विषयानुषक्तमनसां दुःखं च सार्वत्रिकं
तत् त्वं श्रीकुरुचन्द्र ! तान् स्ववशयन् कल्याणमालां श्रय ॥३०१॥

सा कनकवती प्राक्कृतैः पूर्वं विहितैः दुरतैः पापैर्हेतुभिः चतुर्थनरके नारकी संजज्ञे जाता, ततः नरकादुद्वृत्य निर्गत्यापि अमुत्र परस्मिन्नपि दुःखाकुले भवे भ्रमिष्यति दुःखाकुलं जन्म प्राप्स्यति, श्रीकुरुचद्र ! एवमुक्तप्रकारेण विषयानुसक्तमनसां कामादिविषयबद्धचित्तानां च सार्वत्रिकं इहलोके परलोके च दुःखं मत्वा विज्ञाय त्वं तत्तस्माद्धेतोः तान् विषयान् स्ववशयन् स्वाधीनान् कुर्वाणः, न तु तद्वशं यायाः, एवञ्च कृते सति कल्याणमालां शुभपरम्परां श्रय आप्नुहि ॥३०१॥

आसीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः,
पट्टे श्रीगुणभद्रसूरिसुगुरुश्चारित्रभाजां गुरुः।
तच्छिष्येण कृतेऽत्र षोडशजिनाधीशस्य वृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽगमत् षोडशः ॥३०२॥

व्याख्यातपूर्वोऽयं श्लोको निगदसिद्ध इति न व्याख्यायते ॥

पद्ये पद्ये विशिष्टाचरणविषयकोद्बोधदानप्रगल्भे,
मूले मूलानपेतार्थविवरणपरा तीर्थकृद्भक्तिजाता।
सर्गे व्याख्या प्रपूर्णा मितिलयलसिता नेमिसूरीशशिष्या—
चार्यश्रीदर्शनात्तात्मभवनकलिता षोडशे मोददाऽस्तु ॥१॥

इति श्रीशान्तिनाथचरिते षोडशसर्गः

समाप्तः।

## अथ सप्तदशः सर्गः

अथ सर्गादौ टीकाकारमांगलिकश्लोकस्तुतिमाह

सर्वे वादा यदीयागमगतनयतस्संस्थता भिन्नमार्गा,
द्रव्यार्थः पर्यवार्थौ नयविभजनतस्संग्रहः सूक्ष्मगत्या ।
आनन्त्यं स्यान्नयानां वचनवदवरं तं जिनेशं प्रणम्य,
व्याख्यां सर्गे तु सप्तोत्तरदशममिते दर्शनस्सन्तनोति ॥१॥

तत्र सर्गादौ चरितनायकदेशनाया एव प्रस्तुतत्वात्तस्या एव स्तुतिमाह—वाणीति—

वाणी श्रीशान्तिनाथस्य भवतां भवताद् मुदे ।
चतुर्गतिमहातापशमनाऽमृतदीर्घिका ॥१॥

चतुर्गतयः देवनारकमनुष्यतिर्यग्रूपा तत्र तन्निमित्तं वा यो महातापः तस्य जन्मजरामरणादिरूपस्य शमने निवारणे अमृतदीर्घिकेव शाश्वतप्रतिपाद्यानन्दमयमुक्तिप्रदत्वेनामरत्वप्रदसुधासर इव श्रीशान्तिनाथस्य वाणी देशना वाङ् भवतां श्रोतॄणां काव्यपाठकानाञ्च मुदे हर्षाय भवतात् ॥१॥

कषायदोषमाह—कषाया इति—

कषाया ज्ञानमार्तण्डतिरोधाननवाम्बुदाः ।
चत्वारः क्रोधमानाद्या दुर्गतेः सहचारिणः ॥२॥

क्रोधमानाद्याः क्रोधमानमायालोभरूपाः चत्वारः कषायाः ज्ञानमेव प्रकाश्यप्रकाशकत्वान्मार्तण्डः सूर्यः तस्य तिरोधाने आवरणे नवाम्बुदाः नवीनजलधराः मेघा इति भावः तथा दुर्गतेः नारकादिगतेः तद्गतनारकजीवैस्सह सहचारिणः सहवासिनः तत्र गमने सहकारिणश्च । मेघो यथा सूर्यं तिरोदधाति गमनं च दुःशकं करोति, तथा कषाया अपि ज्ञानं तिरोदधति सुगतिगमनं च प्रतिबध्नन्ति । रूपकम् ॥२॥

कषायभावाभावयोर्विशेषमाह-कषायैरिति--

कषायैः सह चेद् योगस्तद् तपोनियमैरलम् ।
तैः समं यदि नो योगस्तद् तपोनियमैरलम् ॥३॥

कषायैः क्रुधादिभिः सह योगः सम्बन्धश्चेत्तर्हि तपोनियमैः व्रतेन्द्रियनिग्रहादिभिरलं कृतम्, ते न स्वफलदाने समर्था भवन्ति, कषायाणां तत्प्रतिबन्धकत्वादिति भावः, तैः कषायैः समं सह यदि नो योगस्तर्हि तपोनियमैरलं कृतम, कषायनिरोधस्वरूपतत्फलसिद्धेरिति भावः, ॥३॥

कषायदूषणाय दृष्टान्तं प्रस्तौति—अज्ञानेति—

अज्ञानापहतस्वान्तः कषायान् यो निषेवते ।
इहामुत्र स दुःखी स्यादग्निशर्मा द्विजो यथा ॥४॥

यः पुरुषः अज्ञानेन अपहृतस्वान्तः गलितविवेकः सन् कषायान् क्रोधादीन् निषेवते आश्रयति सोऽजितकषायत्वेन सकषायः पुरुषः इह अत्र लोकेऽमुत्र च दुःखी स्यात्, तत्र दृष्टान्तमाह–यथा अग्निशर्मा तदाख्यो द्विजो ब्राह्मणः कषायान्निषेव्य दुःख्यभूदित्यर्थः ॥४॥

अग्निशर्मकथामेवाह—अस्तीहेति—

अस्तीह भरतक्षेत्रे काशीदेशप्रकाशकृत् ।
शस्यौघैरभिरामश्रीग्रामः श्रीपुण्ड्रवर्धनः ॥५॥

इहास्मिन् भरतक्षेत्रे काशीदेशस्य काशीप्रान्तस्य प्रकाशकृत् ख्यापकः शस्यौघैः शस्यसम्पद्भिः अभिरामश्रीः मनोहरा श्रीश्शोभा यस्य तादृशः पुण्ड्रवर्धनः तदाख्यः ग्रामोऽस्ति ॥५॥

यज्ञेति—

यज्ञदत्ताभिधस्तत्र विप्रो यज्ञक्रियापरः ।
सोमास्याऽभिधया सोमा समजायत तत्प्रिया ॥६॥

तत्र पुण्ड्रवर्धनग्रामे यज्ञक्रियापरः यज्ञानुष्ठानतत्परः यज्ञदत्ताभिधः विप्रः ब्राह्मणः सोमास्या चन्द्रमुखी अभिधया नाम्ना सोमा, सोमानाम्नीत्यर्थः, तस्य यज्ञदत्तस्य प्रिया भार्या च समजायताभूत् ॥६॥

अग्निशर्माणं वर्णयति—

अग्निशर्मा तयोः पुत्रः कलाकौशलपेशलः ।
विद्युत्प्रभां स सत्याख्यां परिणिन्ये पितुर्गिरा ॥७॥

तयोः सोमायज्ञदत्तयोः पुत्रः कलासु कौशलेन नैपुण्येन कृत्वा पेशलः प्रसिद्धः उत्तमश्च, विद्वद्वर इति यावत्, अग्निशर्मा तदाख्यः, सोऽग्निशर्मा पितुः यज्ञदत्तस्य गिरा वाण्या, आज्ञयेत्यर्थः, विद्युतः प्रभेव प्रभा कान्तिर्यस्यास्तां तादृशीं सुन्दरीं सत्याख्यां सतीनाम्नीं कन्यां परिणिन्ये ॥७॥

अथ तस्य धेनुदोहनमाह—यज्ञदत्तेति—

यज्ञदत्तस्य तस्यास्ति धेनुश्चन्द्राऽभिधा गृहे ।
कुण्डोध्नीमग्निशर्मा तां दोग्धि प्रत्यहमेव सः ॥८॥

तस्य यज्ञदत्तस्य गृहे चन्द्राऽभिधा चन्द्रानाम्नी धेनुर्गौरस्ति, तां कुण्डोध्नीं कुण्डमिवोधो यस्यास्तां घटोध्नीम् सोऽग्निशर्मा एव प्रत्यहं दोग्धि ॥८॥

अथ तस्य धेन्वा अंह्रिप्रहारमाह—अपरेति—

अपरेद्युस्तया धेन्वा किञ्चत् पीडितया स्तने ।
स्वयमेव दुहन्नंह्रिप्रहारेण स ताडितः ॥९॥

अपरेद्युरेकदा तया चन्द्राभिधया धेन्वा स्तने किञ्चित्पीडितया सत्या सोऽग्निशर्मा स्वयमेवदु-हन् अंह्रिप्रहारेण पादाघातेन ताडितः जाताघातः कृतः ॥९॥

**अथ तस्य कोपमाह—पारीति—**

पारी पाणिस्थिता तेन भग्ना पेयूषसंभृता।
घातेन स च दूनश्च कोपं प्राप द्विजाधमः ॥१०॥

तेन पादप्रहारेण कृत्वा पेयूषेण दुग्धेन संभृता पूर्णा पाणिस्थिता करावलम्बिता पारी दुग्ध-पात्रं भग्ना स्फुटिता 'त्रुटितेति भावः, स च द्विजाधमः हीनद्विजोऽग्निशर्मा घातेन धेनुपादाघातेन दूनः पीडितश्च कोपं प्राप चुक्रोध। ताडितो हि सर्व एव कुप्यतीति भावः ॥१०॥

**अथ तस्य धेनुताडनमाह—उच्चैरिति—**

उच्चैर्लकुटमुत्पाट्य कुट्टयामास सोऽपि ताम्।
तत्प्रहारव्यथाऽऽक्रान्ता यथा सा न्यपतत् क्षितौ ॥११॥

सोऽग्निशर्माऽपि उच्चैः अत्यूर्ध्वं, यथाऽधिको घातः स्यादिति भावः लकुटं यष्टिविशेषमु-त्पाट्योत्थाप्य तां धेनुं कुट्टयामास ताडयामास, यथा येन सा धेनुः तस्य लकुटस्य प्रहारव्यथया ताडनपीडया आक्रान्ताऽभिभूता सती क्षितौ पृथिव्यां न्यपतत् पतिता, एतेन घाततीव्रता सूचिता ॥११॥

**अथ तद्वधूक्तिमाह—किमिति—**

किमेतदिति संभ्रान्ता तद्वधूरेत्य तं जगौ ?।
विना विशेषविज्ञानं पशूनां पशुतोच्यते ॥१२॥

किं कुतो हेतोरेतद्धेनुपतनमिति सम्भ्रान्ता भयचकिता तस्याग्निशर्मणो वधूः विद्युत्प्रभा सत्याख्या वा एत्य जगौ, किमित्याह—पशूनां विशेषविज्ञानं विना विशेषज्ञानाभावात् पशुतोच्यते, ज्ञानाभाव एव पशुषु पशुतेति भावः ॥१२॥

**ननु तेन किमिति चेत्तत्राह—तदिति—**

तत्सत्त्वमात्रसंप्राप्त्यै जघान त्वामियं प्रिय !।
तत्सत्त्वमात्रसंप्राप्त्यै त्वया किमियमाहता ॥१३॥

प्रिय ! इयं धेनुः तस्य ज्ञानाभावस्य सत्त्वमात्रस्य सत्तायाः सम्प्राप्त्यै संप्राप्तिनिमित्तम्, ज्ञानाभावसत्त्वहेतुनेत्यर्थः, त्वामग्निशर्माणं जघान हतवती, ज्ञानसत्त्वे नैवं कुर्यादिति भावः त्वया ज्ञानिना च तत्सत्त्वमात्रसंप्राप्त्यै ज्ञानाभावलाभार्थम्, इयं गौः किमाहता ? कुतस्ताडिता, नैवयु-क्तमित्यर्थः, तव गोस्ताडनं तवाज्ञानमेव प्रमाणयतीत्यनुचितमेतत्त्वया विदुषाऽपि समाचरितमिति भावः ॥१३॥

**अथाग्निशर्मप्रहारेण विद्युत्प्रभामृत्युमाह-इत्यादीति—**

इत्याद्यभिदधानां तां पूर्णगर्भां रुषाऽरुणः ।
स तेन लकुटेनाऽहन् सगर्भा सा यथाऽमृत ॥१४॥

इत्याद्युक्तप्रकारमभिदधानां कथयन्तीं पूर्णगर्भामासन्नप्रसवाम् अत्यशक्तां प्रहारासहिष्णुम्, तां स्वपत्नीं विद्युत्प्रभां सतीमिति यावत्, रुषा क्रोधेनारुणः, रक्तवर्णः, अतिक्रुद्ध इत्यर्थः । सोऽग्निशर्मा तेन गोवधसाधनेन लकुटेन यष्टिकया अहन् हतवान्, यथा सा सगर्भा अमृत मृता गतासुर्जाता ॥१४॥

**अथ तस्य पितृमातृवधमाह—दुरिति—**

दुःशापं ददतौ मातापितरौ तेन मारितौ ।
क्रोधान्धो यदि वा मर्त्यश्चण्डालाद् न विशिष्यते ॥१५॥

तेनाग्निशर्मणा दुःशापं दुर्वचनं ददतौ कथयन्तौ मातापितरौ मारितौ हतौ, ननु मातापितराववध्यावपि कथं मारिताविति चेत्तत्राह–यदि वा यतः क्रोधान्धः मर्त्यः जन्तुः चण्डालादतिक्रूरात्पुरुषविशेषान्न विशिष्यते भिद्यते, चाण्डाल एव जायते इति तस्य वध्यावध्यविवेको भ्रश्यति इति भावः ॥१५॥

**अथ तत्र नागरागमनमाह—श्रुत्वेति—**

श्रुत्वा दुर्वृत्तमीदृक्षं नागराः सहसाऽगमन् ।
दृष्ट्वा च तादृशं कर्म धिक्कारमुखराननाः ॥१६॥

ईदृक्षमुक्तप्रकारं दुर्वृत्तम् अग्निशर्मदुष्कृत्यं श्रुत्वा नागराः सहसा झटित्येवागमन् । तादृशमुक्तप्रकारं कर्म अग्निशर्मकृत्यं दृष्ट्वा च धिक्कारमुखराणि धिक्कारदानपराणि आननानि मुखानि येषां तादृशाः जाताः, धिगकुर्वन्नित्यर्थः ॥१६॥

**अथ तेषां धिक्कारप्रकारमेवाह-ब्रह्म इति—**

ब्रह्मस्त्रीभ्रूणगोहत्यापातकानि चकार यत् ।
अप्रेक्ष्योऽयमवाच्योऽयं सर्वथा तेन कर्मणा ॥१७॥

ब्रह्मणः स्वपितुर्द्विजस्य स्त्रियोः मातुः पत्न्याश्च भ्रूणस्य उदरान्तर्वर्तिगर्भस्य गोश्च हत्या एव पातकानि यद्यतः चकार, अतः, तेन कर्मणा हेतुना अयं अप्रेक्ष्योऽनवलोक्यः, अयमग्निशर्मा पातकी अवाच्यः अनाभाषणीयः, महापातकी हि न प्रेक्ष्यो वाच्यो वा भवतीति धर्मशास्त्रानुशासनादिति भावः ॥१७॥

**अथ पौरान् तत्कोपमाह—इत्यादीति—**

इत्याद्यन्योऽन्यमालापं पौरेषु विदधत्स्वपि ।
तथैव दण्डमुद्यम्य सोऽधावत् कोपकम्पनः ॥१८॥

इत्याद्युक्तप्रकारमन्योन्यमालापमाभाषणं विदधत्सु कुर्वत्सु पौरेष्वपि विषये तथैव पूर्ववदेव दण्डं लकुटरूपमुद्यम्योत्तोल्य कोपेन कम्पयतीत्येवंशीलः कोपकम्पनः कोपेन कम्पायमानगात्रः सोऽग्निशर्मा अधावत्प्रहर्तुं जवादगात् ॥१८॥

अथ तस्य मृत्युमाह-कारागारेति--

कारागारे परिक्षिप्तः स धृत्वा राजपूरुषैः ।
वेदना विविधास्तत्र विषह्याऽऽयुःक्षये मृतः ॥१९॥

सोऽग्निशर्मा राजपूरुषैः पत्तिभिः धृत्वा निगृह्य कारागारे परिक्षिप्तः न्यस्तः, तत्र कारागारे विविधाः वेदनाः यन्त्रणा विषह्य प्राप्यायुःक्षये मृतः ॥१९॥

अथाग्निशर्मणः पुनर्भवमाह-नरकमिति--

नरकं सप्तमं प्राप्तः स सेहे दुःसहा व्यथा ।
समाप्याऽऽयुस्ततो जज्ञे मीनः स च महाम्बुधौ ॥२०॥

सोऽग्निशर्मजीवः सप्तमनरकं प्राप्तः दुःसहाः सोढुमशक्याः व्यथाः पीडाः सेहे, आयुः सप्तमनारकीयायुः समाप्य पूरयित्वा ततः सप्तमनरकात्सोऽग्निशर्मा महाम्बुधौ मीनश्च जज्ञे जातः ॥२०॥

अथ तस्य भवान्तरमाह-विपद्येति--

विपद्य कथमप्येष निरयं प्राप पञ्चमम् ।
जातो गङ्गाह्रदे मत्स्यस्ततोऽघानि स धीवरैः ॥२१॥

कथमपि केनापि प्रकारेण विपद्य मृत्वा एषोऽग्निशर्मजीवः पञ्चमं निरयं नरकं प्राप, तदायुः पूरयित्वेतिशेषः, गङ्गाह्रदे मत्स्यो जातः, ततस्तत्र स मत्स्योऽग्निशर्मजीवः धीवरैः दाशैः अघानि हतः "कैवर्त्ते दाशधीवरा" वित्यमरः ॥२१॥

अथ ततो भवान्तरमाह-विहग इति--

विहगोऽभूत् ततोऽमारि पाशिकैः पाशसंयतः ।
सोऽकामनिर्जरायोगादेवं पातकमक्षिपत् ॥२२॥

विहगः धीवरमारितोऽग्निशर्मजीवः पक्षी अभूत्, ततस्तत्र पक्षिभवे पाशेषु बन्धनरज्जुविशेषेषु संयतो बद्धः सन् पाशिकैः व्याधैरमारि हतः, एवं भवान्तरक्रमेण सोऽग्निशर्मजीवः अकामनिर्जरायोगात् । एवमुक्तप्रकारेण पातकं पूर्वोक्तब्रह्महत्यादिपापम् अक्षिपत् ॥२२॥

अथ तस्य पुनर्द्विजभवमाह-विप्र इति--

विप्रोऽभवत् पुनः सोऽपि कुञ्जरावर्त्तपत्तने ।
वैराग्याद् विषयोद्विग्नस्ततस्तापसतां ललौ ॥२३॥

पुनः सोऽपि अग्निशर्मजीवोऽपि कुञ्जरावर्ते तदाख्ये पत्तने नगरे विप्रः ब्राह्मणः अभूत्, ततस्तत्र जन्मनि विषयैः-उद्विग्नः नितरामप्रीतः वैराग्याद्विषयेष्वनभिनिवेशाद्धेतोः तपस्वितां लली ॥२३॥

अथ तस्य व्यन्तरभवमाह-अज्ञानादिति--

अज्ञानादेष संचित्य दुस्तपानि तपांस्यपि ।
आयुःक्षये पुनर्मृत्वा बभूव व्यन्तरामरः ॥२४॥

एषोऽग्निशर्मजीवः दुस्तपानि दुःखेन तप्तुं शक्यानि, दुष्कराण्यपीत्यर्थः, तपांसि संचित्य कृत्वा, तैः पुण्यमुपार्जयित्वेत्यर्थः, पुनरायुःक्षये मृत्वा व्यन्तरामरः व्यन्तरदेवो बभूव ॥२४॥

अथ तस्य राजकुले जन्मयुग्ममाह-सोऽथेति—

सोऽथच्युत्वा महानन्दसम्पूर्णाऽखिलनागरे ।
महानन्दपुरे श्रीमत्सोमविश्वम्भरापतेः ॥२५॥

नन्दाकुक्षिभवो मानराजाख्यो नन्दनोऽजनि ।
धात्रीभिर्यो वहूक्तोऽपि कस्यचिद् नाऽनमच्छिरः ॥२६॥

अथानन्तरम्, सऽग्निशर्मजीवः च्युत्वा महानन्देन सम्पूर्णा अखिला नागरा नगरजना यस्मिन् तादृशे महानन्दपुरे तदाख्यनगरे श्रीमतः सोमस्य तदाख्यस्य विश्वम्भरापतेः महीपतेः नन्दायाः तदाख्यायाः सोमनृपपत्न्याः कुक्षिभवो गर्भजः मानराजाख्यः नन्दनः पुत्रोऽजनि जातः, यः धात्रीभिरुपमातृभिः बहूक्तः वारंवारमुपदिष्टोऽपि कस्यचित् शिरोऽनमन्न न कस्यचित्प्रणनामेत्यर्थः, अत्युद्दण्डोऽभिमानी चाभूदित्यर्थः ॥२५॥२६॥

अथ तस्य कलानभिज्ञतामाह-बाल्यादपीति—

बाल्यादपि कला काऽपि भेजे मानोद्धतं न तम् ।
संतापकारिणं सूरमिव काव्यगुणद्विपम् ॥२७॥

बाल्यादपि बाल्यमारभ्यैव, मानोद्धतमुद्दण्डाभिमानिनं तं काव्यगुणद्विषम् काव्यस्य कविकर्मणः गुणस्य विनयादेश्च द्विषमज्ञानादनाश्रयणाच्च शत्रुरूपम्, अथ च काव्यगुणान् प्रासादादीन् शास्त्रप्रसिद्धान् द्वेष्टीति तं कलुषाशयम्, मानराजम्, संतापकारिणं निजातपेन तापदायिनं काव्यगुणद्विषम् शुक्रग्रहप्रकाशमोपक्रम्, सूर्यकरेण सर्वग्रहप्रकाशाभिभवादिति भावः । सूरं सूर्यमिव संतापमौद्धत्येन दुःखं करोतीत्येवं शीलं सकलजनत्रासदायकं मानराजं काऽपि कला विद्या, अथ च षोडशांशरूपा चन्द्रकला, न भेजे शिश्राय, सूर्यं यथा चन्द्रकला नाश्रयति, तथाऽविनयिनमेनं विद्या नाशिश्रियदित्यर्थः । न विना विनयं विद्याप्राप्तिरिति भावः ॥२७॥

अथ तस्यौद्धत्यान्तरमाह-नेति—

न देवता गुरून् नाऽपि यौवनेऽपि ननाम सः ।
कुशीलताकलापेन स्तब्धेनेव विनिर्मितः ॥२८॥

स मानराजः यौवने विवेकयोग्ये तारुण्येऽपि देवताः न, गुरून्नापि ननाम, कुशीलतायाः दुःशीलतायाः कलापेन समूहेन स्तब्धेन स्तब्धतया, जडत्वेनेवेत्यर्थः, विनिर्मित इव स्थित, स मानराजः अतिदुर्विनीतः स्तब्धश्चाभूदित्यर्थः ॥२८॥

अथ मानराजपरिणयमाह-श्रीसोमेनेति—

श्रीसोमेन महीन्द्रेण तारुण्योल्लसदङ्गकः ।
समग्रगुणसम्पन्नां कन्यां स परिणायितः ॥२९॥

महीन्द्रेण नृपेण श्रीसोमेन तारुण्येनोल्लसन्ति शोभमानान्यङ्गकान्यङ्गानि यस्य स तादृशः तरुणः स मानराजः सर्वगुणसम्पन्नां गुणवतीं कन्यां परिणायितः ॥२९॥

अन्येद्युरिति—

अन्येद्युर्वासमध्यस्थं तत्प्रिया तमभाषत ।
किञ्चिदाख्याहि विज्ञानं कान्त ? प्रश्नोत्तरादिकम् ॥३०॥

अन्येद्युरेकदा तस्य मानराजस्य प्रिया वासमध्यस्थं शयनगृहस्थं तम् मानराजमभाषत, किमित्याह—कान्त ? प्रिय ! विज्ञानं विशिष्टज्ञानजनकं किञ्चित् यथेष्टम् प्रश्नोत्तरादिकम् आख्याहि कथय, ज्ञानवर्धनम् किञ्चिद्वार्ता प्रश्नोत्तरद्वारेण परस्परमालापं वा कुर्वित्यर्थः ॥३० ॥

अथ मानराजकृतदुस्तर्कमाह-दुरिति—

दुर्विदग्धा दधात्येषाऽखर्वं गर्वं स्वरूपतः ।
दुष्टा ममोपहासाय यदेवं परिपृच्छति ॥३१॥

दुर्विदग्धा अल्पज्ञानेनापि स्वं ज्ञानवती मन्यमाना एषा मम पत्नी स्वरूपतः लक्षणतोऽखर्वं महान्तं गर्वमभिमानं दधाति, यथतः दुष्टा दुराशया मम कलाविहीनस्योपहासाय त्वं मूर्खोऽसि इत्येवमुपहसनाय एवमुक्तप्रकारेण परिपृच्छति, अहं मूर्खोऽस्मीत्येवमियं ज्ञात्वाऽपि विज्ञानवार्ता पृच्छतीति ममोपहासं विहाय किमन्यदस्य प्रयोजनमिति भावः ॥३१॥

अथ तस्य तां प्रति निर्वेदमाह-किमिति—

किं तया क्रियते वध्वा या मानं मानयत्यलम् ?
मा भूद् रसवती साऽपि या लावण्यमयी किल ॥३२॥

तया वध्वा पत्न्या किं क्रियते ? न किमपि प्रयोजनमित्यर्थः । कयेत्याह—या वधूः अलमत्यर्थं मानं गर्वं मानयति दधाति, तत्र दृष्टान्तमाह—सा रसवती ओदनादिपाकोऽपि मा

भूत् उपेक्षणीयेत्यर्थः । या रसवती लावण्यमयी लवणस्य भावः लावण्यं तन्मयी तत्प्रचुरा लवणाकरा, किलेत्यप्रिये ? इष्टाधिकलवणवती रसवतीव मानवती वधूरपि उपेक्षणीयेत्युपमा ॥३२॥

अथ मानराजकृततदवज्ञामाह-विचीति—

विचिन्त्येदमवज्ञाय तेन विज्ञाऽपि सोज्झिता ।
स दृष्ट्याऽपीक्षते नैतां संलापस्य कथैव का ? ॥३३॥

इदमुक्तं विचिन्त्य तेन मानराजेन विज्ञा चतुराऽपि सा स्ववधूरवज्ञाय अवहेलामास्थायोज्झिता त्यक्ता, तत्प्रकारमेवाह—स मानराजः दृष्ट्या एतां वधूमीक्षतेऽवलोकतेऽपि न, तर्हि संलापस्य भाषणस्य कथा चर्चैव का ? न कापीत्यर्थः, यत्र दर्शनस्याप्यभावः, तत्र वचनाभावः सुतराम् ॥३३॥

अथ तस्यास्तदनुनयनमाह-रुष्टइति—

रुष्टोऽयमिति विज्ञाय वाणिन्या स तयाऽन्यदा ।
अभाणि प्रिय ! नो कश्चिद् मन्तुस्त्वयि मया कृतः ॥३४॥

अयं प्रियो मानराजः रुष्टोऽप्रीत इति विज्ञायानुमाय अन्यदैकदा वाणिन्याभाषमाणया तया वध्वा स मानराजोऽभाणि, किमित्याह प्रिये । त्वयि विषये मया त्वत्पत्न्या कश्चिद् मन्तुरपराध न कृतः ॥३४॥

त्वदप्रीतताऽस्थाने इत्याह-तदिति--

तदीश ! मयि दास्यां किमप्रसादस्तवेदृशः ? ।
प्रसन्ने भर्त्तरि स्त्रीणां सप्रसादं हि मानसम् ॥३५॥

ईश ? स्वामिन् । तत्तः अनपराधाद्धेतोः मयि दास्यां त्वत्सेवापरतया दासीकल्पायां तव मानराजस्य ईदृशः ईक्षणभाषणाद्यभावरूपः अप्रसादोऽप्रीतता किम् ? नैतदुचितमित्यर्थः । त्वयि अप्रसन्ने ममापि खेद इत्याह—हि यतः भर्तरि पत्यौ प्रसन्ने स्त्रीणां मानसं सप्रसादं प्रसन्नं भवतीति शेषः ॥३५॥

अथ तस्याः प्रणिपातमाह-एवमिति—

एवं सानुनयं प्रोक्तोऽप्येष तां न यदाऽवदत् ।
तया तदा पदाब्जान्तः शिरोधृत्वा स मानितः ॥३६॥

एवमुक्तप्रकारेण सानुनयं सप्रार्थनं प्रोक्तः भाषितोऽपि एष मानराजः यदा तां स्वपत्नीं नावदत्, तदा तया मानराजवध्वा स मानराजः पादाब्जयोः चरणकमलयोरन्तः समीपे शिरोधृत्वा मानितः पादयोः प्रणिपत्य प्रसादितः ॥३६॥

अथ तस्य तन्निष्कासनमाह-पाण्डित्य—

पाण्डित्यदर्पसंपूर्णे ! पापे ! मद्दृक्पथं त्यज ।
इत्याद्युक्त्वा विरुद्धं स सौधात् तां निरकासयत् ॥३७॥

पाण्डित्यस्य दर्पणाभिमानेन सम्पूर्णे ! समस्ते ! पूर्णे ! पापे ! मम मानराजस्य दृक्पथं त्यज, मद्दृष्टयग्रतो दूरं याहीत्यर्थः । इत्यादि विरुद्धमनुचितमुक्त्वा स मानराजः सौधात् स्वगृहात्तां स्वपत्नीं निरकासयत् बहिष्करोत् ॥३७॥

अथ तस्या वापीगमनमाह-सैवमिति—

सैवं तेन पराभूता भूतार्त्तेनैव केवलम् ।
सौधाद् बहिः स्थितां वापीं संप्राप्यैवमवोचत ॥३८॥

सा मानराजपत्नी भूतेन प्रेतेनार्त्तेणाक्रान्तेनेव दुर्बुद्धिना एवमुक्तप्रकारेण केवलमतिमात्रं पराभूताऽवगामिता सती सौधात्स्वगृहाद्बहिः स्थितां वापीं दीर्घिकां सम्प्राप्य एवं वक्ष्यमाणप्रकारेणावोचत ॥३८॥

अथ तदुक्तिमाह-देवा इति—

देवा देव्यश्च शृण्वन्तु समेतां गिरमुच्चकैः ।
नाऽपराधं विजानामि येन रुष्टः स मे प्रियः ॥३९॥

देवा ! देव्यश्च मम मानराजपत्न्या एतां वक्ष्माणां गिरं शृण्वन्तु, का सा गीरित्याह-येनापराधेन स मे प्रियः मानराजः रुष्टोऽप्रीतो जात, तमपराधमहं न विजानामि ॥३९॥

ननु ततः किमित्याह-अर्धेति—

अर्धचन्द्रप्रदानेन तेन निष्कासिता गृहात् ।
न क्षमे जीवतं धर्तुं विना तेन ततो म्रिये ॥४०॥

तेन मानराजेन अर्धचन्द्रप्रदानेन गलहस्तिकया कृत्वा गृहान्निष्कासिता बहिष्कृता सती तेन प्रियेण मानराजेन विना जीवितं धर्तुं जीवितुं न क्षमा समर्था अस्मीति शेषः, ततो जीवनधारणासमर्थतया म्रिये वापीपातेन त्यजामीति ॥४०॥

अथ तस्या वाप्यां झम्पापातमाह-अमुत्रेति—

अमुत्राऽपि भवे भूयाद् भर्ताऽयं वः प्रसादतः ।
इत्युदीर्य जले झम्पां साऽदाद्मृत च क्षणात् ॥४१॥

अमुत्र परलोकेऽपि भवे जन्मनि वः देवदेवीनां प्रसादेन, अयं मानराजः भर्ता पतिर्भूयादित्याशासे, इतीत्थमुदीर्योक्त्वा सा मानराजपत्नी जले वापीजले झम्पामादात् झम्पापातमकरोत्, क्षणादमृत गतासुरभवच्च ॥४१॥

अथ मानराजस्य तदवलोकनमाह-तस्या इति--

तस्या अनु समायातः पादपान्तरितोऽखिलम् ।
निशम्य तां न मानात् सोऽरक्षत् तस्मादपायतः ॥४२॥

तस्याः स्वपत्न्या अनु पृष्ठतः समायातः स मानराजः पादपोन्तरितः वृक्षान्तर्हितः अखिलं सर्वं वृत्तं निशम्यापि मानादभिमानाद्धेतोः तां स्वपत्नीं तस्मादुक्तप्रकाराद् अपायतः अनिष्टतः वापीपातरूपाद् नारक्षन्निवारितवान् ॥४२॥

अथ नृपसभावृत्तमाह-आस्थानमिति--

अस्थानमास्थितेऽन्येद्युः क्ष्मापे वार्ताप्रसङ्गतः ।
अवादि सिंहसामन्तेनेदृशं वचनं स्वयम् ॥४३॥

अन्येद्युरेकदा क्ष्मापे नृपे सोमाख्ये आस्थानं सभामण्डपमास्थिते स्थिते सति वार्ता-प्रसङ्गतः कथाप्रसङ्गतः सिंहेन तदाख्येन सामन्तेन स्वयमप्रेरणात एवेदृशं वक्ष्यमाणं वचनम् अवादि उक्तम् ॥४३॥

किन्तद्वचनमित्याह-राजान इति--

राजानः सन्ति राजेन्द्र बहवोऽपि महत्तमाः ।
तथाऽपि वप्रराजस्य केऽपि लोकोत्तरा गुणाः ॥४४॥

राजेन्द्र ! बहवोऽपि महात्तमा महान्तो राजानः सन्ति, ननु ततः किमित्याह—तथाऽपि वप्रराजस्य तदाख्यनृपस्य केऽप्यनिर्वचनीया लोकोत्तराः अलौकिका गुणाः सन्तीति शेषः, ये गुणा अन्यत्र नोपलभ्यन्ते इति भावः ॥४०॥

अथ तच्छ्रुत्वा मानराजक्रोधमाह-राजेति—

राजसिंहासनासन्नः स मानी राजनन्दनः ।
क्रुद्धो जगौ ममाग्रे रे ! किं वर्णयसि तं शठ ! ॥४५॥

राजसिंहासनस्य नृपासनस्य आसन्नः नृपपुत्रत्वात् समीपस्थः स मानी राजनन्दनः राजपुत्रः मानराजः क्रुद्धः सन् जगौ, किमित्याह—रे शठ ? अविचारिन् ? ममाग्रे तं वप्रराजं किं वर्ण-यसि महत्तमस्य सर्वगुणयुक्तस्य मम मानराजस्याग्रे सर्ववस्तुतुच्छ एवेति तद्वर्णनं ममापमान इति ॥४५॥

अथ सिंह प्रत्युत्तरमाह-प्राञ्जल इति—

प्राञ्जलः प्राञ्जलीभूय सोऽजल्पत् किं प्रकुप्यसि ? ।
देव ! नो मत्सरो युक्तः सतां साधुप्रशंसने ॥४६॥

प्राञ्जलः ऋजुः स सिंहसामन्तः प्राञ्जलीभूयाञ्जली बध्वाऽजल्पत् किमित्याह—किं कुप्यसि !

क्रोधोऽनुचित इत्यर्थः तत्र हेतुमाह—देव ! सतां साधुप्रशंसने सज्जनप्रशंसायाम् कृतायां तस्यान मत्सरो द्वेषो न युक्तः ॥४६॥

अथान्यमन्त्रिकृतोत्तरमाह-आक्रोशन्तमिति—

आक्रोशन्तं पुनर्मन्त्री सुबुद्धिस्तमथाऽभ्यधात् ।
निरूपिते स्वरूपे किं कुमार ! कुपितोऽभवः ॥४७॥

अथ मृदु उत्तरितेऽपि पुनर्भूयोऽपि आक्रोशन्तमनिष्टं भाषमाणं तं मानराजं सुबुद्धिः तदाख्य. मन्त्री अन्यथाऽजगौ किमित्याह—कुमार ! स्वरूपे निरूपिते सज्जनस्वभावे प्रशंसिते किं कुतो हेतोः कुपितः अभवः नैतद्युक्तमित्यर्थः ॥४७॥

अथ मानराजस्य क्रोधाधिक्यमाह-तस्येति—

तस्योदितमिदं श्रुत्वा भूयः स कुपितो भृशम् ।
मण्डलाग्रं समाकृष्य मन्त्रिणं हन्तुमुत्थितः ॥४८॥

तस्य सुबुद्धिमन्त्रिणं इदमुक्तप्रकारमुदितं कथितं श्रुत्वा स मानराजः भूयः पुनरपि भृशम-त्यर्थं कुपितः सन् मण्डलाग्रमसिं समाकृष्य कोशादुद्धृत्य मन्त्रिणं हन्तुम् उत्थितः आसनादुद-तिष्ठत् ॥४८॥

अथ नृपस्य तयोर्मध्येऽभिनिवेशमाह-क्रोधेति—

क्रोधदग्धविवेकोऽयममात्यं मा निहन्त्विति ।
अविक्षदन्तरे राजा तन्निषेधनिबद्धधीः ॥४९॥

क्रोधेन कृत्वा दग्धः भ्रष्टः विवेकः सारासारविचारो यस्य स तादृशः अयं मानराज. अमात्यं मा निहन्तु इति हेतोः तस्य मानराजस्य निषेधे मन्त्रिहननव्यापारान्निवारणे निबद्धा सोढमा धीर्बुद्धिर्यस्य स तादृशः मानराजनिवारणबुद्ध्येत्यर्थः । राजा सोमनृपः अन्तरे मानराज-मन्त्रिणोर्मध्ये अविक्षदस्थात् ॥४९॥

अथ मानराजकृतनृपवधमाह-क्रूरस्येति—

क्रूरस्य क्रूरकर्माऽयं पक्षं कक्षीकरोति यत् ।
तेन राड् मे निहन्तव्य इति ध्यात्वा स तं न्यहन् ॥५०॥

अयं क्रूरकर्मा स्वामीहितत्वादनिष्टक्रियोऽयं नृप यद्यतो हेतो क्रूरस्य ममाप्रियवक्तु मन्त्रिणः पक्षं कक्षीकरोति समर्थयति. तेन हेतुना मे मम राड् नृपः निहन्तव्यो वध्य इत्येवं ध्यात्वा विचार्य स मानराजः न सोमनृपं न्यहन् हतवान् ॥५०॥

अथ मानराजस्य मण्डलेश्वराधिकृतबन्धनमाह-तदिति—

तदालोक्य धिक्कारं कुर्वाणान् मण्डलेश्वरान् ।
हन्तुं धावन्नयं बद्धः खड्गमाच्छिद्य तैर्बलात् ॥५१॥

तन्नृपहननस्यालोकेनावलोकनेन कृत्वा धिक्कारं कुर्वाणान् निन्दयतः मण्डलेश्वरान् तत्समीपस्थनृपतीन् प्रतिहन्तुं धावन्नयं मानराजः तैः मण्डलेश्वरैः बलाद्बलपूर्वकं खड्गमाच्छिद्य गृहीत्वा बद्धः निगृहीतः ॥५१॥

**अथ मानराजस्य मरणमाह-रदैरिति—**

**रदैः स रसनां छित्वा मानी निधनितां गतः ।**
**नारको नरके षष्ठे समभूद् भूरिदुःखभृत् ॥५२॥**

मानी आत्माभिमानी स मानराजः रदैः स्वदन्तैः कृत्वा रसनां जिह्वां छित्वा निधनितां मरणं गतः मृत इत्यर्थः । तथा, षष्ठे नरके भूरिदुःखभृत् नारकः समभूत् अजायत ॥५२॥

**अथ तस्य पुनर्भवमाह-उदिति—**

**उद्वृत्तः स ततो जज्ञेऽञ्जनशैले महाकिरिः ।**
**अञ्जनाद्रेरिवाऽऽसङ्गात् श्यामश्यामवपुर्द्युतिः ॥५३॥**

स मानराजजीवस्ततः षष्ठनरकादुद्वृत्तः आयुः प्रपूर्य निर्गतः सन् अञ्जने तदाख्ये शैले पर्वते अञ्जनाद्रेः आसङ्गात् सम्पर्कादिव श्यामश्यामा अतिश्यामा वपुषो द्युतिः कान्तिर्यस्य स तादृशः अतिकालाकृतिः महाकिरिः महाशूकरः जज्ञे जातः ॥५३॥

**अथ तस्य जीवनचर्यामाह-क्रोडीभिरिति—**

**क्रोडीभिः स च चिक्रीड तारुण्ये काननेऽभितः ।**
**मुस्तास्तम्बकदम्बानां खण्डैराहारमाचरन् ॥५४॥**

स मानराजजीवः शूकरः तारुण्ये युवत्वप्राप्तौ सत्याम् कानने वनेऽभितः सर्वतः क्रोडीभिः शूकरीभिः सह मुस्तानां नागरमुस्तानां मोथ इतिख्यातीनामिति यावत्, स्तम्बानां गुच्छानां कदम्बानामोघानाम् खण्डैः छेदैः आहारमाचरन् आहारवृत्तिं पूरयन् चिक्रीड रेमे ५४॥

**अथ तत्र नृपागमनमाह-नृसिंहेति—**

**नृसिंहविक्रमः सिंहध्वजो नाम महीपतिः ।**
**तमद्रिमाप पापर्द्ध्यै पापव्यसनलालसः ॥५५॥**

नृसिंह इव विक्रमो यस्य स तादृशः महापराक्रमी सिंहध्वजो नाममहीपतिः पापस्य व्यसने प्रसङ्गादाखेटाचरणे लालसः उत्कटेच्छः सन् पापर्द्ध्यै मृगयायै "पापर्द्धिमृगयाऽऽखेटः" इति हैमः जीवहिंसार्थमित्यर्थः । तमञ्जनाख्यमद्रिं पर्वतमाप प्राप, आखेटार्थं तत्रायथावित्यर्थः ॥५५॥

**अथ तत्सम्मुखं शूकरागमनमाह-चलित इति—**

**चलितः संमुखं तस्याऽभिमानेन स पोत्र्यपि ।**
**महाशूराणाऽवन्यां बन्दिनेव विवर्णितः ॥५६॥**

तस्य सिंहध्वजस्य सम्मुखम् अभिमानेन स्वबलाभिमानेन स पोत्री शूकरोऽपि रणावन्यां रणभूमौ बन्दिना स्तुतिपाठकेन विवर्णित. स्तुत' महाशूर इव चलित' प्रस्थितः ॥५६॥

अथ तस्य मरणाद्याह-एकेनेति—

एकेन शल्यघातेन तेन व्यापादितोऽथ सः।
मृत्वा तत्रैव संजज्ञे हस्ती शैल इवापरः ॥५७॥

अथ सन्मुखागमनानन्तरम्। स शूकरः तेन सिंहध्वजेन एकेन शल्यस्य बाणाग्रस्य घातेन प्रहारेण कृत्वा व्यापादितः मारितः मृत्वा च, तत्र अञ्जनाख्ये एव शैले पर्वते अपरः शैल इव महाशयः हस्ती संजज्ञे जातः ॥५७॥

अथ तस्य जीवनवृत्तिमाह-करिणीभिरिति—

करिणीभिः समं स्वैरं रममाणः स यौवने।
समयं गमयन् प्राप दशां षष्ठीमयं द्विपः ॥५८॥

सोऽयं द्विपः हस्ती यौवने करिणीभिः हस्तिनीभिः समं स्वैरं यथेच्छं रममाणः समयं गमयन् कालयापनं कुर्वन् षष्ठीं दशां प्राप वार्द्धक्यं प्रापेत्यर्थः ॥५८॥

अथ तस्य पल्वलप्रवेशमाह-एषेति—

एषग्रीष्मेऽन्यदा भीष्मे वर्धमानमहातपे।
तृषाशुष्यद्गलोऽविक्षत् पल्वले जलधीतये ॥५९॥

अन्यदैकदा एष हस्ती वर्धमानः महान् आतपः खरकरः यस्मिन् तस्मिन् वर्धमानमहातपे आतपातिशायिनि, अत एव भीष्मे असह्यत्वाद्दुःसहे ग्रीष्मे तदाख्यर्तौ तृषया पिपासया शुष्यन् गलो यस्य स तादृशः पिपासाशुष्ककण्ठः सन् जलधीतये पयःपानाय पल्वले अल्पसरसि "वेशन्तः पल्वलं चाल्पसरः" इत्यमरः। अविक्षत् प्रविष्टवान् ॥५९॥

अथ तत्र तस्य मृत्युमाह-मग्न इति—

मग्नो जम्बालजालान्तर्जले निर्गन्तुमक्षमः।
पञ्चतां सप्तभिर्घस्रैः प्राप मध्यस्थभावतः ॥६०॥

जले पल्वलजले जम्बालजालान्त' पङ्कसमूहान्त', "निषद्वरस्तु जम्बाल. पङ्कोऽस्त्री शाद-कर्दमा" वित्यमरः। मग्नः निमग्नः स हस्ती निर्गन्तुं पङ्कादुपरिगन्तुमक्षमोऽसमर्थः सन् सप्तभिः घस्रैः दिवसैः कृत्वा मध्यस्थभावतः माध्यस्थ्यमनुभवन् पञ्चतां प्राप ममार, एतेन तस्य मृत्युकाले शुभध्यानसम्पत्तिरुक्ता ॥६०॥

अथ तस्य पुनर्भवं युग्मेनाह विपद्येति—

विपद्य भरतक्षेत्रे शालिग्रामे मनोरमे ।
नन्दनश्रेष्ठिनो भार्या सुनन्दाकुक्षिसम्भवः ॥६१॥

नन्दनः समभूद् नाम्ना मायादेव इति श्रुतः ।
मायैव दूषणं तस्य क्षारता जलधेरिव ॥६२॥

विपद्य मृत्वा भरतक्षेत्रे मनोरमे शालिग्रामे तदाख्यग्रामे नन्दनस्य तदाख्यस्य श्रेष्ठिनः भार्यायाः सुनन्दनायाः तदाख्यायाः कुक्षिसंभवः गर्भजन्मा नन्दनः पुत्रः नाम्ना मायादेव इतीत्थं श्रुतः ख्यातः समभूद् जातः, तस्य मायादेवस्य माया कपटमेव जलधेः क्षारता इव दूषणम्, अभूदिति शेषः ॥६१॥६२॥

अथ तस्य परिणयमाह-वणिगिति—

वणिग्देवप्रसादस्य भार्यादेवमतीसुताम् ।
यौवने नन्दिनीं नाम स पित्रा परिणायितः ॥६३॥

वणिजः देवप्रसादस्य तदाख्यस्य भार्यायाः देवमत्याः तदाख्यायाः सुताम् नन्दिनीम् नाम नाम्ना नन्दिनीं स मायादेवः यौवने पित्रा नन्दनेन परिणायितः परिणयं प्रापितः ॥६३॥

अथ तस्य लोकवञ्चनमाह-पितरिति—

पितर्युपरते हट्टे निषीदन्नेष नित्यशः ।
समग्रं वञ्चयामास लोकं बालाऽबलादिकम् ॥६४॥

पितरि नन्दने उपरते मृते सति एष मायादेवः हट्टे पण्यवीथिकायां निषीदन् विक्रयार्थमुपविशन् नित्यशो नित्यमेव बालाबलादिकम् बालकयोषिकादिकम्, क्रयकर्मानभिज्ञमित्यर्थः समग्रं सर्वं लोकं वञ्चयामास कूटविक्रयतोलनादिना प्रतारयति स्म ॥६४॥

अथ तस्य मित्रवृत्तान्तमाह-सरल इति—

सरलः सोमदेवोऽस्य वयस्यः समभूद् वणिक् ।
अन्यदा मायिना तेन रहस्येवमवादि सः ॥६५॥

अस्य मायादेवस्य सरलः ऋजुमतिः वणिक् सोमदेवः तदाख्यः, वयस्यः सुहृत्समभूत्, अन्यदा एकदा तेन मायिना कपटिना तेन मायादेवेन स सोमदेवः एवं वक्ष्यमाणप्रकारं रहसि एकान्ते अवादि उक्तः ॥६५॥

तदुक्तिमेवाह-आकस्मिकीति—

आकस्मिकी विपद् मित्र? प्राणिनामुपजायते ।
योगक्षेमाय तत् क्वाऽपि द्रव्यं किञ्चिद् निधीयते ॥६६॥

मित्र ! प्राणिनाम् आकस्मिकी निष्कारणमतर्कितमेव विपत् उपजायते समापतति, तत्तस्माद्धेतोः योगक्षेमाय अलब्धलाभाय लब्धरक्षणाय च कापि गुप्तस्थाने किञ्चद् द्रव्यं निधीयते न्यासरूपेण स्थाप्यते, "आपदर्थे धनं रक्षेदि" त्युक्तेरिति भावः ॥६६॥

तदेवाह-आपदर्थे-इति

आपदर्थे धनं रक्षेदिति नीतावपि स्मृतम् ।
सत्यं विधीयते येन, महान्तः शास्त्रवर्त्मगाः ॥६७॥

आपदर्थे आपदि प्रयोजनाय धनं रक्षेत्स्थापयेदितीत्थं नीतौ अपि स्मृतम्, तत्सत्यम् तथाचरणेन सत्यं विधीयते क्रियते, येन यतः महान्तः बुद्धिमन्तः शास्त्रवर्त्मगाः शास्त्रोक्तमार्गानुसारिणः भवन्तीति शेषः नीत्यनुसरणं महत्त्वमिति भावः ॥६७॥

अथ तयोर्धनन्यासमाह-युक्तमिति—

युक्तमित्युदिते तेन ग्रामपर्यन्तमेत्य तौ ।
समन्ततः समालोक्य न्यधत्तां स्वयं निजं निजम् ॥६८॥

तेन सोमदेवेन युक्तमेव मेतदित्युक्ते कथिते सति तौ मायादेवसोमदेवौ ग्रामपर्यन्तं ग्रामसीमानमेत्य गत्वा समन्ततः सर्वदिक्षु समालोक्य दृष्ट्वा, यथाऽन्यो न पश्येदिति भावः निजं निजं स्वं धनम् "स्वो ज्ञातावात्मनि धने स्वमि" त्यमरः। न्यधत्तां निखनतः स्म. पृथिव्यां निखातवन्तावित्यर्थः ॥६८॥

अथ मायादेवस्य तन्निधानद्वयानयनमाह-प्रच्छन्नमिति—

प्रच्छन्नमन्यदैकाकी गत्वा नन्दनभूर्निशि ।
निधिद्वयं तदुत्खन्य स्वयं स्वगृहमानयत् ॥६९॥

अन्यदैकदा नन्दनभूः मायादेवः स्वयमात्मनैव प्रच्छन्नं गुप्तं यथा स्यात्तथा एकाकी एक एव अन्यथा तु रहस्यभङ्गभयमिति भावः निशि रजन्यां गत्वा, निधानभूमाविति शेषः तत्पुरानिखातं निधिद्वयम् स्वस्य सोमदेवस्य च निधानद्वयमुत्खन्य भूमेरुद्धृत्य स्वगृहमानयत् ॥६९॥

अथ मायादेवजिज्ञासां युग्मेनाह-कियत्यपीति—

कियत्यपि गते काले सोमस्तेनाऽभ्यधाय्यथ ।
तद् वित्तं नौ तथैवाऽस्ति किं वाऽऽत्तं केनचित् सखे? ॥७०॥
इत्युपेत्य महाभाग ! तद् भाग्येन निरीक्ष्यते।
पुण्यार्थयोर्महान्तौ हि भेदं किञ्चित् प्रचक्षते ॥७१॥

अथानन्तरम् कियत्यपि कतिमात्रे काले गते व्यतीते सति सोमः सोमदेवः तेन मायादेवेन अभ्यधायि कथितः किमित्याह- सखे ! तत्पुरा न्यासीकृतं नौ आवयोः वित्तं धनम् किमिति प्रश्ने, तथैव यथा निखातमेवास्ति, वा अथवा केनचिदात्तं गृहीतम् ? इत्युक्तप्रकारकसंशयाद्धेतोः

उपेत्य गत्वा, महाभाग ! मित्र ! भाग्येन दैवानुकूल्यतः तद्धनं निरीक्ष्यते, विलोकनीयमित्यर्थः भाग्यं स्याच्चेदेव मिलेदन्यथा त्वपहृतमेव स्यात्केनचिदिति भावः ननु भाग्यमस्ति, ततोऽर्थोऽपि स्यादेव इति तयोक्तो वितर्कोऽस्थाने इतिचेत्तत्राह–हि यतः महान्तः धीमन्तपुण्यार्थयोः भाग्यवित्तयोः किञ्चिद्भेदं प्रचक्षते, साध्यसाधनभावादिति भावः एवञ्च न भाग्यसत्त्वे धनसत्त्वमावश्यकमिति तद्द्रष्टव्यमिति भावः ॥७०।७१॥

अथ तयोस्तत्र गमनमाह–प्रतिपद्येति

प्रतिपद्य वचस्तस्य सोमः सोममुखद्युतिः ।
समं तेनैव तत्रैव गतवान् गतकैतवः ॥७२॥

सोममुखद्युतिः सोमः चन्द्रः स इव मुखद्युतिः मुखकान्तिर्यस्य स तादृशः सोमः सोमदेवः तस्य मायादेवस्य वचः प्रतिपद्य स्वीकृत्य गतकैतवः निश्छलः सन् तेन मायादेवेन समं सहैव तत्र निधानदेशे गतवान् ॥७२॥

अथ मायादेवस्य मायामाह–रिक्तमिति–

रिक्तं तत् स्थानमालोक्य मायादेवो विषादवान् ।
लुठति स्म महीपीठे मुमूर्षुरिव सत्वरम् ॥७३॥

तन्निधानभूमिरूपं स्थानं रिक्तं निधानशून्यमालोक्य विषादवान् दुःखितः मायादेवः सत्वरं मुमूर्षुरिव महीपीठे लुठति स्म अन्येन धनमपहृतमिति स्वस्य सातिशयदुःखाभिनयं कुर्वन् मुमूर्षुरिव महामालोटनेनाभावादित्यर्थः ॥७३॥

अथ तस्य विषादाभिनयान्तरमाह–मूर्च्छामिति–

मूर्च्छामतुच्छामानर्च्छ सन्निपातिकवत् किल ।
हा धात्रा वञ्चितोऽस्मीति ताड्यमान इवाऽऽरटत् ॥७४॥

किलेत्यलीके एतत्सर्वं मूर्च्छादि तस्य कपटकृतमेवे-ति भावः सन्निपातिकवत् सन्निपातरोगग्रस्तवदतुच्छां सातिशयां मूर्च्छां मोहमानर्च्छ प्राप हा इति खेदातिशये धात्रा भाग्येन वञ्चितः छलितोऽस्मीति वदन् ताड्यमानः राजपुरुषादिभिः दण्डादिभिः कृत्वा निहन्यमान इवारटत् आक्रन्दनं चकार ॥७४॥

अथ तस्य वक्षस्ताडनमाह–वक्ष इति–

वक्षोऽपि ताडयामास मृतापत्य इवाऽधिकम् ।
मनाक् संप्राप्तचैतन्यो विललाप स बालिशः ॥७५॥

मृतमपत्यं यस्य स इव वक्ष उरोऽपि अधिकं सातिशयं यथा स्यात्तथा ताडयामास निजघान, इष्टे मृते जना वक्षस्ताडयन्तीति लोकव्यवहार इति भाव. तथा; स बालिशो मूर्खः मनाक् संप्राप्तचैतन्यः स्वस्थः सन् विललाप ॥७५॥

तद्विलापमेवाह-हा देवेति -

हा देव मयका किं तेऽपराद्धं पूर्वजन्मनि ।
यद् मया निहितं द्रव्यमन्येन ग्राहितं त्वया ॥७६॥

हा देव ! पूर्वजन्मनि ते तव मया किमपराद्धमयुक्तमाचरितम् ! यद्येन हेतुना त्वया दैवेन कर्त्रा मया मायादेवेन निहितं न्यासीकृतं द्रव्यं धनमन्येन ग्राहितम्, हारितम्, अज्ञातापराधस्य दण्डो नोचित इति भावः ॥७६॥

अथ स्वदोषमेवाह-मुक्त्वेति

मुक्त्वा सद्म बहिर्न्यासि योगक्षेमाय यद् मया ।
दैवेनाऽपहृतं तद् मे पूत्कुर्वे कस्य वा पुरः ? ॥७७॥

मया मायादेवेन योगक्षेमाय यद्यतः सद्म मुक्त्वा गृहं त्यक्त्वा बहिः अरक्षितप्रदेशे न्यासि धनं निखातम् तत्तत एव हेतोः मे मम द्रव्यमिति शेषः, दैवेन हेतुभूतेन अपहृतम्, वा ततः, कस्य पुरोऽग्रे पूत्कुर्वे रक्षणार्थमाह्वये, न कस्यापीत्यर्थः, गृहं त्यक्त्वा बहिर्निखनने स्वस्यैव दोषः इति नान्यो वचनीय इति भावः ॥७७॥

अथ तस्य गृहागमनमाह-इत्यादीति—

इत्यादि रचयन्नेष विलापं छद्मतः कुधीः ।
संबोध्य सोमदेवेन संबोध्य गृहमापितः ॥७८॥

कुधीः दुष्टधीः एष मायादेव; छद्मतः कपटतः इत्यादि उक्तप्रकारं विलापं परिदेवनं रचयन् कुर्वन् सोमदेवेन संबोध्य सबोधनपूर्वकं संबोध्य बोधयित्वा गृहमापितः नीतः ॥७८॥

अथ तस्य गर्दभभवमाह-जन्मेति--

जन्माऽऽरभ्य स विश्वेषां वञ्चकः स्वस्य वञ्चकः ।
विपद्य स्कन्दरजकनिलये खर्यजायत ॥७९॥

स वञ्चकः दम्भी मायादेवः जन्मारभ्य जन्मत एवारभ्य विश्वेषां सर्वेषां स्वस्य धनस्य वञ्चकः छलद्वारापहारकः विपद्य मृत्वा स्कन्दस्य तदाख्यस्य रजकस्य वस्त्रधावकस्य निलये गृहे खरी भूत्वा अजायत जन्म लेभे ॥७९॥

अथ तस्य शुनीभवमाह-आयुरिति—

आयुः संक्षिप्य तत्राऽपि भारोद्वहनकर्मणा ।
सा शुनी समभूद् मातुः स्तन्यं लेभे च किञ्चन ॥८०॥

तत्र गर्दभभवेऽपि भारोद्वहनकर्मणा। आयुः संक्षिप्य समाप्य सा गर्दभी मायादेवजीवः शुनी सरमा "सरमा शुनी" इति हैमः समभूत् जाता किञ्चन मातुः स्तन्यं स्तनोद्भवदुग्धं च लेभे ॥८०॥

अथ तस्य शृगाली भवमाह-हडक्केति—

हडक्कमरुता मृत्वा शृगाली साऽभवत् ततः ।
पुना रत्नप्रभेळायां नारकः स्वायुपः क्षये ॥८१॥

सा शुनी हडक्कमरुता लोके हड़कवा इति ख्यातेन रोगेण मृत्वा शृगाली अभवत ततः पुनः शृगाली भवान्तरम् स्वायुपः क्षये रत्नप्रभेळायां रत्नप्रभाख्यनरके नारकः, जात इति शेषः ॥८१॥

अथ तस्य पुनर्वणिग्भवमाह-तस्मादिति—

तस्मादुद्वृत्य संजज्ञे नगरे गिरिवर्धने ।
वामात्राख्यवणिग्भार्याऽनुद्धरी तनयोऽथ सः ॥८२॥

तस्मान्नरकादुद्वृत्य निर्गत्य अथानन्तरम् स मायादेवजीवः गिरिवर्धने नगरे वामात्राख्यस्य वणिजः भार्यायाः अनुद्धर्याः तदाख्यायाः तनयः संजज्ञे जातः ॥८२॥

अथ तस्य नामाद्याह-लोभेति—

लोभनन्दाभिधानोऽयं प्रधानो दोपसंग्रहे ।
अभूल्लोभमयो नूनं वार्धिर्वारिमयो यथा ॥८३॥

अयं मायादेवजीवः लोभनन्दाभिधानः दोपस्य दुर्वृत्तजन्यस्य सङ्ग्रहे प्रधानः प्राधान्यवान्, मुख्यतो दोपस्यैव सङ्ग्राहक इत्यर्थः । नूनम् बाहुल्येन निश्चयेन वा लोभमयोऽतिलोभी, नामानुकूलगुणवानिति यावत्, अभूत्, नामानुकूलगुणसत्त्वमूलकमेवोपमामाह—यथा—वार्धिः समुद्रः वारीणि धीयन्तेऽस्मिन्निति व्युत्पत्त्यनुकूलम् वारिमयः जलमयः वार्धिर्यथा जलाकरस्तथा लोभानन्दो लोभाकर इत्यर्थः ॥८३॥

अथ तस्य धनोपार्जनचिन्तामाह-यानपात्रमिति—

यानपात्रं समारुह्य स्वर्णद्वीपं भजामि किम् ?
यदि वा रोहणं यामि रत्नसन्दोहरोहणम् ? ॥८४॥

किमिति वितर्के, यानपात्रं पोतं समारुह्य स्वर्णद्वीपं भजामि ? तत्र नामानुकूलधनलाभसम्भवादिति भावः, यदि वा अथ वा, रत्नसन्दोहस्य रत्नसमूहस्य रोहणं जनकं रोहणं तदाख्यं पर्वतं यामि ? तस्य रत्नजनकतया तत्र रत्नलाभस्य सुकरत्वादिति भावः ॥८४॥

तस्य वितर्कान्तरमाह-विशामीति—

विशामि विवरे किं वा कल्यं लात्वा कुतश्चन ?
किं धातुवादिनः सेवे येन स्याद् मे धनोच्चयः ? ॥८५॥

किं वा अथवा कुतश्चन कथमपि कुतोऽपि वा कल्यं लात्वा आनीय विवरे बिले "विवरं बिल"मित्यमरः । पाताले इति भावः, विशामि, तत्र धनाधिक्याल्लाभसौकर्यादिति भावः । किमथवा धातुवादिनः स्वर्णादिधातुशोधकान् सेवे भजे, येन कृत्वा मे मम धनोच्चयः धनराशिः प्राप्तः स्यात्, धातुशोधका हि ताम्रादि स्वर्णतया परिणमन्ति, ततस्तथाकरणेन तत्सम्भव इति भावः ॥८५॥

न च कालविलम्बो युक्त इत्याह-तारुण्ये इति—

तारुण्ये प्रबले येन द्रव्यं न समुपार्जितम् ।
वार्धके स कथङ्कारं सुखमाप्स्यति मन्दधीः ? ॥८६॥

प्रबले प्रकृष्टबलवति, धनोपार्जनसहे इत्यर्थः तारुण्ये यौवने येन द्रव्यं न समुपार्जितम्, स तादृशः मन्दधीः द्रव्याभावात् कुधीः वार्धके वृद्धावस्थायां सुखं कथङ्कारं केन प्रकारेणाप्स्यति ? नाप्स्यत्येवेत्यर्थः, वार्धक्यस्य धनोपार्जनाननुगुणत्वात्, तत्र शक्तिक्षयादिति भावः ॥८६॥

तस्य द्रव्योपार्जननिश्चयमाह-दोषा इति—

दोषा गुणा विधीयन्ते पुंसां द्रव्ये सति स्फुटम् ।
यतिष्ये सर्वथा तस्माद् नव्यं द्रव्यमुपार्जितुम् ॥८७॥

पुंसां दोषाः द्रव्ये सति स्फुटं व्यक्तमेव गुणा विधीयन्ते क्रियन्ते, धनं दोषानपि गुणान् कल्पयतीत्यर्थः, तस्माद्धेतोः नव्यमितरविलक्षणं द्रव्यमुपार्जितुं सर्वथा सम्भवता सर्वेण प्रकारेण कृत्वा यतिष्ये, अहं लोभानन्द इति शेषः ॥८७॥

अथ तस्य पितृविज्ञप्तिमाह-इतीति—

इति संचिन्त्य चित्तान्तः पित्रोराकूतमात्मनः ।
सोऽशंसत् पुत्रवात्सल्यात् तौ प्रोचतुरिदं हितम् ॥८८॥

इति पूर्वोक्तप्रकारं चित्तान्तः मनसि सञ्चिन्त्य विचार्य स लोभानन्दः पित्रोः मातापित्रोः आत्मनः स्वस्य आकूतमाशयमशंसदकथयत्, पुत्रवात्सल्यात्पुत्रप्रेम्णा तौ मातापितरौ हितं शुभकारि इदं वक्ष्यमाणं प्रोचतुः ॥८८॥

अथ तदुक्तिमेवाह-आवयोरिति—

आवयोस्तनुजन्मा त्वं खड्गिशृङ्गमिवैककः ।
अतस्त्वद्विरहं सोढुं नैव वत्स ! क्षमावहे ॥८९॥

आवयोः दम्पत्योः त्वम् तनुजन्मा पुत्रः एककः एक एव खड्गिशृङ्गमिव खड्गी गण्डकः "गंडके खड्गखड्गिनौ" इत्यमरः । तस्य शृङ्गम् नासिकोपरिस्थं शृंगमिव, तस्यैकत्वादिति भावः, अतः वत्स ! त्वद्विरहं सोढुं नैव क्षमावहे समर्थौ भवतः ॥८९॥

ननु देशान्तरागमने कथं द्रव्यलाभ इति चेत्तत्राह-अत्रेति—

अत्र स्थितोऽपि तद् द्रव्यं वाणिज्यैः समुपार्जय ।
कारयन् दर्शनानन्दमावर्जय मनांसि नौ ॥९०॥

तदावयोर्विरहासहनाद्धेतो' अत्र स्थितोऽपि स्थित एव वाणिज्यैः व्यवहारैः द्रव्यं समुपार्जय, तथा, दर्शनानन्दं स्वदर्शनजन्यमानन्दं कारयन् प्रयच्छन् नौ आवयोस्त्वन्मातापित्रोः मनांस्यावर्जय रञ्जय ॥९०॥

अथ तस्य प्रस्थानमाह-इत्थमिति—

इत्थं ताभ्यां निषिद्धोऽप्यनिवेद्य चलितोऽथ सः ।
गम्भीरसिन्धुरोधःस्थं गम्भीरपुरमासदत् ॥९१॥

अथान्तरम्, इत्थमुक्तप्रकारेण ताभ्यां मातापितृभ्यां निषिद्धो निवारितोऽपि स लोभानन्दः अनिवेद्य मातापित्रोरनुक्त्वैव चलितः प्रस्थितः सन् गम्भीरस्य सिन्धोः नद्याः सागरस्य वा रोधःस्थं तटस्थं गम्भीरपुरं तदाख्यं नगरमासदत्प्राप्तवान् ॥९१॥

अथ तस्य पुरभ्रमणमाह-भ्राममिति—

भ्रामं भ्रामं पुरीतः स सांयात्रिकगृहं गतः ।
तत्र सज्जीकृतं पोतं समालोक्य मुदं दधौ ॥९२॥

स लोभानन्दः इतोऽस्यां पुरि भ्रामं भ्रामम् भ्रान्त्वा भ्रान्त्वा सांयात्रिकस्य पोतवाहस्य "सांयात्रिकाः पोतवाहा" इत्यमरः । गतः प्राप्तः सन् तत्र सांयात्रिकगृहे पोतं वाहनं सज्जीकृतं समालोक्य मुदं हर्षं दधौ, तस्य प्रस्थानानुगुणत्वादिति भावः ॥९२॥

अथ तस्य ततः प्रस्थानमाह-पोतमिति—

पोतं सोऽपि समारुह्य भृत्यभावमधिष्ठितः ।
गुणसागरपोतेशवणिजा सह चेलिवान् ॥९३॥

गुणसागरेण तदाख्येन पोतेशेन वणिजा सह लोभानन्दोऽपि भृत्यभावं किङ्कर्यमधितिष्ठतः सन् किङ्करो भूत्वेत्यर्थः, पोतं समारुह्य चेलिवान् प्रस्थितवान् ॥९३॥

अथापरिचितविश्वासकर्तृप्रशंसामाह-कुर्वन्तीति—

कुर्वन्त्यसंस्तुतस्याऽपि विश्वासं येऽविकत्थनाः ।
विशुद्धचेतसः सन्तः प्रशस्यन्ते न ते कथम् ! ॥९४॥

येऽविकत्थना अनात्मश्लाघिनः असंस्तुतस्य अपरिचितस्यापि विश्वासं कुर्वन्ति, ते तादृशाः विशुद्धचेतस. निर्मलान्तःकरणाः सन्तः सज्जनाः कथं न प्रशस्यन्ते ! अपि तु प्रशस्यन्त एवेत्यर्थः ॥९४॥

अथ गुणसागरस्य तोषमाह-सुवातेति—

सुवातप्रेरितं तच्च रत्नद्वीपं रयाद्ययात् ।
श्रुताधिकायसंश्रुत्या तुतोष गुणसागरः ॥९५॥

तत्पोतं च सुवातेन अनुकूलपवनेन प्रेरितं सद् रयाद्वेगतः रत्नद्वीपं तदाख्यं द्वीपमयात्प्राप गुणसागर श्रुतं पुरा कर्णगोचरीकृतम् 'श्रवणमिति यावत्' अपेक्ष्यापि अधिकस्य आयस्य लाभस्य संश्रुत्या प्राप्त्या कृत्वा तुतोष प्रीतोऽभूत् ॥९५॥

अथ तस्य भूपकृतशुल्कार्धमुक्तिमाह-उपदेति—

उपदाऽऽलोकमात्रेण भूपतिस्तुष्टमानसः ।
शुल्कार्धं व्यमुचत् तस्य सांयात्रिकशिरोमणेः ॥९६॥

सांयात्रिकशिरोमणेः पोतवाहमुख्यस्य तस्य गुणसागरस्य "उपायनमुपग्राह्यमुपहारस्तथोपदा" इत्यमरोक्तेः उपदानाम् उपायनानामाऽऽलोकमात्रेण दर्शनत एव, उपदानामपूर्वत्वादिति भावः, तुष्टमानसः प्रसन्न भूपतिः रत्नद्वीपेशः शुल्कार्धम् राजग्राह्यभागार्धं व्यमुचत् नाग्रहीदित्यर्थः ॥९६॥

अथ तस्य स्वपुरप्रस्थानमाह-विक्रीतेति—

विक्रीताऽऽनीतपण्यः स प्रतिपण्यकृतग्रहः ।
वाहनं वाहनस्वामी प्रैरयत् स्वपुरं प्रति ॥९७॥

प्रतिपण्यं पण्ये पण्ये कृत. ग्रहः ग्रहणं, आशय इत्यर्थः, येन स तादृशः प्रतिपण्यं वस्तुमुल्यादि ज्ञात्वेत्यर्थः । पूर्वं विक्रीतं पश्चादन्यदानीतं पण्यं व्यवहर्त्तव्यं वस्तु येन स तादृशः सन् विक्रीतानि पण्यः विक्रेयं पणितव्यं च पण्यं' इत्यमरः । स गुणसागरः वाहनस्वामी पोतेशः वाहनं पोतं स्वपुरम्प्रति स्वपुरगमनाय प्रैरयत् अचालयत ॥९७॥

अथ धनरक्षणचिन्तामाह-महेति—

महामुल्येषु रत्नेषु परैर्दृष्टेषु कर्हिचित् ।
भविष्यति ममाऽपायो यज्जनोऽत्यर्थसस्पृहः ॥९८॥

महामूल्येषु अतिमूल्यवस्तु रत्नेषु कर्हिचित् कदाचित्परैश्चौरादिभिः दृष्टेषु सत्सु मम अपायोऽनर्थः, तादृशरत्नापहारादिरूपः भविष्यति, तत्र हेतुकथनेन तत्समर्थयति यद्यतः जनः अन्यस्यार्थेषु धनेषु सस्पृह. स्पृहायुक्तो ग्रहणे कृताभिलाषो भवतीत्यर्थः ॥९८॥

निःस्पृहस्य दौर्लभ्यमाह-परार्थेति—

परार्थवनिताऽऽलोके येषां न गृहयालुता ।
पुंरूपेण जगत्यां ते जिनाः किं नैव दुर्लभाः ॥९९॥

परेषामन्येषामर्थानां धनानां वनितानां स्त्रीणाञ्चालोके दर्शने सति येषां जनानां न गृह्याल्लुता ग्रहणाभिलाष; ये परेषां धनानि स्त्रियश्च नेच्छन्ति, ते तादृशाः जिना वीतरागाः जगत्यां पुंरूपेण पुरुषरूपेण किं दुर्लभा नैव, अपि तु तादृशा वीतरागा जना दुर्लभा एवेत्यर्थः ॥९९॥

**अथ तस्य धनगोपनमाह-एवमिति—**

**एवं विमृश्य पोतेशो महारत्नानि कानिचित् ।**
**निर्यामकजनादीनां स प्रच्छन्नमतिष्ठिपत् ॥१००॥**

एवमुक्तप्रकारेण विमृश्य स पोतेशः गुणसागरः कानिचित् कियन्ति महारत्नानि बहुमूल्यवन्ति रत्नानि निर्यामकजनादीनाम् पोतवाहपुरुषादीनां प्रच्छन्नमज्ञातं यथा स्यात्तथा अतिष्ठिपत् स्थापयामास, यथा निर्यामकादयो न जानन्ति, तथा रक्षितवानित्यर्थः ॥१००॥

**अथ लोभानन्दस्य तदपहारेच्छामाह-तटस्थ इति—**

**तटस्थो लोभनन्दोऽन्तर्धीयमानानि तान्यपि ।**
**ददर्श दर्शनीयानि तानि चाऽऽदातुमैहत ॥१०१॥**

तटस्थः उदासीनवत्स्थितः, समीपस्थो वा लोभानन्दः दर्शनीयानि उत्तमानि अन्तर्धीयमानानि गोप्यमानानि अपि तानि महामूल्यानि रत्नानि ददर्श, तानि महारत्नानि आदातुमपहर्तुं च ऐहतैच्छत् ॥१०१॥

**अथ तस्य पोतेशवधेच्छामाह-पोतेशे इति—**

**पोतेशे सावधानेऽस्मिंस्तानि लातुमशक्नुवन् ।**
**तं मारयितुमैच्छत् स लोभः किं न करोति वा ॥१०२॥**

अस्मिन् पोतेशे गुणसागरे सावधाने रत्नानि कोऽपि मा ग्रहीदिति सतर्के सति स लोभानन्दः लातुं रत्नानि ग्रहीतुमशक्नुवन् असमर्थः सन् तं गुणसागरं मारयितुमैच्छत्, ननु एतदनुचितमिति चेत्तत्राह- वा यतः लोभः परद्रव्यादीच्छा किं न करोति ! अपि तु सर्वमेव द्रव्यार्थं परवधाद्यपि जनयतीत्यर्थः ॥१०२॥

**अथ तत्कृतपोतेशसमुद्रक्षेपमाह-अन्येद्युरिति—**

**अन्येद्युरुत्थितं देहचिन्तया व्याकुलं निशि ।**
**सांयात्रिकं निचिक्षेप सोऽब्धौ छिद्रं विमार्गयन् ॥१०३॥**

अन्येद्युरेकदा । निशि रात्रौ देहचिन्तया पुरीषाद्युत्सर्गार्थमुत्थितं व्याकुलं वेगाधिक्यात्कृतत्वरं सांयात्रिकं पोतेशं गुणसागरम् छिद्रं तद्वधावसररूपम् प्रमादस्थानं विमार्गयन् शोधयन् स लोभानन्दः अब्धौ समुद्रे निचिक्षेपापातयत् ॥१०३॥

अथ पोतस्थजनवृत्तमाह-याने इति--

यानें याते ततो दूरं जजागार कथञ्चन ।
कोऽप्यदृष्ट्वा च पोतेशं वज्राहत इवाऽभवत् ॥१०४॥

ततः पोतेशक्षेपस्थानात् दूरं याने पोते याते गते सति जजागार पोतस्थो जनः कथञ्चित् गतनिद्रोऽभवत्, तथा, कोऽपि पोतेशं गुणसागरमदृष्ट्वा च वज्राहत इव वज्रेणाहत इव गतसंज्ञ इवाभवत् ॥१०४॥

तदनु यानस्तम्भनमाह-तत इति--

ततः स लब्धचैतन्यो बोधयित्वाऽपरानपि ।
कर्णधारकमाचख्यौ यानं स्खलय भोः ! मनाक् ॥१०५॥

ततोऽनन्तरं । स हतोत्तरः लब्धसंज्ञः स्वस्थः सन् अपरान् पोतस्थान् निर्यामकादीनपि बोधयित्वा जागरयित्वा कर्णधारकं नाविकम् "कर्णधारस्तु नाविक" इत्यामरः आचख्यौ, किमित्याह भोः यानं पोतं मनागीषत् स्खलय गतिशिथिलं कुरु स्तम्भयेत्यर्थः ॥१०५॥

अथ तयोरुक्तिप्रत्युक्ति युग्मेन आह-किमिति--

किमर्थमिति तेनोक्ते तैरूचे प्रेक्ष्यते प्रभुः ।
स प्राह कायचिन्तायै यदा स प्रभुरुत्थितः ॥१०६॥

योजनानां शतं यानं तत्क्षणात् समुपागमत् ।
कायचिन्तोत्तरं तस्य स्वरूपं वेद न स्वयम् ॥१०७॥

किमर्थं कस्मै प्रयोजनाय यानस्तम्भनं कथयसीतीत्थं तेन कर्णधारेण उक्ते पृष्टे सति तैः शोभानन्दप्रभृतिभिरूचे कथितम्, किमित्याह प्रभुः प्रेक्ष्यतेऽवलोक्यते क्वाऽस्तीति मृग्यते इत्यर्थः स कर्णधारः प्राह, किमित्याह यदा स प्रभुः पोतेशो गुणसागरः कायचिन्तायै उत्थितः गतनिद्र उदस्थात् तत्क्षणाद् ततः आरभ्य यानं योजनानां शतं शतयोजनं यावत् समुपागमत्, किन्तु, कायचिन्तोत्तरम् कायचिन्तायाः पश्चात् कश्चन कोऽपि तस्य पोतेशस्य स्वरूपं न वेद न दृष्टवानित्यर्थः ॥१०६॥ ॥१०७॥ युग्मम्

युष्माकमिति

युष्माकमुपरोधेन तं पश्यामि तथाऽपि हि ।
इत्युक्त्वाऽस्खलयद् यानं सकर्णः कर्णधारकः ॥ १०८॥

युष्माकं भवतामुपरोधेनाग्रहेण तथापि याने दूरमागतेऽपि हि निश्चयेन तं पोतेशं पश्यामि मार्गयामि. इतीत्थमुक्त्वा सकर्णः मतिमान् कर्णधारकः यानमस्खलयत् अस्थापयत्, गतिशून्यं कृतवानित्यर्थः ॥१०८॥

अथ तस्य तदन्वेषणमाह-स इति—

स निक्षिप्याऽभितो नौकाः सांयात्रिकमलोकत ।
तथाऽपि क्वाऽपि न प्रापि तत्कथाऽपि यथास्थिता ॥१०९॥

स कर्णधारः नौकाः यानान्यभितः सर्वतः सांयात्रिकं नाविकं निक्षिप्य मुक्त्वा प्रेरयित्वा वा आलोकत दृष्टवान्, तथापि यानस्य सर्वप्रदेशेषु अन्वेषणे कृतेऽपि क्वाऽपि यथास्थिता यथार्था तस्य गुणसागरस्य कथा वृत्तमपि न नैव प्रापि ज्ञाता ॥१०९॥

अथ पुरप्राप्तिमाह-नुन्न इति—

नुन्नः पोतोऽथ तैर्भूयः-शोकाऽऽवेशविसंस्थुलैः ।
क्रमेण नगरं प्राप्य तदीशाय स चाऽर्पितः ॥११०॥

अथ शोधनानन्तरम् भूयः पुनः शोकस्य पोतेशविरहजन्यस्य दुःखस्यावेशेनावेगेन विसंस्थुलः-व्याकुलैः तैः कर्णधारादिभिः नुन्नः प्रेरितः, चालित इत्यर्थः पोतो यानपात्रं, क्रमेण नगरं प्राप्य नीत्वा स च पोत तदीशाय पोतेशाय, तत्पित्रादये इत्यर्थः अर्पितः समर्पितः ॥११०॥

अथ लोभानन्दस्य स्वपुरगमनमाह-तेनेति—

तेनोचितं धनं दत्त्वा लोभानन्दो विसर्जितः ।
उपात्तरत्नसंभारः पुरं प्रत्यचलद् निजम् ॥१११॥

तेन पोतेशेनोचितं मृतकोचितं धनं भाटकं दत्त्वा विसर्जितः गृहगमनायाज्ञप्तः लोभानन्दः उपात्तः गृहीतः रत्नसंभारः पोतेशन्यस्तरत्नराशिर्येन स तादृशः सन् निजं पुरं प्रत्यचलत् ॥१११॥

अथ युग्मेन तस्य वेषपरिवर्तेन गमनमाह-मामिति—

मां समुद्धतनेपथ्यं पथि दृष्ट्वैव तस्कराः ।
रत्नान्याशु ग्रहीष्यन्ति निग्रहीष्यन्ति चाऽसिना ॥११२॥

इदं संभाव्य तान्येव स्यूत्वा रत्नानि कन्थया ।
स कार्पटिकवेषेणाऽध्वनि प्रास्थित सुस्थितः ॥११३॥

पथि मां लोभानन्दं समुद्धतं साडम्बरं नेपथ्यं वेषो यस्य तादृशं धनितवेषं दृष्ट्वा एव तस्कराश्चौराः आशु रत्नानि ग्रहीष्यन्ति आच्छेत्स्यन्ति असिना खड्गेन निग्रहीष्यन्ति हनिष्यन्ति च इदमुक्तप्रकारं संभाव्य विचिन्त्य तानि गृहीतानि रत्नानि कन्थया स्यूत्वा कन्थया अन्तः कृत्वा कन्थामुपरि सन्धाय च सुस्थितः निश्चिन्तः सन् स लोभानन्दः कार्पटिकवेषेण संन्यासिवेषेण अध्वनि प्रास्थित ययौ ॥११२॥११३॥

अथ पक्षिकथनमाह-गच्छत इति-

गच्छतस्तस्य मार्गेऽस्ति कान्तारे चौरसैन्यकम् ।
शाखिशाखास्थितः पक्षी तस्याऽग्रे प्रोचिवानिदम् ॥११४॥

गच्छतः तस्य लोभानन्दस्य मार्गे चौरसैन्यकम् चौरसमूहोऽस्ति अभूत् तस्य चौरसैन्यस्याग्रे शाखिनः वृक्षस्य शाखायां स्थित उपविष्टः पक्षी इदं वक्ष्यमाणं प्रोचिवान् ॥११४॥

तद्वचनमाह-अहो ! इति-

अहो ! एताः समायान्ति बह्वो द्रव्यकोटयः ।
तद् गृह्णीत यथा न स्यात् दारिद्र्यं वः कदाचन ॥११५॥

अहो ! इति संबोधने हर्षे वा एताः मया ज्ञायमाना बह्वो द्रव्यकोटयः समायान्ति केनाऽपि नीयमाना इति शेषः तदागच्छन्त्यो द्रव्यकोटयः गृह्णीत, यथा वः चौरसैन्यानां कदाचन कदापि दारिद्र्यं न स्याद् भवेत् , भवतां दारिद्र्योन्मूलनपरिमाणास्ता द्रव्यकोटय इत्यर्थः ॥११५॥

अथ चौराणां तदन्वेषणमाह-निशम्येति-

निशम्येति प्रहृष्टैस्तैश्चौरैरालोकि सर्वतः ।
परं कश्चिद् न चाऽऽलोकि तादृग् द्रव्यसमाश्रयः ॥११६॥

इत्युक्तप्रकारं निशम्य प्रहृष्टैः धनलाभाशयाद् मुदितैः तैस्तत्रत्यैः चौरैः सर्वतः चतुर्दिक्षु आलोकि दृष्टम् , परं किन्तु, तादृक् पक्षिकथनानुसारेण द्रव्यसमाश्रयः द्रव्यकोटिसहितः कश्चित्कोऽपि न च नैवालोकि दृष्टः ॥११६॥

अथ लोभानन्दमुक्तिमाह-दृष्टे इति-

दृष्टे सन्निहिते तस्मिन् कन्थाऽऽवृतकलेवरे ।
मलिम्लुचैर्विमुक्तेऽथ स खगः पुनरभ्यधात् ॥११७॥

तस्मिन् लोभानन्दे सन्निहिते समीपमागते सति कन्थया आवृतः कलेवरः शरीरं यस्य तादृशे संन्यासिवेषे दृष्टे, अथ अत एव मलिम्लुचैश्चौरैः विमुक्ते सति खगः पक्षी पुनः अभ्यधात् जगौ ॥११७॥

अथ पुनः पक्ष्युक्तिमाह-एता इति-

एता युष्मासु पश्यत्सु ययुर्द्रविणकोटयः ।
श्रुत्वैवं चौरराजोऽपि तमानाय्य निरैक्षत ॥११८॥

युष्मासु चौरेषु पश्यत्सु सत्स्वेव एताः समायाताः द्रविणकोटयः कोटिपरिमितानि द्रव्याणि ययुः गताः एवमुक्तप्रकारं श्रुत्वा चौरराजः चौरेषु मुख्योऽपि तं कार्पटिकवेषं लोभानन्दमानाय्य ग्राहयित्वा निरैक्षत चारु दृष्टवान् ॥११८॥

अथ पुनर्लोभानन्दस्य मुक्तिमाह-यूकेति-

यूकालक्षाश्रया लिक्षाकोट्याधारा मम प्रभो ।
इयं कन्थाऽस्ति नैवान्यदित्युक्ते तं मुमोच सः ॥११९॥

प्रभो ! स्वामिन् ! मम इयं दृश्यमाना कन्था स्यूतजीर्णवस्त्रसन्ततिः यूकानां क्षुद्रजन्तुविशेषाणां लक्षाणां लक्षसंख्यकानामाश्रयः, तथा लिक्षाणां क्षुन्द्रजन्तुविशेषाणां कोटीनां तत्संख्यकानामाधारः अस्ति, न त्वत्रान्यदित्युक्ते इतीत्थमुक्ते कथिते सति स चौरराजस्तं लोभानन्दं मुमोच ॥ ११९॥

अथ पुनः खगोक्तिमाह भूय इति—

भूयः खगस्तदाऽऽचष्ट स्पष्टवाक् कीरवत् स तु ।
जन्मान्तरविरोधीव लोभानन्दस्य केवलम् ॥१२०॥

तदा लोभानन्दे मुक्ते स तु शाखास्थितः खगः कीरवत् शुकवत्स्पष्टवाक् व्यक्तवाक् सन् लोभानन्दस्य जन्मान्तरस्य पूर्वजन्मनः विरोधी द्वेषीव तदनिष्टत्वादिति भावः केवलमाचष्ट पूर्वोक्तमेव जगौ ॥ १२० ॥

अथ तत्कन्थाद्यपहारमाह—अवीति—

अविसंवादिवाक्यत्वाद् विहङ्गस्य स तैः पुनः ।
रुद्धः कन्थाद्यमाच्छिद्य व्यमोचि शववत् पुनः ॥१२१॥

विहङ्गस्य पक्षिणः अविसंवादिवाक्यत्वात्प्रत्यक्षविषयविषयकवाक्त्वाद्धेतोः पक्षी यथार्थमेव सदा वक्तीति हेतोरित्यर्थः । तैः चौरैः पुनः रुद्धः गृहीतः स लोभानन्दः कन्थाद्यम् कन्थादिकमाच्छिद्य बलाद् गृहीत्वा पुनः शववत् मृतकवत् धनवस्त्राद्यपहारान्मृतकतुल्य इत्यर्थः व्यमोचि ॥१२१॥

अथ चौरैः रत्नादानमाह—तथेति—

तथा कृते च तैः पक्षी मौनमालम्ब्य तस्थिवान् ।
कन्थामुत्कील्य रत्नानि चौरैरादृदिरे ततः ॥१२२॥

तैः चौरैः तथाकृते लोभानन्दकन्थाद्यपहारे कृते सति च पक्षी मौनमालम्ब्य तस्थिवान्, पुनर्न जगावित्यर्थः ततस्तदनन्तरं चौरैः कन्थामुत्कील्य विदार्य रत्नानि आददिरे गृहीतानि ॥१२२॥

अथ लोभानन्दस्य गम्भीरपुरगमनमाह—लोभेति—

लोभानन्दः पुनश्चिन्ताऽऽचान्तरवान्त ऋते धनम् ।
गम्भीरपुरमेवाऽगात् तादृग् नान्यत्र यद् धनम् ॥ १२३ ॥

लोभानन्दः धनमृते विना चिन्ताभिराचान्तं व्याप्तं स्वान्तं मनो यस्य तादृशोऽतिचिन्तितः सन् पुनः गम्भीरपुरमेवागात् ननु किमिति पुनस्तत्रैवागादित्याह—यद्यतस्तादृग् रत्नादिरूपं धनमन्यत्र स्थाने न, नाभूदित्यर्थः ॥१२३॥

अथ गुणसागरवृत्तान्तमाह—इतश्चेति –

इतश्च पातितो योऽब्धौ तेन पोतपतिस्तदा ।
सोऽपि प्राग्भग्नयानस्य प्रापत् फलकमेककम् ॥ १२४ ॥

इतोऽस्मिन् समये च, तदा प्राक् तेन लोभानन्देन यः पोतपतिः पोतेशः गुणसागरः अब्धौ पातितः क्षिप्तः स गुणसागरोऽपि प्राक् पुरा भग्नस्य यानस्य पोतस्य एककमेकं फलकं खण्डं प्रापत् ॥१२४॥

अथ तस्य स्वपुरप्राप्तिमाह—प्रेर्येति—

प्रेर्यमाणः स कल्लोलैर्वातोद्धूतैरितस्ततः ।
दिनानां सप्तकेनाऽऽप तदेव पुरमात्मनः ॥ १२५ ॥

स गुणसागरः वातोद्धूतैः पवनोत्थैः कल्लोलैः तरङ्गैः इतस्ततः प्रेर्यमाणः तरङ्गात्तरङ्गान्तरं प्राप्यमाणः दिनानां सप्तकेन सप्तभिर्दिवसैः कृत्वा तदेव आत्मनः पुरं गंम्भीरपुरमाप प्राप ॥१२५॥

अथ तदागमननिमित्तं महोत्सवमाह—सुजनैरिति—

सुजनैर्मुदितैस्तस्य दर्शनादेव पत्तने ।
अकार्यत महान् ऋद्ध्या वर्धापनमहोत्सवः ॥१२६॥

तस्य गुणसागरस्य पत्तने नगरे दर्शनादेवावलोकनमात्रतः मुदितैः सुजनैः ऋद्ध्या द्रव्येण स्वसम्पदा वा महान् वर्धापनमहोत्सवः अकार्यत कारितः ॥१२६॥

अथ लोभानन्दस्य तद्गृहप्राप्तिमाह—स इति—

स क्रमाल्लोभनन्दोऽपि दैवात् तद् गृहमागमत् ।
रुष्टः परिजनस्तस्य तद्वृत्ताऽवबोधतः ॥१२७॥

क्रमात् स लोभानन्दोऽपि दैवाद्योगानुयोगात्तस्य गुणसागरस्य गृहमागमदागतवान् तस्य-गुणसागरस्य परिजनः परिवारजनः तस्य लोभानन्दकृतस्य वृत्तान्तस्य चरितस्यावबोधतः ज्ञानाद्धेतोः रुष्टः कुपितः अभूदिति शेषः ॥१२७॥

अथ तस्मिन् राज्ञः कोपमाह—बर्हिरिति—

बर्हिर्बन्धेन बद्ध्वा ततः स निन्ये नृपतेः पुरः ।
दुष्टैस्तच्चेष्टितै रुष्टस्तं राजा वध्यमादिशत् ॥१२८॥

तैः गुणसागरपरिजनैः बर्हिवन्धेन रज्जुवन्धनेन बद्ध्वा निगृह्य स लोभानन्दः नृपतेः पुरोऽग्रे निन्ये, दुष्टैः दोषपूर्णैः तस्य लोभानन्दस्य चेष्टितैः कर्मभिः कृत्वा रुष्टः क्रुद्धः राजा तं लोभानन्दं वध्यम् आदिशत् लोभानन्दवधमादिष्टवान् ॥१२८॥

अथ तस्य चतुर्थनरकप्राप्तिमाह कदर्थनेति—

कदर्थनाभिरुग्राभिर्बह्वीभिः स कदर्थितः ।
रौद्रध्यानी विपद्याऽगात् तुरीये निरये स्यात् ॥१२९॥

बह्वीभिः उग्राभिः असह्याभिः कदर्थनाभिः पीडाभिः कदर्थितः स रौद्रध्यानी अशुभध्यान मग्नः सन् विपद्य मृत्वा स्यात्सद्य एव तुरीये चतुर्थे निरयेऽगात् ॥१२९॥

अथ तस्य विविधयातनामाह तत्रेति—

तत्रोत्कृष्टायुरासेहे विविधाः सोऽपि यातनाः
कषायाणां चतुर्णां हि मेलो दुःखस्य मेलकः ॥१३०॥

तत्र चतुर्थनरके उत्कृष्टायुः परमायुष्कः स लोभानन्दजीवः विविधा नानाप्रकाराः अपि यातना नरकदुःखानि आसेहे, तदेव समर्थयति—हि यतः कषायाणां चतुर्णाम् क्रोधादिचतुःकषायाणां मेलः सङ्गमः दुःखस्य मेलकः प्रापकः, अस्तीति शेष. ॥१३०॥

अथ कथामुपसंहरति इतीत्थमिति

इत्थं सोऽपारसंसारमान्तरमान्त एव यत् ।
भ्रमिता त्यज्यतां तस्मात् प्रमादोऽयं तृतीयकः ॥१३१॥

स लोभानन्दजीवः इत्थमुक्तप्रकारेण अपारोऽनन्तः संसार एव गहनत्वात्प्रान्तरः वनगहनं तत्प्रान्त एव भ्रमिता भ्रामणं करिष्यतीत्यर्थः । तस्माद्धेतोः अयं वर्णितः तृतीयकः प्रमादः लोभाख्यः कषायः त्यज्यताम्, अन्यथा महाननर्थ इति भाव. ॥१३१॥

अथ निद्रात्यागमाह कुरुचन्द्रेति

कुरुचन्द्र! महीचन्द्र! निद्रारूपश्चतुर्थकः ।
प्रमादस्त्यज्यतां यस्मादिहाऽमुत्र सुखं नहि ॥१३२॥

मह्यां चन्द्र इव स. तत्सम्बोधने महीचन्द्र कुरुचन्द्र ! निद्रारूपः चतुर्थः प्रमादः कषायस्त्यज्यताम्, यस्मान्निद्रारूपाच्चतुर्थात्प्रमादाद्धेतोः इह इहलोकेऽमुत्र—परलोके च सुखं नहि नास्तीत्यर्थः ॥१३२॥

तत्र दृष्टान्तं प्रस्तौति निद्रेति—

निद्रापरवशः प्राणी वित्तबुद्धिपरिक्षयात् ।
इहाऽमुत्राऽपि दुःखानि भानुदत्त इवाऽश्नुते ॥१३३॥

निद्रापरवशः निद्रालुः इहामुत्रापि भानुदत्त इव तदाख्यजीव इव दुःखान्यश्नुते प्राप्नोति ॥१३३॥

**तत्कथामेवाह तथाहीति—**

**तथाहि सिद्धार्थपुरे राजा शत्रुञ्जयोऽजनि ॥१३४॥**
**कोकानामिव लोकानां शोकानां यो वियोगकृत् ॥१३४॥**

तथाहीति वार्तानिर्देशे, सिद्धार्थपुरे शत्रुञ्जयः तदाख्यः राजा अजनि बभूव यः शत्रुञ्जयः कोकानामिव चक्रवाकानामिव लोकानां शोकानां वियोगकृन्नाशक, आसीदिति शेषः "कोकश्च-क्रश्चक्रवाक" इत्यमरः यथा सूर्योदये कोकाः कोकीसङ्गमाद्वियोगजन्यदुःखं त्यजन्ति, तथा स राजा लोकशोकमोचक आसीदित्यर्थः ॥१३४॥

**अथ भार्यामाह वनमालेति—**

**वनमालाऽभिधा तस्य महिषी भूपतेरभूत् ।**
**गौरीति विकले देशे या विजाड्या त्रिवर्ण्यते ॥१३५॥**

तस्य शत्रुञ्जयस्य भूपतेः वनमालाभिधा महिषी पट्टराज्ञी अभूत्, विजाड्या जाड्य-विगता, बुद्धिमतीत्यर्थः या वनमाला विकले सकले विशिष्टकलायुक्ते देशे गौरीति नाम्ना विवर्ण्यते कथ्यते ॥१३५॥

**अथ तत्र भानुदत्तमाह-भानुदत्त इति—**

**भानुदत्तोऽभवत् तत्र कुटुम्बी दौस्थ्यभाजनम् ।**
**प्रायो लक्ष्मीसरस्वत्योः स्थितिः पुण्यात्मनां नृणाम् ॥१३६॥**

तत्र सिद्धार्थपुरे भानुदत्तस्तदाख्यः कुटुम्बी गृहस्थः दौस्थ्यभाजनम् दरिद्रोऽभवत्, दौस्थ्ये हेतु-माह प्रायः बाहुल्येन पुण्यात्मनां नृणामेव लक्ष्मीसरस्वत्योः धनविद्ययोः स्थितिः सङ्गमः, अन्यथा तु द्वयोरेकैव, एकापि वा नेति भावः ॥१३६॥

**अथ तस्य धनार्जनार्थं प्रस्थानमाह अर्थमिति—**

**अर्थं विना न संमानं केऽपि कुर्वन्ति कस्यचित् ।**
**स चित्ते परिभाव्यैवं प्रतस्थे धनमार्जितुम् ॥१३७॥**

केऽपि जनाः अर्थं विना धनरहितस्य कस्यचित्कस्यापि सम्मानं न कुर्वन्ति, एव-मित्थं चित्ते परिभाव्य विचार्य स भानुदत्तः धनमार्जितुं प्रतस्थे देशान्तरं प्रति चलितवान् ॥१३७॥

अथ तस्य सिन्धुतटस्थितिमाह-अयमिति--

अयं कामुकवद् भ्राम्यन् विषयाद् विषयान्तरम् ।
सिन्धुरोधः समासाद्य रत्नार्थी तदसेवत ॥१३८॥

अयं भानुदत्तः कामुकवत् कामिपुरुषवत्, विषयाद्देशात्, अथ च वनितादिरूपविषयात्, विषयान्तरं देशान्तरं, अथ च वनितान्तरं, भ्राम्यन् अटन्, प्रसृजन् वा, रत्नार्थी सिन्धोः सागरस्य रोधस्तटं समासाद्य प्राप्य तत् सिन्धुरोधः असेवत, सिन्धो रत्नाकरत्वात्तत्सेवने रत्नलाभसम्भव इत्याशयेति भावः ॥१३८॥

अथ तस्य सिन्धुपूजामाह-पूजामिति--

पूजां विना फलाऽवाप्तिर्न काऽपि समवेक्ष्यते ।
इति धृत्वाऽऽशये सोऽपि सिन्धोरर्चां प्रचक्रमे ॥१३९॥

पूजामर्चां विना फलावाप्तिरिष्टसिद्धिः काऽपि न समवेक्ष्यते । इतीत्थमाशये मनसि धृत्वा निर्धार्य स भानुदत्तोऽपि सिन्धोरर्चां पूजां प्रचक्रमे कर्त्तुमारब्धवान् ॥१३९॥

अथ तस्य गर्ताखननमाह-पुष्पेति--

पुष्पप्रकरधूपाद्यैः पूजयित्वा पयोनिधिम् ।
स गर्तामखनत् तीरे गम्भीरां चित्तवृत्तिवत् ॥१४०॥

स भानुदत्तः पुष्पाणां प्रकरैः समूहैः धूपाद्यैश्च पयोनिधिं समुद्रं पूजयित्वा तीरे समुद्रतीरे चित्तवृत्तिवत् स्वचित्तवृत्तिवद् गभीरां गर्तामवटमखनत् खननेन समपादयत् ॥१४०॥

अथ तत्र वराटकानाह-वेलायामिति--

वेलायां विनिवृत्तायां तत्राऽऽयातः स सत्वरम् ।
वराटकान् समालोक्य विषादमधिकं दधौ ॥१४१॥

वेलायाम् पयोधिजलवृत्तौ विनिवृत्तायाम् अधोऽगत्यां सत्याम् स भानुदत्तः सत्वरम् तत्र गर्तापार्श्वे आयातः सन् वराटकान् समालोक्य अधिकं विषादं खेदं दधौ कृतवान् ॥१४१॥

अथ तस्य पुनरुद्योगमाह-लक्ष्मीति--

लक्ष्मीनिदानमुद्योग इत्येवं कलयन्नयम् ।
विशेषाद् विदधे तच्च स्वायासमविचारयन् ॥१४२॥

उद्योगः प्रयत्नः लक्ष्म्याः निदानं मूलकारणम् इत्येवं कलयन् विचारयन् अयं भानुदत्तः अविचारयन् प्रस्तुतोद्योगात्फलसिद्धिर्नैवेत्येवमविचारयन्नेव विशेषादाधिक्येन तद् गर्ताखननरूपं स्वायासं स्वोद्योगं विदधे च ॥१४२॥

अथ तत्राब्धिदेवकृतमणिक्षेपमाह-इतीति—

इत्यहर्निशमेतस्याऽऽतन्वतः सत्त्वबोधतः ।
अब्ध्यधिष्ठायकस्तुष्टो गर्तोऽन्तः क्षिप्तवान् मणिम् ॥१४३॥

इति उक्तप्रकारेण सत्त्वबोधतः आत्मबलज्ञानेन अहर्निशमातन्वतः कुर्वतः एतस्य भानुदत्तस्य तुष्टः प्रसन्नः अब्धेः समुद्रस्य अधिष्ठायकः अधिष्ठाता देवः, वरुण इत्यर्थः, गर्ताया अन्तः मध्ये मणिं क्षिप्तवान् ॥१४३॥

अथ तस्य ततः प्रस्थानमाह-स सति—

स वेलाऽपगमे तत्र रत्नं वीक्ष्याऽतिभासुरम् ।
हृष्टो निबध्य तद् वस्त्रस्याऽञ्चले चलितस्ततः ॥१४४॥

स भानुदत्तः वेलायाः समुद्रजलवृद्धेरपगमे अधोगते सति तत्र गर्तायाम् अतिभासुरमुज्ज्वलं रत्नं वीक्ष्य हृष्टः तद्रत्नं वस्त्रस्य अञ्चले प्रान्ते निबध्य बद्ध्वा ततः सिन्धुतटाच्चलितः ॥१४४॥

अथ तस्य शयनमाह-स्वेति—

स्वपत्तनं समागच्छन् सान्द्रद्रुमतलेऽन्यदा ।
क्वचिद् मार्गपुरोपान्ते संविवेश स सश्रमः ॥१४५॥

अन्यदैकदा स्वपत्तनं स्वनगरं प्रति समागच्छन् स भानुदत्तः सश्रमः श्रान्तः सन् क्वचिद् मार्गे पुरस्योपान्ते समीपे सान्द्रस्य घनच्छायस्य द्रुमस्य तले संविवेश शिश्ये ॥१४५॥

अथ तत्र नरान्तरागमनमाह-अथेति—

अथऽत्राऽगाज्जनो मत्तमातङ्गभयविह्वलः ।
तदैकेन स चावादि प्रमीलामिलितेक्षणः ॥१४६॥

अथानन्तरम् अत्र भानुदत्तसमीपे मत्तान्मातङ्गात्करिणः भयेन विह्वलो व्याकुलः जनः आगात्, तदा एकेन जनेन प्रमीलया निद्रया मीलितेक्षणः मुद्रितनेत्रः स भानुदत्तः अवादि कथितश्च ॥१४६॥

तत्कथनमेवाह-अरे ! इति—

अरे ! पान्थ ! समुत्तिष्ठ समुत्तिष्ठ विपत्स्यसे ।
मूलादालानमुन्मूल्य मत्तेभोऽत्र समेति यत् ॥१४७॥

अरे ! पान्थ ! पथिक ! समुत्तिष्ठ ! जागृहि जागृहि, ससम्भ्रममाह— यद्यतः मत्तेभः मदोन्मत्तहस्ती मूलात् आलानं बन्धनस्तम्भं "आलानं बन्धनस्तम्भे" इत्यमरः, उन्मूल्योत्पाट्य अत्र समेत्यागच्छति, अत्र स्थितस्त्वं तेन हतः स्या इति पलायस्वेति भावः ॥१४७॥

अथ तस्य पुनरुत्थापनमाह-क्रियेति—

क्रियासमभिहारेण तेनैवं भणितोऽपि सः ।
नैवोत्थितो यदा तावल्लुब्धोऽसावित्यचिन्तयत् ॥१४८॥

तेन जनेन एवमुक्तप्रकारेण क्रियासमभिहारेण पौनःपुन्येन भणितः कथितोऽपि स भानुदत्तः यदा नैवोत्थितः गतनिद्रोऽभूत्, तदा असौ लुब्धः चौरप्रकृतिरिति वक्ष्यमाणप्रकारेण अचिन्तयच्चिन्तितवान् ॥१४८॥

तच्चिन्तामेवाह-पाषाणेति—

पाषाण इव पान्थोऽयं मार्गाऽऽयासाद् न चेतति ।
तदस्य सन्निधेर्वित्तं गृह्णाम्यह्नाय निश्चितम् ॥ १४९ ॥

अयं शयितः पान्थः मार्गस्य मार्गगमनस्यायासात् श्रमाद्धेतोः पाषाण इव न चेतति संज्ञां गच्छति, श्रमाद्धेतोः गाढनिद्रापरवशोऽस्तीत्यर्थः तत्तोऽस्य शयालोः सन्निधेः वित्तं धनमह्नाय शीघ्रमेव निश्चितं गृह्णामि ॥१४९॥

अथ तस्य मणिमोषमाह-विचिन्त्येति—

विचिन्त्यैवं पटीप्रान्तान् शोधयित्वाऽस्य तन्मणिम् ।
प्राप्य तुष्टः प्रणश्याऽगात् पदैर्द्रुतमरैस्ततः ॥१५०॥

एवमुक्तप्रकारेण विचिन्त्य अस्य शयालोर्भानुदत्तस्य पटीप्रान्तान् वस्त्राञ्चलानि शोधयित्वाऽन्विष्य तत् प्राप्तं मणिं वस्त्रबद्धं प्राप्य नीत्वा तुष्टः ततः स्थानात् द्रुततरैः पदैः लघुपादन्यासैः कृत्वा प्रणश्य पलायित्वाऽगात् ॥१५०॥

अथ भानुदत्तस्य निद्राभंगमाह-चीइति—

विहस्तीकृतलोकः स हस्ती तत्र न चाऽऽगमत् ।
व्यबुद्ध भानुदत्तोऽपि हतबुद्धिः क्षणान्तरे ॥१५१॥

स मत्तः विहस्तीकृतः व्याकुलीकृतः लोकः येन स तादृशः "विहस्तो व्याकुलो व्यग्र" इत्यमरः हस्ती तत्र भानुदत्तसमीपे न च नैव आगमत्, हतबुद्धिः मन्दबुद्धिः भानुदत्तोऽपि क्षणान्तरे कालानन्तरः व्यबुद्ध गतनिद्रोऽभूत् ॥१५१॥

अथ तस्य मूर्च्छामाह-स्वेति—

स्वोत्तरीयाञ्चलं रिक्तं दृष्ट्वा मूर्च्छन् पपात सः ।
वातैश्चैतन्यमासाद्य क्रमात् स्वं निजगौतमाम् ॥१५२॥

स भानुदत्तः स्वस्योत्तरीयस्य ऊर्ध्ववस्त्रस्याञ्चलं रिक्तं मणिशून्यं दृष्ट्वा मूर्च्छन् मोहमुपगच्छन् पपात तथा क्रमात् वातैः पवनैः कृत्वा चैतन्यं संज्ञामासाद्य प्राप्य स्वमात्मानं निजगौतमाम् अत्यन्तं निनिन्द ॥१५२॥

अथ तस्य पुनर्द्रव्योपार्जनमाह-प्रविश्येति—

प्रविश्य नगरे तत्र स ततस्ततविक्रमः ।
भृत्यवृत्तिमधिष्ठाय रैसहस्रमुपार्जयत् ॥१५३॥

स भानुदत्तः तत्र समीप नगरे प्रविश्य गत्वा ततोऽनन्तरम् ततविक्रमः समाश्रितपौरुषः सन् भृत्यवृत्तिं दासत्वमधिष्ठाय आश्रित्य रैसहस्रं सुवर्णसहस्रमुपार्जयदर्जितवान् ॥१५३॥

अथ तस्य पुनस्तद्धनमोषणमाह-क्रीत्वेति—

क्रीत्वाऽर्जितधनैः स्वर्णं लात्वा गच्छन् निजं पुरम् ।
ग्रामाद् बहिष्क्वचित् सुप्तः सोऽमोषि परमोषिणा ॥१५४॥

अर्जितधनैः स्वर्णं क्रीत्वा लात्वा तत्स्वर्णं गृहीत्वा निजं पुरं गच्छन् ग्रामाद्बहिः क्वचित्सुप्तः सन् स भानुदत्तः परमोषिणा चौरेण अमोषि चोरितः ॥१५४॥

अथ तद्वैराग्यमाह-वैराग्यमिति—

वैराग्यं परमं प्राप्तः स प्राप्य सुगुरोर्व्रतम् ।
दृष्टिवादमतिस्पष्टमध्यगीष्ट विनांशकम् ॥१५५॥

स भानुदत्तः तत्र समीपस्थे नगरे प्रविश्य गत्वा सुगुरोर्व्रतं दीक्षां लात्वा दृष्टिवादं तदाख्यमागमम् द्वादशमङ्गं अंशकं विना सम्पूर्णमेवातिस्पष्टम् मुखाग्रस्थं अध्यगीष्ट पपाठ ॥१५५॥

अथ तस्य गच्छाधिपत्यमाह-अथो इति—

अथो गच्छाधिपत्येऽसौ गुरुभिः स्थापितः क्रमात् ।
रसगौरवलाम्पट्यं मिष्टभुक्त्या बभाज सः ॥१५६॥

अथो अनन्तरम्, गुरुभिः असौ भानुदत्तः क्रमात् गच्छाधिपत्ये सूरिपदे स्थापितः सन् स भानुदत्तः मिष्टभुक्त्या मिष्ठान्नभोजनेन कृत्वा रसगौरवेषु रसास्वादेपु लाम्पट्यमतिरागम् बभाज प्राप, रसलुब्धोऽभूदित्यर्थः ॥१५६॥

अथ तस्य पुनर्निद्राधीनतामाह-उ० इति—

उल्ललास पुनर्निद्राप्रमादस्तेन तस्य सः ।
संभवेद् मैथुनाऽऽसक्त्या राजयक्ष्मोदयः स्फुटम् ॥१५७॥

तस्य भानुदत्तस्य पुनः तेन रसलोभेन कृत्वा स पूर्वपरिचितः निद्रारूपः प्रमादः उल्लास विस्पष्टोऽभूत्, तत्र दृष्टान्तमाह मैथुने स्त्रीप्रसङ्गे आसक्त्या अधिकप्रवृत्त्या स्फुटं निश्चितम् राजयक्ष्मणः तदाख्यमहारोगस्योदयः प्राप्तिः सम्भवेत्। यथाऽधिकमैथुनेन राजयक्ष्मोदयस्तथा रसलोभेन निद्राधिक्यप्रसङ्ग इति भावः ॥१५७॥

**तस्य निद्रापरवशताधिक्यमाह-प्रतिक्रमणेति—**

**प्रतिक्रमणकालेऽपि नायं जागर्त्ति नित्यशः।**
**निद्रावशंवदः को वा हितं जानाति तत्त्वतः ॥१५८॥**

अयम् भानुदत्तः नित्यशः प्रत्यहः प्रतिक्रमणकालेऽपि आवश्यकक्रियासमयेऽपि, किं पुनरन्यस्मिन् काले इत्यपेरर्थः नैव जागर्ति, किन्तु निद्रायत एव ननु कल्याणकर्मणि प्रमादोऽहित इति चेत्तत्राह निद्रावशंवदः अतिनिद्रालुः को वा जनः तत्त्वतः हितं जानाति ? न कोऽपीत्यर्थः, तत्त्वतोऽहितां निद्रामेवेच्छतीति भावः ॥१५८॥

**अथ शिष्यकृतत्यागमाह-ज्ञात्वेति—**

**ज्ञात्वा तं तादृशं शिष्या अशुद्धान्नवदत्यजन्।**
**विषसंवासितं को वा पद्मं जिघ्रति शुद्धधीः ? ॥१५९॥**

तं भानुदत्तं गच्छेशं तादृशमिति निद्रालुं ज्ञात्वा शिष्या अशुद्धान्नवदकल्प्यान्नमिव अत्यजन्, ननु गुरुत्यागोऽनुचित इतिचेत्तत्राह कः शुद्धधीः निर्मलबुद्धिः पुमान् विषसंवासितं विषमिश्रितं पद्मं कमलं जिघ्रति घ्राणग्राह्यं करोति ? न कोऽपीत्यर्थः, मरणभयादितिभावः तद्वद् गुरुरपि चारित्रशिथिलोऽहितभयात्त्यज्यत एवेति भावः ॥१५९॥

**अथ तस्य श्रुतिविस्मृत्याद्याह-विसेति—**

**विसस्मार प्रमादेन मूढधीस्तेन तच्छ्रुतम्।**
**सम्यग्दर्शनरत्नं च जह्रे चाऽस्य नरेन्द्रवत् ॥१६०॥**

तेन निद्रालुताहेतुना मूढधीः मन्दबुद्धिः सन्, निद्रालोर्हि बुद्धिर्भ्रश्यतीति भावः प्रमादेन निद्रारूपेण कृत्वा तद्दृष्टिवादादिरूपं श्रुतमागममधीतं विसस्मार विस्मृतिमगमयत् अस्य भानुदत्तस्य गच्छेशस्य च सम्यग्दर्शनं तदेव रत्नमिव दुर्लभत्वादुपादेयत्वाच्च रत्नं तद् नरेन्द्रवन्नृपवद् व्यालग्राहिवद्वा जह्रे लुप्तम् विनष्टम् नृपस्य व्यालग्राहिणो वा रत्नहानिरिव यतः सम्यग्दर्शनरत्नहानिः सर्वस्वहानिरित्यर्थः ॥१६०॥

अथ तस्य मृत्याद्याह-एकेति—

एक एव भ्रमल्लोकैर्हस्यमानः पदे पदे
स मृत्वाऽनन्तकायेषु प्रमादात् समपद्यत ॥१६१॥

पदे पदे लोकैः हस्यमान आचारभ्रष्टत्वात् शिष्यादिभिस्तिरस्कृतत्वाच्चोपहस्यमानः एकः एकाक्येय भ्रमन् स भानुदत्तः मृत्वा प्रमादाद्धेतोः अनन्तकायेषु साधारणवनस्पतिषु समपद्यत जज्ञे ॥१६१॥

अथोपसंहरति-ईदगिति—

ईदृग् निद्राप्रमादोऽयं वर्ज्यस्तुर्यस्त्वया नृप ?
मर्मवाक्यवदत्यन्तं विषसंपृक्तभोज्यवत् ॥१६२॥

नृप ! कुरुचन्द्र ! त्वया अयमुक्तप्रकारः ईदृग् अहितसाधकः तुर्यश्चतुर्थः निद्रा एव प्रमादः अत्यन्तम् त्याज्यः, क इवेत्याह—मर्मवाक्यवत् मर्मभेदिवाक्यवत् विषसंपृक्तभोज्यवत् विषमिश्रान्नवच्च यथा हि विषान्नं मृतिसाधकतया त्यज्यते, तथा निद्राख्यप्रमादोऽपि त्याज्य इति भावः ॥१६२॥

अथ स्त्र्यादिकथात्यागमाह स्त्रीति—

स्त्रीभक्तदेशभूपानां कथास्त्याज्या विशारदैः।
प्रत्येकं दूषणं दृष्ट्वा विशिष्टस्वेष्टलिप्सया ॥१६३॥

विशारदैः शुभबुद्धिभिः विशिष्टस्य मुक्त्यादिरूपस्य स्वेष्टस्य निजहितस्य लिप्सया लब्धुमिच्छया हेतुना स्त्रीणाम् भक्तानामशनपानादीनां देशानाम् भूपानां च कथाः प्रत्येकं स्त्र्यादिप्रत्येकं कथायां दोषं वैगुण्यं दृष्ट्वा त्याज्या वर्जनीया ॥१६३॥

स्त्र्यादिकथासु प्रत्येकं दोषमेव दर्शयन्नाह स्त्रीति—

स्त्रीकथाप्रतिपत्तेः स्याद् मनसः सानुरागता।
कज्जलस्य प्रसङ्गेन कालिमा किं न संभवेत् ॥१६४॥

स्त्रीणां कथायाः तदङ्गादिहावादिचर्चायाः प्रतिपत्तेः करणात् मनसः सानुरागता स्त्रीविषयासक्तिः स्यात्, ननु कथामात्रेण कुत एतदिति चेत्तत्र दृष्टान्तमाह कज्जलस्य मपेः प्रसङ्गेन सम्पर्केण कालिमा न सम्भवेत् किम् ! अपितु भवेदेव, तद्वत् स्त्रीणां कथातः तासु प्रसक्तिर्नियमतो जायते इति भावः ॥१६४॥

अथ भोज्यकथादोषमाह भोज्यस्येति—

भोज्यस्य कथया पुंसां भोज्ये लम्पटता भृशम्।
सौहित्यं न प्रजायेत तद् विना ना पशूपमः ॥१६५॥

पुंसां भोजनस्य भक्ष्यस्य, उपलक्षणत्वात्पेयादेरपि, कथया वार्तया भोज्ये विषये भृशमत्यन्तं लम्पटता स्वादलालसता. जायते इतिशेषः, ततश्च. हेतोः, सौहित्यं तृप्तिः "सौहित्यं तर्पणं तृप्ति" रित्यमरः । न प्रजायते, इतरेतरभोज्याकाङ्क्षासत्त्वादिति भावः । तद् सौहित्यं विना ना पुरुषः पशूपमः पशुसदृशः पशुरिव यत्तद् भोक्तुमिच्छतीति भोज्यकथा तृप्तिमिच्छता त्याज्येत्यर्थः ॥१६५॥

अथ देशकथां दूषयन्नाह तद्विति—

तत्तद्देश्यैः समं देशकथा पुंसां विरोधिताम् ।
विदधाति यतो निन्दां स्वदेशस्य सहेत कः ॥१६६॥

तैः तैः विविधैः देश्यैः देशोद्भवैः समं सह पुंसां देशकथा देशगौरवादितारतम्यकथा विरोधितां विदधाति. तत्र हेतुमाह—यतः कारणात् स्वदेशस्य निन्दां कः सहेत ? न कोऽपीत्यर्थः ॥१६६॥

अथ नृपकथादोषमाह राज्ञामिति—

राज्ञां कथाऽपि निर्बन्धात् क्रियमाणाऽप्यनर्थदा ।
नरेन्द्र ! माधवस्येव नरस्याऽलिपतमाधव ! ॥१६७॥

राज्ञां कथाऽपि नृपगुणदोषवार्ताऽपि निर्बन्धात्प्रपाताक्रियमाणा अनर्थदाऽपि अनर्थकारिण्येव, तत्र दृष्टान्तमाह—अलिप्तः न्यूनः कृतः वञ्चर्यादिना माधवः कृष्णः येन स तत्सम्बोधनेऽलिपतमाधव ! नरेन्द्र नृप ! कुलचन्द्र ! माधवस्य तदाख्यस्य नरस्येव, अनर्थदेति ॥१६७॥

कथामेव प्रस्तौति तथाहीति—

तथा हि भरतार्धेऽत्र दक्षिणे श्रीपुरं पुरम् ।
अविवासं प्रकुर्वत्या यस्याऽऽख्या पप्रथे श्रिया ॥१६८॥

कथाप्रस्तावोऽत्रास्मिन् भरतस्यार्धे दक्षिणे दक्षिणभरते श्रीपुरं तदाख्यं पुरम् नगरं अस्तीति शेषः श्रिया लक्ष्म्या अविवासं वसतिं प्रकुर्वत्या सत्या यस्य श्रीपुरस्याख्या नाम पप्रथे ख्यातम् ॥१६८॥

तत्र भूपमाह भूप इति ।

भूपो भुवनपालोऽत्र भुवनाऽवनविक्रमः ।
बभूव भूवधूभालचित्रनिर्माणकर्मठः ॥१६९॥

अत्र श्रीपुरे भुवनस्य लोकस्यावने रक्षणे विक्रमो यस्य स तादृशः भुव एव वध्वाः भाले ललाटे चित्रनिर्माणे तिलकरचने कर्मठः निपुणः पृथ्व्यां तिलक इव भुवनपालस्तदाख्यो भूपो बभूव ॥१६९॥

अथ तद्भार्यामाह तस्येति—

तस्यासीत् प्रभवत्प्रेमवल्लीवनघनप्रभा ।
सुन्दरी रूपसंपत्त्या देवी भुवनसुन्दरी ॥१७०॥

तस्य भुवनपालस्य प्रभवत्याः रोहमाणायाः प्रेम्णः एव वल्ल्याः वनस्य घनप्रभा मेघतुल्या वल्ल्या घन इव प्रेम्णः वर्धिका रूपसंपत्त्या रूपाधिक्येन सुन्दरी भुवनसुन्दरी तदाख्या देव्यासीत् ॥१७०॥

अथ तत्र माधववणिजमाह सदिति—

सज्जनानन्दकृन्नन्दनन्दमित्रातनूभवः ।
तत्र माधवनामाऽभूद् वणिग् दोषनिकेतनम् ॥१७१॥

तत्र श्रीपुरे सज्जानानामानन्दकृतः सज्जनस्नेहिनः नन्दस्य तदाख्यस्य श्रेष्ठिनो नन्दमित्रायाः तदाख्यायास्तत्स्त्रियश्च तनूभवः पुत्रः दोषाणां निकेतनम् दुष्टः माधवनामा वणिगभूत् ॥१७१ ॥

अथ सभायां वनिताकथामाह अन्यदेति—

अन्यदा नागरा रागात् सभामध्यमधिश्रिताः ।
उपचक्रमिरे कर्तुमन्योऽन्यं वनिताकथाः ॥१७२॥

अन्यदैकदा सभामध्यम् अधिश्रिताः सभायामुपविष्टाः नागराः रागात् साग्रहं वनिताकथाः स्त्रीविषयालापान् कर्तुम् उपचक्रमिरे प्रवृत्ताः ॥१७२॥

स्त्रीकथोपक्रममेवाह निवेदयतेति—

निवेदयत भोः ! कस्य जाताः क्व कोपवर्त्तने ।
रोचन्ते वनिता यावदित्युक्ते कोऽपि नाऽभ्यधात् ॥१७३॥

भोः ! सभासदः ! निवेदयत कथयत, किमिति चेत्तत्राह कस्य क्व क्व कस्मिन् कस्मिन् उपवर्तने देशे "देशविषयौ तूपवर्त्तनमि" त्यमरः जाताः वनिताः रोचन्ते इष्टाः, यावदित्युक्ते उक्तप्रकारप्रश्ने कोऽपि जनः नाभ्यधात् उत्तरं न ददौ ॥१७३॥

अथ माधवकृतोत्तरमाह माधव इति—

माधवस्तावदाचष्ट स्मयमानमुखाम्बुजः ।
संसदन्तः स्थितः सत्यं रोचते मम केरली ॥१७४॥

तावत्ततः स्मयमानमीषत्स्मितम् मुखाम्बुजं यस्य स तादृशः अहं [illegible] [illegible]नपटुश्चेत्येवं महत्तयाऽऽत्मप्रकाशनेन चेषत् स्मितं कुर्वन्नित्यर्थः संसदः सभायाः [illegible]

स्थितः माधवस्तदाख्यो वणिगाचष्ट किमित्याह—मम माधवस्य केरली केरलदेशोद्भवा स्त्री रोचते, सत्यम्, मदुक्तम् सत्यत्वेन प्रतिपद्यतामित्यर्थः ॥१७४॥

**केरलीविषये स्वस्य रागाधिक्यमाह अहो ? इति--**

अहो केरलदेशीयस्त्रीगुणौघेन पूरिते ।

हृदये नाऽवकाशोऽस्ति परासां योषितां मम ॥१७५॥

अहो इति सहर्षस्वाशंसायाम्, केरलदेशीयानां स्त्रीणाम् गुणौघेन पूरिते मम माधवस्य हृदये परासामन्यासां योषितां कृते अवकाशः रिक्तं स्थानं नास्ति, केरलीष्वेव गुणवैलक्षण्यान्मम रागो नान्यास्वित्यर्थः ॥१९५॥

**अथ केरलस्त्रियं वर्णयति मनोभवेति—**

मनोभवारिणा दग्धो दृशा मानसनन्दनः ।

मन्ये केरलदेशीयस्त्रीभिरुज्जीवितो दृशा ॥१७६॥

मनोभवः कामस्तदरिः शिवस्तेन दृशा नेत्राग्निना दग्धः भस्मसात्कृतः मानसनन्दनः कामदेवः केरलदेशीयस्त्रीभिः दृशा नेत्रेण कृत्वा उज्जीवितः पुनर्जीवितः कृतः मन्ये शङ्के, दृशादग्धस्य दृशोज्जीवनमुचितमेवेति भावः । केरलीनां नेत्राणि तद्व्यापाराश्च कामजनका इत्यर्थः ॥१७६॥

**अथ केरलस्त्रीणां कामकलानैपुण्यमाह अपेक्षन्त इति--**

अपेक्षन्ते युवानो ये कामकेलिकुतूहलम् ।

स्त्रियं केरलदेशीयां सेवन्तां ते सुखैषिणः ॥१७७॥

ये युवानः कामकेलौ रतिक्रीडायां कुतूहलमपेक्षन्ते इच्छन्ति, ते तादृशा युवानः सुखैषिणः रतिसुखाभिलाषिणः सन्तः केरलदेशीयां स्त्रियं सेवन्ताम्, तासां कामकलासु निपुणत्वादिष्टसिद्धेरिति भावः ॥१७७॥

**अथ तत्र कस्यचिद्वितर्कमाह इदमिति –**

इदं तन्मुखतः श्रुत्वा कुमारश्चन्द्रशेखरः ।

तत्पार्श्वेऽवस्थितश्चित्ते क्षणमेवं व्यकल्पत ॥१७८॥

तस्य माधवस्य मुखतः इदमुक्तप्रकारं श्रुत्वा तस्य माधवस्य पार्श्वे अवस्थितः कुमारश्चन्द्रशेखरः तदाख्यः चित्ते क्षणम् एवं वक्ष्यमाणप्रकारम् व्यकल्पदितर्कितवान् ॥१७८॥

**तद्वितर्कमेवाह किमिति--**

किमेष मे प्रियायोगमाससाद कथञ्चन ।

स्त्रियं केरलदेशीयां यत् प्रशंसति सादरम् ॥१७९॥

एष माधवः कथञ्चन जारकर्मादिना मे मम प्रियायाः योगं सम्पर्कमाससाद प्राप, किमिति वितर्के, नन्वेतादृशवितर्के किं बीजमिति चेत् तत्राह—यद्यतः सादरं साग्रहं केरलदेशीयां स्त्रियं प्रशंसति, ? नहि केरलस्त्रीसम्पर्कं विना तद्गुणोपलम्भसम्भवः केरली च ममैव स्त्री न तस्येति तादृशप्रशंसया वर्त्तते तादृशवितर्कावसर इति भावः ॥१७९॥

अथ तस्य दुर्ध्यानमाह पुरे इति—

पुरेऽत्र काऽपि नान्याऽस्ति केरली मत्प्रियामृते ।
तदेनमसिना दुष्टं शीर्षच्छेद्यं करोमि किम् ॥१८०॥

अत्रास्मिन् श्रीपुरे मम प्रियाम् ऋते विहाय अन्या काऽपि स्त्री केरली केरलदेशीया नाऽस्ति, तदेवं एनं तत्सम्पर्कोऽनेन कृत इति भावः । तत्ततो हेतोः दुष्टं परस्त्रीदूषकमेनंमाधवम् किमिति प्रश्ने । असिना खड्गेन शीर्षेण छेद्यस्तम् तादृशम् करोमि किं शीर्षं छिनद्मि इति स्वमनसि विचारः परस्त्रीदूषको हि शीर्षच्छेदमेवार्हतीति भावः ॥१८०॥

अथ तस्य विचारान्तरमाह—अन्येदेति—

अन्यदा वा हनिष्यामीत्येवं संचिन्त्य चेतसि ।
राजसूः स समुत्तस्थौ पृष्ठतोऽप्यस्य माधवः ॥१८१॥

वा अथवा अन्यदा कालान्तरे हनिष्यामि माधवमिति शेषः सहसा विदधीत न क्रिया-मित्युक्तेरिति भावः । इत्येवमुक्तप्रकारं चेतसि संचिन्त्य स राजसू राजपुत्रः चन्द्रशेखरः समुत्तस्थौ सभाया उत्थितवान् अस्य चन्द्रशेखरस्य पृष्ठतः पश्चान्माधवोऽपि, समुत्तस्थाविति सम्बध्यते ॥१८१॥

अथ दासीगमनमाह—तदेति—

तदा माधवमभ्येत्य तत्प्रिया किङ्करीति तम् ।
अन्वयुङ्क्त महाभाग ! मत्स्वामी विद्यतेऽत्र किम् ॥१८२॥

तदा तस्मिन्काले तस्य चन्द्रशेखरस्य प्रियायाः किङ्करी दासी माधवमभेत्य माधवसमीप-मागत्य तं माधवमितीत्थमन्वयुङ्क्त पप्रच्छ, तदेवाह— महाभाग ! मम स्वामी ईशः चन्द्रशेखरः अत्र विद्यते किमिति प्रश्ने ॥१८२॥

तथ माधवकृतोत्तरमाह—प्रागिति—

प्रागासीद्धुनाऽत्राऽस्ति वेति न वेति न वेद्म्यहम् ।
इत्युक्ते तेन सा सौधं व्यावृत्यैव समागमत् ॥१८३॥

प्राग्पुरा आसीदत्राभूत्, अधुना अत्रास्ति नास्ति वा इतीदमहं न वेद्मीतीत्थं तेन माधवेनोक्ते सति सा व्यावृत्य पश्चाद्वलित्वा सौधं स्वप्रासादमेव समागमत् ॥१८३॥

अथ कुमारस्य तदवलोकनमाह—कुमार इति—

कुमारोऽपि वदन्तं तं प्रेक्ष्य स्वप्रेष्यया समम् ।
दूरस्थः प्राग्विकल्पं तं सत्यमेवाऽभ्यमन्यत ॥१८४॥

कुमारः चन्द्रशेखरकुमारः अपि दूरस्थः दूरतः तं माधवं स्वस्य प्रेष्यया दास्या समं सह वदन्तमाभाषमाणं प्रेक्ष्य तं प्राक्पुरा जातं विकल्पं स्वस्त्रिया माधवसम्पर्करूपवितर्कं सत्यमेवाभ्यमन्यत निश्चितरूपेणाजानात् ॥१८४॥

अथ तत्कृतमाधववधमाह— न्यहन्निति—

न्यहन् निशातया छुर्या धावित्वा सोऽपि माधवम् ।
विवेकविकलाः प्रायः कर्म कुर्वन्ति किं न वा ? ॥१८५॥

स चन्द्रशेखरकुमारोऽपि धावित्वा क्रोधावेशाज्झटिति गत्वा निशातया अतितीक्ष्णया छुर्या असिधेनुकया माधवं न्यहन् हतवान्, ननु एतदनुचितमित चेत्तत्राह— प्रायः विवेकविकलाः मिथ्यावितर्कादिनोपहतमतयो जनाः किं कर्म न वा कुर्वन्ति ? अपि तु सर्वमेव वधादिकं कर्म कुर्वन्तीत्यर्थः । दुष्टप्रवृत्तौ विवेक एव बाधक इति भावः ॥१८५॥

अथ माधवस्य घातपीडामाह— तेनेति—

तेन घातेन दूनः स विलुलोठ विचेतनः ।
तादृग् वीरस्य घातो हि किं दुःखं विदधातु न ? ॥१८६॥

तेन चन्द्रशेखरकृतच्छुरिकाप्रहारकृतेन घातेन व्रणेन विचेतनः गतचेतनः विरलः स माधवः विलुलोठ पृथिव्यामालोटयामास, घाततीव्रतया तथा भवत्येवेत्याह— हि यतः वीरस्य शक्तिमतः तादृक् छुरिकादिकृतः घातः प्रहारः किं दुःखं न विदधातु ? अपि सर्वमपि विचेतनत्वादिकं भूमिलुठनादिकं च विदधात्वेवेति यावत् ॥१८६॥

अथ तस्य व्रणशोधनमाह —पित्रेति—

पित्रा प्रक्षिप्य पल्यङ्के नीतः स व्रणशोधनैः ।
सज्जीचक्रे क्रमादेवं स्त्रीकथाऽनर्थकारणम् ॥१८७॥

पित्रा माधवपित्रा नीतः उत्थाप्य गृहं प्रापितः पल्यङ्के प्रक्षिप्य स्थापयित्वा स माधवः व्रणशोधनैः व्रणचिकित्सनैः कृत्वा क्रमात् सज्जीचक्रे स्वस्थीकृत', एवमुक्तप्रकारेण स्त्रीकथा अनर्थस्य कारणम्, भवतीति विरुद्धेति शेषः ॥१८७॥

अथोपसंहरन् स्त्रीकथात्यागमाह—स्त्रीति—

स्त्रीकथामवबुद्ध्यैवमनर्थस्य निबन्धनम् ।
कुरुचन्द्र ! महीपाल ! कृपणोपास्तिवत् त्यजेः ॥१८८॥

महीपाल ! कुरुचन्द्र ! एवमुक्तप्रकारेण स्त्रीकथामनर्थस्य निबन्धनम् कारणमवबुद्ध्य ज्ञात्वा कृपणस्य उपास्तिवत् सेवावत्त्यजेः एष शुभः पंथा इति भावः ॥१८८॥

अथ भोज्यकथात्यागे दृतान्तमाह-अधीति-

अधिगोष्ठि निविष्टोऽसावन्यदा भोज्यसंकथाम् ।
कुर्वन्नित्यवदद् ह्योऽभूद् भोज्यं तस्य गृहे वरम् ॥१८९॥

अन्यदा असौ माधवः अधिगोष्ठि गोष्ठ्याम् निविष्ट उपविष्टः सन् भोज्यसंकथां कुर्वन्नीतीत्थमवदत् इतीति किमित्याह तस्य माधवस्य गृहे ह्यः गतदिने वरं स्वादूत्तमं च भोज्यमभूत् ॥१८९॥

अथ मोदकादि वर्णयति-तटस्थ इति—

तटस्थ एव यत् तत्र भोज्याद्यं तदचीकरम् ।
किञ्च यो मोदकस्तत्र तन्मूल्यं भुवनेऽपि न ॥१९०॥

यथतः तत्र महानसे तटस्थः समीपस्थ एव यद् भोज्याद्यं व्यञ्जनसूपादि तदचीकरम् कारितवान्, अहमिति शेषः अहमेव महानसे तटस्थः सन् भोज्यादि कारितवानिति तादृशभोज्यसंपादने मत्कौशल्ययोग इति स्वस्य गुणवत्त्वं प्रतिपादितमिति भावः स्वश्लाघार्थं मोदकमपि वर्णयति किञ्च तत्र महानसे यो मोदकः कृत इति शेषः तस्य मोदकस्य मूल्यम् भुवने अखिलेऽपि जगति न नास्ति, अनुपमोऽसौ मोदक इत्यर्थः ॥१९०॥

अथ तद्भोजनतो वैगुण्यमाह—इतश्चेति—

इतश्च पौरमाणिक्यश्रेष्ठिनाऽत्र महामहे ।
अभूद् भुक्तं तदन्नादि तेन चैतस्य यातना ॥१९१॥

इतश्च पक्षान्तरे अत्र महामहे भोज्यसमारम्भरूपे उत्सवे तदन्नादि भक्तव्यञ्जनादि पौरेण नागरेण माणिक्येन तदाख्येन श्रेष्ठिना भुक्तमभूत् तेन तदन्नादिभोजनेन च एतस्य माणिक्यश्रेष्ठिनः यातना तीव्रवेदना, अभूदिति शेषः, अन्नादेः विगुणतया उदरपीड़ा जातेत्यर्थः ॥१९१॥

अथ चिकित्सकादिविचारमाह-तत इति—

ततः पीड़ाऽपनोदाय समाहूतैर्भिषग्वरैः ।
स ऊचे पाचितं येन तद्भोज्यं स च पृच्छ्यताम् ॥१९२॥

ततः पीडोत्पत्तेरनन्तरम् पीडाया अपनोदाय चिकित्सनायाऽऽहूतैः भिषग्वरैः वैद्यश्रेष्ठैः स माणिक्यश्रेष्ठी ऊचे, किमित्याह येन पुरुषेण तद् भवद्भुक्तं भोज्यं पाचितम्, स च स एव पृच्छ्यताम्, कीदृशं पाचितमिति स प्रष्टव्यः पाकवैगुण्यमेवात्र हेतुरिति भावः ॥१९२॥

**तत्पृच्छाप्रयोजनमाह-चिकीति—**

**चिकित्स्यते यथा तस्य निदानस्याऽनुमानतः ।**
**इत्याकर्ण्य वचस्तेषामिभ्यः स्वान् प्रैषयद् नरान् ॥१९३॥**

यथा येन प्रकारेण तस्य निदानस्य पीडाकारणस्यानुमानतः, भोज्ये जातवैगुण्याद्यनुमानतः चिकित्स्यते चिकित्सा क्रियते, नहि निदानं विना चिकित्सासंभव इति भावः इत्युक्तप्रकारं तेषां वैद्यानां वचनं आकर्ण्य इभ्यः माणिक्यश्रेष्ठी स्वान् स्वकीयान् नरान् भृत्यादीन् प्रैषयत् माधवाह्वानाय प्रेषितवानित्यर्थः ॥१९३॥

**अथ माधवस्यागमनाऽनिच्छामाह-तदिति—**

**तज्ज्ञातुं तेऽपि गच्छन्तः प्रवृत्तिं तां च माधवम् ।**
**कुर्वन्तमाह्वयत् सोऽपि तत्राऽऽगन्तुं न वाञ्छति ॥१९४॥**

तद् भोज्यनिर्माणप्रकारं ज्ञातुं प्रष्टुं गच्छन्तः ते माणिक्यश्रेष्ठिपुरुषाः तां प्रवृत्तिं भोज्यसम्पादनक्रियां कुर्वन्तं माधवमाह्वयन् च, स माधवोऽपि तत्र तेषां पार्श्वे आगन्तुं न वाञ्छतीच्छति, स्वकृतदोषभियेति भावः ॥१९४॥

**अथ तेषां बलात्तदानयनमाह-यष्टिभिरिति—**

**यष्टिभिस्ताडयित्वा तैः स तत्पार्श्वमनीयत ।**
**तेनोचे रसवत्यां रे ! तस्यां किं क्षेपितं त्वया ॥१९५॥**

तैः माणिक्यश्रेष्ठिपुरुषैः यष्टिभिस्ताडयित्वा, बलात्कारेणेत्यर्थः स माधवः तस्य माणिक्यश्रेष्ठिना ऊचे, किमित्याह रे इति भर्त्सनसम्बोधनम् त्वया माधवेन तस्यां रजन्याम् "रजनी यामिनी तमी"त्यमरः सरस्वत्यां पाके किं कीदृशं वस्तु क्षेपितम् निहितम् ? तद्वस्तु महद्वैगुण्यकरमिति तादृशवस्तु क्षेपतस्त्वं महानपराधीति भावः ॥१९५॥

**तद्वैगुण्यमेवाह-तस्या इति—**

**तस्या भोजनमात्रेण ममाङ्गे वेदनाऽस्ति यत् ।**
**प्राञ्जलीभूय स प्रोचेऽपाचयं न च किञ्चन ॥ १९६ ॥**

यद्यतः तस्यास्त्वत्कृतरसवत्याः भोजनमात्रेण मम माणिक्यश्रेष्ठिनः अङ्गे शरीरे वेदना पीड़ा अस्ति, स माधवः प्राञ्जलीभूयाञ्जलिं बध्वा, भयादिति भावः । प्रोचे, किमित्याह- किञ्चन वैगुण्यकरं न च नैवापाचयम् ॥ १९६ ॥

अथ श्रेष्ठिकृतापराधारोपमाह-अभाषिष्टेति :—

अभाषिष्ट ततः श्रेष्ठी रुष्टस्तं प्रति दुष्ट रे।
निह्नुवानोऽभ्युपेतं स्वं दोषकारी त्वमेव मे॥ १९७॥

ततः माधवप्रतिवचनानन्तरम्, रुष्टः क्रुद्धः श्रेष्ठी माणिक्यश्रेष्ठी तं माधवं प्रत्यभाषिष्ट, किमित्याह रे दुष्ट स्वं स्वयमभ्युपेतं स्वीकृतम् वा निह्नुवानोऽपलपन् त्वम् माधव एव मे मम दोषकारी पींडोत्पादकः, स्वकृतस्यापि स्वयमस्वीकारे दोषो निश्चीयते इति भावः॥ १९७॥

तत्ताडनमाह-तदिति—

तद्भृत्यैः पीड्यमानोऽसौ श्रेष्ठिनोऽस्य निदेशतः।
कथञ्चिद् बीजिनाऽमोचि लगित्वा पाणिपादयोः॥ १९८॥

अस्य श्रेष्ठिनः माणिक्यश्रेष्ठिनः निदेशतः तस्य माणिक्यश्रेष्ठिनः भृत्यैः पीड्यमानस्ताड्यमानोऽसौ माधवः बीजिना माधवपित्रा पाणिपादयोः लगित्वा श्रेष्ठिपादावुपसंगृह्य, दोषक्षमापनार्थमिति भावः कथञ्चिन्महता प्रयत्नेनामोचि दण्डमुक्तः कृतः॥ १९८॥

अथोपसंहरति-एवमिति

एवं भक्तकथाऽप्येषा प्रकृत्याऽनर्थकारणम्।
विवेकिभिस्ततो वर्ज्या मलिनस्त्रीवदन्वहम्॥ १९९॥

एवमुक्तनिदर्शनेन हेतुना एषा भक्तकथा भोज्यवार्ताऽपि प्रकृत्या स्वभावत एव अनर्थकारणम्, माधववदिति भावः ततस्तस्मादनर्थकारणत्वाद्धेतोः विवेकिभिः धीमद्भिः मलिनस्त्रीवत्, अन्वहं सदैव वर्ज्या त्याज्या॥ १९९॥

अथ देशकथां दूषयितु प्रस्तौति -अन्येद्युरिति :—

अन्येद्युः सोऽपि वाचालश्चालयन् रसनां निजाम्।
प्रारेभे माधवो देशकथामेव जनान्तिके॥ २००॥

अन्येद्युः सोऽपि स एव पुरा निदर्शित एव वाचालः कुत्सितबहुभाषी माधवः निजां रसनां जिह्वां चालयन् व्यापारयन्, कुत्सितं बहु वदन्, जनान्तिके पारसमक्षं देशकथामेव प्रारेभे॥ २००॥

अथ माधवकृतदेशकथामेवाह-देशेष्विति—

देशेषु मगधाभिख्यो देशो वर्णनमर्हति।
एक एव ग्रहाधीशो ग्रहेष्विव मनीषिणाम्॥ २०१॥

देशेषु मगधाभिख्यः मगधनामा एक एव देशः वर्णनमर्हति वर्णनीयः, मनीषिणाम्, तत्र निदर्शनमाह ग्रहेषु बुधादिग्रहेषु ग्रहाधीशः सूर्य इव, नान्य इत्यर्थः॥ २०१॥

तस्यैव वर्णनीयत्वे तद्वशिष्टमाह-महिष्य इति—

महिष्य इव भूपानां पुण्डरीकाणि बिभ्रति ।
यत्र वाप्यः प्रभूतानि समर्था जीवनांहतौ ॥ २०२ ॥

यत्र मगधदेशे वाप्यः दीर्घिकाः "वापी तु दीर्घिका" इत्यमरः जीवनांहतौ जलदाने समर्थाः "पयः कीलालममृतं जीवनमिति' 'त्यागाद्यंहति पर्यन्तन्त्रयोदश दानस्य" इतिचामरः सदा जलपूर्णा इत्यर्थः भूपानां महिष्यः पट्टराज्ञ्यः इव, प्रभूतानि पुण्डरीकाणि सिताम्भोजानि पुण्डरीकं सिताम्भोजमि"त्यमरः बिभ्रति, नत्वन्यो देशस्तथेति स एव वर्णनीयः इत्यर्थः ॥ २०२ ॥

अथ तत्रत्यसरांसि वर्णयति-अस्मिन्नीति—

अस्मिन् सरांसि कमलोपचितानि कामं,
भूमीभुजामिव महाभवनानि सन्ति ।
तृष्णां निहन्तुमुदयः स बभूव येषां,
क्षीराणि येषु बहवोऽपि जनाः पिबन्ति ॥ २०३ ॥

अस्मिन् मगधदेशे सरांसि भूमीभुजां राज्ञां महाभवनानि इव काममत्यर्थं कमलैः पद्मैः कमलेन जलेन च "कमलं जल"मित्यमरः पक्षान्तरे कमलाभिश्च उपचितानि समृद्धानि, सन्तीति शेषः तथा येषां सरसां स तादृश उदयः विपुलता उत्तालता वा बभूव, येषु तृष्णां निहन्तुं पिपासामपनोदितुम् बहवोऽपि जनाः क्षीराणि नीराणि "नीरक्षीराम्बुशम्बरमि" त्यमरः पिबन्ति ॥ २०३ ॥

अथ तत्रत्य प्रपां वर्णयति—यत्रेति—

यत्र प्रपाः प्रतिपथं सुकृतोपलम्भ-
संरम्भसम्भृतजनैर्विहिता विभान्ति ।
यासां रसेन सुहिताः परितापजात-
मन्तःस्थितं निधनितां पथिका नयन्ति ॥२०४॥

यत्र मगधदेशे प्रतिपथं मार्गे मार्गे सुकृतस्य पुण्यस्योपलम्भार्थं यः संरम्भः सादरारम्भः तत्र संभृतैः व्यापृतैः जनैः पुण्योपार्जनतत्परैः जनैः विहिताः प्रवर्त्तिताः प्रपाः पानीयशालाः विभान्ति, यासां प्रपाणां रसेन जलेन सुहिताः पानादिना तृप्ताः पथिकाः अन्तःस्थितं परितापजातं पिपासादिरूपं दुःखं तापं च निधनितां नाशं नयन्ति प्राप्यन्ति ॥२०४॥

अथ तत्राऽऽरामान् वर्णयति-यत्रेति—

यत्राऽऽरामा विविधविटपिश्रेणिभिः सर्वकालं,
विभ्राजन्ते विविधविटपिश्रेणयश्चापि पुष्पैः।
पुष्पाण्यद्धा भ्रमरनिकरैरापतद्भिः समन्ताद्,
झङ्कारौघैर्भ्रमरनिकरः श्रोत्रपेयाभिरामैः ॥ २०५ ॥

यत्र मगधदेशे आरामाः उपवनानि "आरामः स्यादुपवनमि" त्यमरः विविधानां नानाप्रकाराणां विटपिनां वृक्षाणां श्रेणिभिः सर्वकालं सर्वदैव विभ्राजन्ते शोभन्ते, विविधानां विटपिनां श्रेणयश्चापि पुष्पैः कृत्वा, विभ्राजन्ते, अद्धा पुनः निश्चयेन पुष्पाणि समन्तात् सर्वतः आपतद्भिः सुरभिमकरन्दलोभात्स्वयमागच्छद्भिः भ्रमरनिकरैः भ्रमरसमूहैः, विभ्राजन्ते भ्रमरनिकराश्च श्रोत्रपेयैः सादरं सप्रीति च श्रोत्रग्राह्यैः, श्रोत्रदसुखजनकैरिति यावत् अत एव अभिरामैः मनोज्ञैः झङ्कारौघैः मत्तगुञ्जनौघैः विभ्राजन्ते, अत्र पूर्वं पूर्वं प्रति परस्य विशेषणत्वेनोपन्यासादेकावल्यलङ्कारः, "यदुक्तम् पूर्वं पूर्वं प्रति विशेषणत्वेन परम् स्थाप्यतेऽपोह्यते वा चेत्स्यात्तदैकावली मते"ति ॥ २०५ ॥

अथ तत्र दुर्भिक्षाऽभावं वर्णयति-नानेति—

नानाप्रकारकलमैरुपजायमानै-
र्दूर्वावदुप्तिविरहेऽपि महेशयोग्यैः।
दुर्भिक्षनाम जनताभिरधीयते न
दुःस्वप्नवत् प्रमदपीवरचारुचित्तैः ॥ २०६ ॥

यत्र मगधदेशे, उप्तिविरहेऽपि बीजवपनाद्यकरणेऽपि, अयत्नमेवेति यावत्, एतेन मगधभूमेरयत्नफलद्रूपतोक्ता, दूर्वावत् तृणविशेष्यवदुपजायमानैः उत्पद्यमानैः महेशयोग्यैः धनाढ्योचितैः नानाप्रकारैः कलमैः व्रीहिविशेषैः कृत्वा प्रमदेन प्रहर्षेण पीवराणि उदाराणि, दुःखासम्पृक्तानीति यावत् अत एव चारूणि सद्वृत्तीनि चित्तानि येषां तैस्तादृशैः जनताभिः जनसमूहैः दुर्भिक्षस्य नामापि, किमुत अर्थरूपं तद्वस्तु, इति भावः, दुःस्वप्नवत्, यथा दुःस्वप्नं न वदन्ति तथेत्यर्थः अनुक्ते स्वप्नफलाभाव इति नैमित्तिकोक्तेरिति भावः न अधीयते उच्यते सर्वदा तत्र सुभिक्षमेव, भवतीति भावः अत्र जनताभिरित्यस्य विशेष्यस्यानुरोधेन प्रमदापीवरचारुचित्ताभिरित्येवं विशेषणस्यापि स्त्रीत्वमेव न्याय्यम्, एवञ्च प्रमदपीवरचारुचित्तैरिति प्रामादिकः प्रयोग इत्यवधेयम् ॥ २०६ ॥

ननु तर्हि निन्द्यः को देश इत्याकांक्षायामाह-नृप इति--

नृपो भुङ्क्ते तीर्थद्रविणमपि तद्यात्रिकजनैः,
प्रदत्तं स्वश्रद्धाभरविवशचित्तैः सुकृतिभिः।
स्वयं यस्मिँल्लोकद्वयभयमजानन्नविरतं,
सुराष्ट्राख्यो राष्ट्रः स पुनरिह निन्द्यो मतिमताम् ॥ २०७ ॥

इह अत्र लोके स प्रसिद्धः सुराष्ट्राख्यराष्ट्रः जनपदः मतिमतां निन्द्यः, तत्र हेतुगर्भं विशेषणमाह यस्मिन् सुराष्ट्रदेशे नृपः सुकृतिभिः पुण्यशालिभिः स्वस्य यः श्रद्धाभरः तीर्थदानरुच्यतिशयः तेन कृत्वा विवशचित्तैः तदधीनचित्तैः श्रद्धालुभिरित्यर्थः यात्रिकजनैः तीर्थयात्राऽऽगतजनैः प्रदत्तं तीर्थभक्त्याऽर्पितं तीर्थद्रविणमपि तीर्थद्रव्यमपि, अन्यद्रव्यस्य तु कथैव केति भावः लोकद्वयस्येहलोकस्य परलोकस्य भयम्, इह लोके तीर्थद्रव्यग्रहणान्निन्दा परत्र च शास्त्रनिषिद्धपरिग्रहान्नरकादि, तद्द्वयं भयमजानन् जानन्नप्यगणयन्नविरतं स तमेव स्वयं भुङ्क्ते व्यवहरति, एवञ्च यन्नृपो निषिद्धाचारपरायणः स देशो निन्द्य एवेत्यर्थः ॥ २०७ ॥

सुराष्ट्रनिन्दने हेत्वन्तरमाह श्रीमदिति—

श्रीमद्युगादिजिननेमिजिनाधिनाथ-
श्रीसोमनाथमुखतीर्थपरम्परायाम् ।
सत्यं जनाः सुकृतमादधते न यत्र
यात्रागतानपि तुदन्ति च चौर्यवृत्त्या ॥२०८॥

यत्र सुराष्ट्रदेशे श्रीमतां युगादिजिनस्य वृषभप्रभोः नेमेस्तदाख्यस्य जिनाधिनाथस्य श्रीसोमनाथमुखस्य श्रीसोमनाथप्रभृतिदेवस्य तीर्थानां भवतरणसाधनानां तत्तद्देवाधिष्ठितपुण्यक्षेत्राणां श्रीशत्रुञ्जयगिरिनारप्रभासपत्तनादीनां परम्परायां श्रेण्यां सत्यमपि जनाः सुकृतं पुण्यकर्म नादधते कुर्वन्ति प्रत्युत तीर्थयात्राया तीर्थयात्रोद्देशेन आगतानपि च यात्रिकान् चौर्यवृत्त्या वस्त्राभरणाद्यपहरणेन कृत्वा तुदन्ति पीडयन्ति, एवञ्च तादृशदुराचारिजनपूर्णो देशो निन्दनीय एवेति भावः ॥२०८॥

अथ तेन माधवनिग्रहमाह-एतदिति—

एतद् माधवभाषितं श्रुतिगतं कृत्वा सुराष्ट्रामहा-
राष्ट्रीयैर्निजदेशनिन्दनतया कोपप्रकम्पाधरैः ।
राज्ञोः द्वाःस्थपदं दधद्भिरभितो यष्ट्याद्यिभिस्ताडितः,
पित्राऽमोचि कथञ्चिदेव रुधिराकृष्ट्या स सञ्जीकृतः ॥२०९॥

एतदुक्तप्रकारम् माधवस्य भाषितं वचनं श्रुतिगतं कृत्वा श्रुत्वेत्यर्थः, राज्ञः द्वाःस्थपदं दधद्भिः द्वारपालैरित्यर्थः सुराष्ट्ररूपमहाराष्ट्रोद्भवैः सुराष्ट्रमहाराष्ट्रीयैः निजदेशस्य निन्दनतया विगोपनया कृत्वा कोपेन प्रकम्पाः स्फुरन्तोऽधरा अधरोष्ठा येषां तैः तादृशैरतिकुपितैः सद्भिः अभितः पार्श्वद्वयतः यष्ट्यादिभिस्ताडितः स माधवः कथञ्चिदनुनयप्रार्थनादिनैव पित्रा माधवपित्रा अमोचि, रुधिराणां ताडनजन्यरक्तानामाकृष्ट्याऽपाकरणेन, चिकित्सादिनेति भावः सञ्जीकृतः स्वस्थः कृतश्च ॥२०९॥

अथ कथामुपसंहरन्नाह-एवमिति—

एवं देशकथाऽप्यनर्थजननी संत्यज्यतां दूरतः,
क्षोणीजम्भरिपो ! श्मशानकलसीवाऽऽतङ्कसम्पादिनी ।
सर्वस्याऽपि सुखाय संभवति यत् श्लाघा प्रसन्नेदुवद्
दुःखस्याऽभ्युदयं तनोति विहिता निन्दा च हास्यादपि ॥२१०॥

क्षोणीजम्भरिपो ? महीन्द्र ! एवमुक्तप्रकारेण अनर्थजननी अनिष्टकारिणी श्मशानस्य यमसदनस्य कलसीव आतङ्कसम्पादिनी भयजनिका देशकथापि अपिना पूर्वोक्तवनिताकथादिसंग्रहः । दूरतः एव सन्त्यज्यताम् न क्रियतामेव कदापीत्यर्थः सामान्योपन्यासेन तत्समर्थयन्नाह यथतः श्लाघा चाटूक्तिः प्रसन्नेन्दुवन्निर्मलचन्द्रवत् सर्वस्यापि सुखाय मनःप्रीतये सम्भवति, निन्दा च हास्यादपि परिहासमाश्रित्यापि, किम्पुनर्यथार्पिताः विहिता कृता सती दुःखस्य अभ्युदयं तनोति दुःखमेवोत्पादयतीत्यर्थः ॥२१०॥

अथ राजकथाजन्यानर्थदृष्टान्तं विवर्णयिषुः प्रस्तौति-क्ष्मापमिति—

क्ष्मापं व्यज्ञपयत् कदाचन सुधीश्रीसिंहदत्ताभिधः,
सामन्तस्तव देव ? देशमपभीर्विट्चण्डसेनो वली ।
हा ! विश्रंसयति प्रचण्डवलयुग् दुर्गप्रविष्टः स चा-
ऽस्माकं दुर्ग्रह इत्यवेत्य भवता युक्तं समाचर्यताम् ॥२११॥

कदाचन सुधीः श्रीसिंहदत्ताभिधः सामन्तः क्ष्मापं श्रीपुरेशं व्यज्ञपयत् न्यवेदयत, किमित्याह देव ! हा ! इति खेदे, प्रचण्डवलयुक् विशालपराक्रमशालिसैन्यसमन्वितः अत एव अपभीः वली वलवान् विट्नृपः चण्डसेनः तदाख्यः तव श्रीपुरेशस्य देशं मण्डलं विस्रंसयति ध्वंसयति, ननु स तर्हि युष्माभिर्निगृह्यतामिति चेत्तत्राह स चण्डसेनश्च दुर्गप्रविष्टः दुर्गसंश्रितः अत एव, अस्माकं सामन्तानां दुर्ग्रहः दुःसाध्यः, अनिग्राह्य इत्यर्थः दुर्गसंश्रितो हि स रक्षितत्वाद् दुःसाध्यो भवतीति भावः इत्यस्माभिस्तद्दुःसाध्यत्वमवेत्य ज्ञात्वा भवता श्रीपुरेशेन युक्तमवसरोचितम् समाचर्यताम् विधीयताम्, इदृशेऽवसरे यद्युक्तं प्रतिभाति, भवता तद्विधीयतामित्यर्थः ॥२११॥

अथ राज्ञोऽभियानाद्याह-तच्छ्रुत्वेति—

तच्छ्रुत्वा स च देशसीमनि ययौ सर्वाभिसारेण राट्,
सोऽप्यभ्यागमदग्रणीर्बलवतां द्राक् चण्डसेनः सरुट् ।
लग्नं संख्यमसंख्यनग्ननुतयोरप्येककालं तयो—
र्भग्ने तेन बले नृपस्य सबलो राज्ञा विजिग्येऽथ सः ॥२१२॥

तत्सामन्तनिवेदितं श्रुत्वा स राट् नृपः श्रीपुरेशश्च सर्वाभिसारेण सर्वसैन्यादि सहैव नयन् इत्यर्थः । देशसीमनि स्वमण्डलप्रान्ते यत्र चण्डसेनोपद्रवस्तत्र देशे इत्यर्थः ययौ, स चण्डसेनोऽपि सरुट् सक्रोधः सन् बलवतामग्रणीः महाबलवान् सन् द्रागभ्यागमत् युद्धाय सम्मुखमागतवान्, अथ असंख्यैः बहुभिः नग्नैः विरुदपाठकादिभिः नुतयोः स्तुतयोस्तयोः श्रीपुरेशचण्डसेनयोः एककालं युगपत् सङ्ख्यं युद्धम् लग्नम् प्रवृत्तम् तेन राज्ञा श्रीपुरेशेन नृपस्य चण्डसेनस्य बले सैन्ये भग्ने नाशिते सति सबलोऽवशिष्टसैन्यसहितः स च चण्डसेनः विजिग्ये पराजितः ॥२१२॥

अथ श्रीपुरेशकृतचण्डसेननिग्रहाद्याह-नष्ट इति—

नष्टो नष्टप्रतिष्ठः कतिपयसुभटैः सार्धमेष प्रविष्टो
दुर्गे दुर्गे विशिष्टः शकुनिरिव तरोः श्येनभीत्या कुलाये
दुर्गं रुद्ध्वा समन्तात् प्रबलबलतया चण्डसेनं च बद्ध्वा
व्यावृत्तो वीक्ष्य शून्यं स्वपुरमथ नरं कञ्चनाऽपृच्छदीशः ॥२१३॥

नष्टा प्रतिष्ठा बलादि महत्त्वं यस्य स तादृशः एष चण्डसेनः नष्टः पलायितः कतिपय-सुभटैः सार्धं विशिष्टः वर्तिकाख्यादिर्लघुः कश्चित् शकुनिः पक्षी "शकुंतः पक्षी शकुनी"त्यमरः श्येनस्य स्वनामप्रसिद्धस्य पक्षिणो भीत्या तरोः कुलाये नीडे इव दुर्गे दुर्गमे दुर्गे कोट्टे प्रविष्टः स्वरक्षणार्थमिति भावः अथ ईशः श्रीपुरेशः प्रबलबलतया प्रबलपराक्रमतया प्रबलसैन्यतया च समन्तात् सर्वतः दुर्गं रुद्ध्वा निरुद्धवीवधासारप्रसारादिरूपं कृत्वा चण्डसेनं च बद्ध्वा निगृह्य व्यावृत्तः परावृत्तः सन् स्वपुरं श्रीपुरं शून्यम् विजनं वीक्ष्य कञ्चन नरमपृच्छत् ॥२१३॥

अथ पुरुषकृतप्रतिवचनाद्याह-स इति—

स प्रोचे नृपते ! कुतोऽपि समभूद् भीः किंवदन्तीदृशी
यच्चण्डः स च चण्डसेनचरटः क्ष्मापं पराजेष्यते ।
तल्लोकाः प्रपलायनं कुरुत भोः आकर्ण्य चैतज्जनाः
सर्वे नेशुरतो बभूव नगरं शून्यं समग्रं तत्र ॥२१४॥

स राज्ञा पृष्टः नरः प्रोचे, किमित्याह नृपते ! कुतोऽपि मदज्ञातात् कारणादीदृशी भीः किंवदन्ती भयजनकजनश्रुतिः समभूत्, इदृशीति किमित्याह यत् चण्डः अत्यन्तक्रोधशीलः चण्डस्त्वत्यन्तकोपनः" इत्यमरः चण्डसेनचरटः तस्करः विशालसैन्यश्च स चण्डसेनः क्ष्मापं श्रीपुरेशं पराजेष्यते पराभविष्यति, तत्तस्माद्धेतोः भोः लोकाः ! प्रपलायनं स्ववित्तादिरक्षार्थम् इतः शीघ्रं गमनं कुरुत, एतदुक्तप्रकारमाकर्ण्य च सर्वे जनाः पुरवासिनः नेशुः पलायामासुः अतो हेतोः तव श्रीपुरेशस्य समग्रं नगरं श्रीपुरं पुरं शून्यं विजनं बभूव ॥२१४॥

**अथ माधवनिग्रहमाह मूलोत्पत्तिमिति—**

मूलोत्पत्तिं प्रवृत्तेरपि विरचयता माधवोऽज्ञायि राज्ञा
जिह्वाच्छेदेन मृत्युं स झगिति गमितो दुर्गतिं प्राप पापः।
इत्थं राज्ञः कथेयं कथमपि विहिता दुर्जनस्यैव मैत्री
कूलच्छायेव भव्या भवति न नृपते ? त्यज्यतां तत् प्रयत्नात् ॥२१५॥

राज्ञा प्रवृत्तेः तादृशजनप्रवादादिप्रसारणरूपायाः मूलोत्पत्तिं मूलम् प्रवृत्तेराद्यं प्रवर्त्तकं विरचयता शोधयता सता माधवः अज्ञायि माधव एव तन्मूलमिति ज्ञातम्, अतः स पापः पापकर्मा माधवः जिह्वाच्छेदेन जिह्वाच्छेदरूपदण्डेन कृत्वा झटिति मृत्युं गमितः प्रापितः दुर्गतिं नारकादिगतिं प्राप, इत्थमुक्तप्रकारेण इयमीदृशयुक्तप्रकारा राज्ञः कथा कथमपि दुर्जनस्य मैत्री इव विहिता कृता सती कूलच्छाया नदीतटच्छायेव, भव्या हितकारिणी न भवति, नृपते कुरुचन्द्र! तत्तस्मान्नृपकथा प्रयत्नात् प्रयत्नपूर्वकम् त्यज्यताम् ॥२१५॥

**सम्प्रत्युपसंहरन्नाह ईदगिति—**

ईदृक् पञ्चप्रमादप्रकृतिपरिहृते धर्ममेवाऽऽदधानः
साधुश्चित्तैकशुद्ध्या दशविधमतुलं सत्तितिक्षादिभेदात्।
श्राद्धः सम्यक्त्वमूलं द्व्यधिकदशविधाऽणुव्रतादिप्रभेदं
सिद्धिं प्राप्नोति राजन्नविकलसकलप्राप्तकल्याणमालः ॥ २१६ ॥

राजन्! ईदृशानां पञ्चानां प्रमादानां क्रोधादीनां परिहृतेः परिहारपूर्वकम् सत्तितिक्षादिभेदाद्दशविधमतुलमनुपमं धर्ममादधानः कुर्वन् चित्तैकशुद्ध्या साधुः शुद्धचित्तवृत्तिः सन् मुनिः सम्यक्त्वमूलं यस्य तादृशं द्व्यधिकदशविधं द्वादशविधमणुव्रतादिप्रभेदं धर्ममादधानः अविकलं सम्पूर्णं यथास्यात्तथा सकला सर्वा प्राप्ता कल्याणमाला येन स तादृशः प्राप्तसमग्रसम्पूर्णहितः श्राद्धः श्रावकः सिद्धिं मुक्तिं प्राप्नोति ॥ ५१६ ॥

आसीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः
पट्टे श्रीगुणभद्रसूरिसुगुरुस्याद्वादवादोद्धतः
तच्छिष्येण कृतेऽत्र सप्तदशकः श्रीशांतिवृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽगमत् प्रोज्ज्वलः ॥ २१७ ॥

व्याख्यातप्रायोऽयं श्लोकः ।

इति श्रीमन्मुनिभद्रसूरिकृतशान्तिनाथचरिते शासनसम्राट्सूरिचक्रचक्रवर्ति-परमसद्गुरु श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कारावाप्तन्यायवाचस्पतिशास्त्रविशारदविरुदश्रीमद्विजयदर्शनसूरीश्वर-सन्दृब्धप्रबोधिनीव्याख्यायाम्

सप्तदशः सर्गः



अर्हम्

## अथ अष्टादशः सर्गः

अथ सर्गादौ टीकाकारमांगलिकस्तुतिमाह

व्याख्यातो नो कदाचित् कृतिभिरयमहो स्पष्टमष्टादशाख्यो,
प्रोद्दामेहप्रवृत्ते हृदयरुचिकृते वर्णने लब्धजन्मा।
सव्याख्यं सञ्चितोऽसौ प्रथयतु भुवने दर्शनाख्येन शश्वत्
सूरीशा सज्जनानां मुदमतुलमरं वर्धयन् स्पर्धयेव ॥

सर्गादौ चरितनायकं ध्येयतया स्तौति जानन्तीति

जानन्ति यं ध्यानसमाधिमास्थिताः पराहतान्तःकरणप्रवृत्तयः
विध्वस्तदुष्कर्मचया यतीश्वराः स शांतिनाथस्तनुतां शुभानि वः ॥ १ ॥

ध्यानसमाधिं ध्यानैकतानतामास्थिताः शुभध्यानमग्ना इत्यर्थः पराहताः प्रत्याहताः विषयेभ्यो निवर्त्तिता अन्तःकरणप्रवृत्तयो यैस्ते तादृशाः ध्यानप्रभावात् स्थिरवृत्तय इत्यर्थः अतः एव विध्वस्तदुष्कर्मचयाः विनष्टाशुभकर्मनिचयाः घातिकर्ममलशून्या यतीश्वरा यं जानन्ति ज्ञानविषयं कुर्वन्ति, विशुद्धज्ञानोपयोगेन पश्यन्ति, स योगिजनध्येयः शान्तिनाथः वः श्रोतृपाठकानां शुभानि तनुताम् चिन्तामणिन्यायेन ध्यानादिना करोतु अत्र सर्गे प्रायो द्वादशाक्षरोपजाति–च्छन्दः ॥१॥

अथ पूर्वसर्गपरिशिष्टमूलां कथां प्रस्तौति श्रुत्वेति--

श्रुत्वा त्रिलोकीगुरुदेशनां मुदा ऽऽलुप्तः सुधाकुण्ड इवाऽखिलैः समम्।
नत्वाऽथ नाथं कुरुचन्द्रभूपति–र्व्यजिज्ञपच्छान्तिजिनं शुभाकरम् ॥२॥

अखिलैः स्वपरिजनादिभिरुपस्थितैरन्यैश्च समं सह त्रिलोकीगुरोः षोडशतीर्थङ्करस्य देशनां श्रुत्वा अथानन्तरम् सुधाकुण्डे इव मुदा हर्षेण आप्लुतः आर्द्रमनाः कुरुचन्द्रभूपतिः नत्वा नाथं शुभाकरम् कल्याणकरं शान्तिजिनं व्यजिज्ञपत् प्रार्थयामास ॥२॥

तद्विज्ञप्तिमेवाह प्राज्यमिति--

प्राज्यं प्रभो! राज्यमवापमीदृशं विशुद्धसंवेदन ? केन कर्मणा ?
पञ्चातिरिक्तं न समेत्युपायने कदापि वस्त्रञ्चफलांशुकादिकम् ॥३॥

विशुद्धसंवेदन ! अतिनिर्मलज्ञान ! प्रभो ! स्वामिन् ! केन कर्मणा ईदृशं वर्त्तमानं विशालं रप्राज्यं राज्यमवापम् आप्तवान्, अहमिति शेषः तथा उपायने मम लोककृतोपहारे पञ्चभ्योऽतिरिक्तमन्यद् वस्त्वश्वफलांशुकादिकम् कदापि न समेति ममोपायने पञ्चसंख्यकमेव वस्त्वायाति न तु ततोऽधिकमिति केन कर्मणा तथा जायते इति वदेत्यर्थः ॥३॥

**प्रश्नान्तरमाह तदिति—**

**तद्दित्सुरेवेष्टजनाय सर्वदा स्वयं न भुञ्जे स्पृहयालुरप्यहम् ।**
**त्वस्मै प्रयच्छामि न चाऽपि जातुचिद् बुभुत्सुरत्राऽस्मि जिनेन्द्र ! कारणम् ॥४॥**

जिनेन्द्र ! तदुपायनागतं वस्तु इष्टाय प्रियायाभिमताय वा जनाय सर्वदा दित्सुर्दातुमिच्छुरेव, भवामीतिशेषः स्वयमग्राह्यत्वमाह अहं कुरुचन्द्रः स्वयं स्पृहयालुरपि उपभोक्तुमिच्छन्नपि न भुञ्जे, प्रयच्छामि ददामि न जातुचित्कदापि, अत्र स्वयमनुपभोगेऽन्यस्मै दानाभावे च कारणं बुभुत्सुर्जिज्ञासुरस्मि ॥ ४ ॥

**अथ तीर्थङ्करकृतोत्तरमाह शान्तीति--**

**शान्तिप्रभुः प्रत्यवदद् महाद्भुतं सुपात्रदानप्रतिपत्तितः स्वयम् ।**
**यत् पञ्चभिः पञ्चजनैः समर्जितं निशम्यतां तत् सुकृतं धरापते ? ॥५॥**

शान्तिप्रभुः प्रत्यवदत् प्रत्युत्तरं ददौ, तदेवाह धरापते ! राजन् सुपात्रदान प्रतिपत्तितः सुपात्रदानत इत्यर्थः स्वयमात्मना पञ्चभिः पञ्चसंख्यकैः पञ्चजनैः पुरुषैः 'स्युः पुमांसः पञ्चजनाः पूरुषाः पुरुषा नरा" इत्यमरः । सहेति शेषः, यन्महाद्भुतं सुकृतं समर्जितमुपार्जितं तन्निशम्यताम् ॥५॥

**तदेवाह अत्रेति—**

**अत्राऽस्ति याम्ये भरतेऽमरावती-पुरी समं कोशलदेशभूषणम् ।**
**क्षीराब्धिपुत्र्याः परमं निकेतनं महापुरं श्रीपुरसंज्ञया श्रुतम् ॥ ६ ॥**

अत्रास्मिन् याम्ये दक्षिणे भरते अमरावती पुरी सममिन्द्रनगरीतुल्यं कोशलदेशस्य भूषणमिव भूषणम्, क्षीराब्धेः पुत्र्याः लक्ष्म्याः परमं सर्वाधिकम् निकेतनं स्थानम्, लक्ष्मीसमृद्धमित्यर्थः श्रीपुरसंज्ञया श्रुतं महापुरमस्ति ॥ ६ ॥

**अथ तत्र वणिङ्निवासमाह चत्वारीति—**

**चत्वारि मित्राणि वणिक्कुलोद्भवा-न्यवात्सुरस्मिन् पुटभेदनोत्तमे ।**
**साम्यातिगप्रीतिपदं परस्परं क्रमेण तेषामभिधा इमाः स्मृताः ॥७ ॥**

अस्मिन् प्रस्तुते पुटभेदनोत्तमे नगरश्रेष्ठे श्रीपुरे वणिक्कुलोद्भवानि चत्वारि चतुःसंख्यानि मित्राण्यवात्सुः वसन्ति स्म तानि च, परस्परम् साम्यातिगायाः अनुपमायाः प्रीतेः पदम्, आसन्निति-शेषः तेषां मित्राणामभिधाः नामानि क्रमेण इमा वक्ष्यमाणाः स्मृताः ॥ ७ ॥

तन्नामान्येवाह आद्य इति -

आद्योऽनवद्यः सुधन महाधनः पतिर्द्वितीयो धनपूर्वकः स्मृतः ।
ततस्तृतीयो धनदो महाशयो यथार्थनामा चरमो धनेश्वरः ॥ ८ ॥

आद्यः प्रथमः अनवद्यः प्रशस्यः महाधनः धनाढ्यः सुधनः तदाख्यः । द्वितीयः धनपूर्वकः पतिः धनपतिरित्याख्यः स्मृतः, ततस्तृतीयः महाशयः धनदः तदभिधानः आसीदितिशेषः चरमोऽन्तिमश्च तुर्यः यथार्थनामा अर्थानुगुणनामा धनेश्वरः स्मृतः ॥ ८ ॥

अथ तेषां धनार्जनाय परदेशगमनं युग्मेनाह सिध्यन्तीति—

सिध्यन्ति पुंसां न मनोमनोरथाः कदाचन द्रव्यमपास्य पुष्कलम् ।
संसारसर्वस्वसुखाभिलाषिणा-मिति स्वचित्ते परिभाव्य ते मिथः ॥ ९ ॥
द्रोणाभिधानं पुरुषं महाबलं समुद्यतं शम्बलभारवाहने ।
कृत्वा वसूपार्जनहेतवेऽचलन् समे मणिद्वीपदिदृक्षयाऽन्यदा ॥ १० ॥

संसारे सर्वस्वम् सारभूतं सुखमभिलषन्तीति तेषां संसारसर्वस्वसुखाभिलाषिणां पुंसाम् पुष्कलम् प्रचुरं द्रव्यं धनमपास्य ऋते कदाचन मनोमनोरथाः स्वमनोरथाः न सिध्यन्ति, इतीत्थं मिथः परस्परम् स्वचित्ते परिभाव्य विचार्य ते समे सर्वे चत्वारः, अन्यदा एकदा द्रोणाभिधानं पुरुषं महाबलं भारवहनसमर्थमित्यर्थः शम्बलस्य पाथेयस्य भारवहने समुद्यतं कृत्वा द्रोणं भारवहने नियुज्येत्यर्थः वसूपार्जनहेतवे धनार्जनाय मणिद्वीपस्य दिदृक्षया अचलन् प्रस्थिताः ॥ ९ ॥ १० ॥

अथ तेषां शम्बलाल्पतामाह उत्तेरुरिति--

उत्तेरुरेकां गहनां महाटवीं दिनैरनेकैः पथि तेऽधिसंकथाः
प्रक्षीणकल्पं च बभूव शम्बलं प्रभूतमानीतमपि व्यये सति ॥ ११ ॥

ते चत्वारः पथि मार्गे अधिसंकथाः कथालापप्रवृत्तयः सन्तः अनेकैः दिनैः कृत्वा एकां गहनां महाटवीमरण्यमुत्तेरुः प्राप्ताः उत्तरन्ति स्म इति यावत्, शम्बलं पाथेयं च प्रभूतमानीतमपि व्यये सति भुक्ते सति प्रक्षीणकल्पं प्रातर्भोजनमपि यत्र नास्ति तादृशं बभूव ॥ ११ ॥

अथ तत्र मुनिदर्शनमाह—कश्चिदिति—

कश्चित् तदा ते प्रतिमासमाश्रितं व्यलोकयंल्लोकनतं तपोधनम् ।
पञ्चेन्द्रियाणामनुशासनं रहो त्रिधातुमन्योऽन्यविरोधिनां स्थितम् ॥१२॥

तदा वने प्राप्ते शम्बले क्षीणप्राये च सति, ते चत्वारः प्रतिमासमाश्रितं कायोत्सर्गध्यानस्थं लोकनतं जनप्रणतम् अन्योन्यविरोधिनाम् परस्परविषयाग्राहित्वेन विरुद्धानाम् । पञ्चेन्द्रियाणाम् त्वगादीनाम् रहः विजनेऽनुशासनं निग्रहम् विधातुं कर्तुमिन्द्रियनिग्रहतत्परं स्थितं कञ्चित्तपोधनं मुनिम् व्यलोकयन् दृष्टवन्तः ॥ १२॥

**अथ तेषां दानभावनामाह—अस्मै इति—**

> अस्मै मुनीन्द्राय शमैकमूर्तये प्रदाय किञ्चित् सफलं विदध्महे ।
> जन्म स्वकं चेति विचिन्त्य ते क्षणं हितं जगुर्द्रोणमिदं सचेतसः ॥१३॥

शमस्य एकमूर्तये शमस्वरूपायास्मै दृष्टाय मुनीन्द्राय किञ्चित्प्रदाय स्वकं जन्म सफलं कृतकृत्यं विदध्महे कुर्मः, तदेव जन्मफलं यत्सुपात्रे दानमिति भावः । इति च क्षणं विचिन्त्य सचेतसः सुमनसस्ते चत्वारः द्रोणं भारवाहकपुरुषमिदं वक्ष्यमाणं हितं हितवचनं जगुः ॥१३॥

**तद्वचनमेवाह-द्रोणेति—**

> द्रोण ! त्वमस्मै परमर्षयेऽधुनाऽविशिष्टपाथेयविभागतो मनाक् ।
> देहीति तैर्व्याहृत एष तोषवानमंस्ततद्वाक्यमुदारमानसः ॥१४॥

द्रोण ! त्वम् अस्मै दृष्टिगोचराय परमर्षये अधुना अवशिष्टस्य पाथेयस्य विभागतोऽशतः पाथेयस्य यदवशिष्टं तत एव मनागल्पमपि देही इतीत्थं तैश्चतुर्भिर्व्याहृतः आज्ञप्तः उदारमानसः दानैकचित्तवृत्तिः एष द्रोणः तोषवान् प्रीतः सन् तद्दानविषयकं वाक्यममंस्त स्वीकृतवान् ॥१४॥

**अथ तस्य मुनये दानमाह-तेभ्य इति—**

> तेभ्यश्चतुर्भ्योऽप्यधिकां स भावनां वहन् मुनिं तं प्रतिलाभ्य तत्क्षणम् ।
> कर्माऽर्जयामास भवान्तरांहसां क्षये महाभोगफलं निरर्गलम् ॥१५॥

स द्रोणः तेभ्यः सुधनादिभ्योऽपि । चतुर्भ्योऽधिकं भावनां विशुद्धमनोवृत्तिं वहन् धारयन् तत्क्षणमेव तं मुनिं प्रतिलाभ्य प्रदाय भवान्तराणामंहसां दुष्कृतानां क्षये नाशे सति निरर्गलमप्रतिहतम् महाभोगफलं च शुभफलकारकं कर्म अर्जयामास ॥१५॥

**अथ तेषां धनार्जनपूर्वकं स्वपुरागमनमाह-रत्नेति—**

> रत्नान्तरीपं क्रमतोऽधिगम्य ते सतां निषेव्यं व्यवहारमाश्रयन् ।
> तत्राऽर्जयित्वा द्रविणं मनीषितं पुनर्निजं ये नगरं समागमन् ॥१६॥

ते सुधनादयः क्रमतः रत्नान्तरीपं रत्नद्वीपमधिगम्य प्राप्य सतामुत्तमानां निषेव्यं करणीयं व्यवहारं वणिक्कर्म आश्रयन् आश्रितवन्तः । तत्र रत्नद्वीपे मनीषितं यथेष्टं द्रविणमर्जयित्वा ते सुधनादयः पुनः निजं नगरं श्रीपुरं समागमन् आगन्तवन्तः ॥१६॥

अथ तेषां सुखप्राप्तिमाह- पञ्चेति—

पञ्चाऽप्यनन्दन् सुकृतेन तेन ते सुपात्रदानप्रतिपत्तिजन्मना ।
किं केवलज्ञानमवाप्तमादितो महोदय-ऽऽनन्दपदं ददाति न ? ॥१७॥

ते पञ्चापि सुधनादयो द्रोणश्च तेन पूर्वकृतेन सुपात्रदानप्रतिपत्तिजन्मना सुपात्रदानजातेन सुकृतेन पुण्येन आनन्दं प्राप्तवन्तः, ननु दानस्य सद्य एव कुतः फलमिति चेत्तत्र दृष्टान्तमाह- केवलज्ञानमवाप्तं प्राप्तं सदादितः आदौ अन्तमुहूर्त्ते एव महतः उदयस्य आनन्दस्य च पदं सिद्धशिलारूपं किं न ददाति अपि तु ददात्येव, तस्य तत्त्वभाव्यादित्यर्थः । तथा दानमप्युत्कृष्टं चेत्सद्य एव फलतीति भावः ॥१७॥

अथ तेषु पञ्चसु प्रत्येकं मनोवृत्तिवैषम्यमाह- मायाविनाविति—

मायाविनौ किञ्चिदुभौ वणिक्सुतौ, द्वितीयतुर्यावपरौ त्वमायिनौ ।
स द्रोणकस्तेषु विशुद्धभावनाविभावितात्मा परमस्ति शस्तधीः ?

उभौ द्वौ द्वितीयतुर्यौ धनपतिधनेश्वरौ वणिक्सुतौ किञ्चिन्मायाविनौ सकपटौ, अपरौ प्रथमतृतीयौ सुधनधनदौ तु अमायिनौ निष्कपटौ, सरलावित्यर्थः । परं तथा तेषु पञ्चसु स भारवाहकः द्रोणकः द्रोणः विशुद्धया भावनया विभावित आत्मा यस्य स तादृशः शुद्धाशयः शस्तधीः विमलबुद्धिरस्ति ॥१८॥

अथ तेषां पुनर्भवावाह—

द्रोणो विपद्य प्रथमं स तेष्व भू-र्नृपाङ्गजस्त्वं । नृप ! हस्तिनापुरे ।
त्रैलोक्यलोकाशयविस्मयावहं सुपात्रदानस्य विजृम्भितं न किम् ? ॥ १९ ॥

नृप ! तेषु पञ्चसु प्रथममादौ स द्रोणः भारवाहकः विपद्य मृत्वा हस्तिनापुरे नृपाङ्गजः त्वं कुरुचन्द्रोऽभूः एतच्च सुपात्रदानस्यैव फलमित्याह सुपात्रदानस्य विजृम्भितं परिणामप्रकर्षः त्रैलोक्यस्य लोकत्रयस्य लोकानामाशयानां विस्मयावहमाश्चर्यजनकं न भवतीतिशेषः अपि तु भवत्येवेत्यर्थः ॥ १९ ॥

अथ कुरुचन्द्राभिधाने हेतुमाह गर्भेति—

गर्भावतीर्णे त्वयि चाऽऽम्बया सुखे विशन् विधुः स्वप्न उदैक्षि यत्परम् ।
तेनैव वप्ता तव नाम निर्ममे महे महद्धे कुरुचन्द्र इत्यपि ॥ २० ॥

त्वयि द्रोणजीवे गर्भे अवतीर्णे प्राप्ते सति यद्यतः परमतिशयेन अम्बया त्वन्मात्रा स्वप्ने मुखे विधुश्चन्द्रो विशन्नुदैक्षि दृष्टः, तेनैव हेतुना वक्षा त्वत्पिता महे जन्मोत्सवे प्रवृद्धे जाते सति कुरुचन्द्र इति तव नामापि निर्ममे ॥ २० ॥

**अथ सुधनपुनर्भवमाह संप्राप्येति--**

**संप्राप्य मृत्युं सुधनो वणिक्सुतः क्रमेण काम्पिल्यपुरे पुरोत्तमे ।**
**जज्ञे समृद्ध्याढ्यवणिक्तनूभवो वसन्तदेवोऽभिधयाऽत्र विश्रुतः ॥ २१ ॥**

वणिक्सुतः सुधनः तदाख्यः क्रमेण कालक्रमेण मृत्युं सम्प्राप्य पुरेषु उत्तमे काम्पिल्यपुरे तदाख्यनगरे अत्र भरते समृद्ध्या आढ्यस्य प्रचुरधनवतो वणिजः तनूभवः पुत्रः अभिधया नाम्ना वसन्तदेवः विश्रुतः प्रसिद्धः जज्ञे जातः ॥ २१ ॥

**अथ धनदपुनर्भवमाह संजातेति--**

**संजातमृत्युर्धनदो निजायुषः क्षये क्रमेणाऽजनि कृत्तिकापुरे ।**
**श्रीकामपालः प्रतिपन्नपालनै-कतानचित्तः प्रथितोऽभिधानतः ॥ २२ ॥**

धनदः तदाख्यः क्रमेण निजायुषः क्षये संजातमृत्युः मृतः सन् कृत्तिकापुरे अभिधानतः नाम्ना श्रीकामपालः प्रथितः ख्यातः प्रतिपन्नानां शरणागतानां प्रतिपन्नायास्स्वीकृतायाः प्रतिज्ञायाः पालने एकतानं तत्परं चित्तं यस्य स तादृशो अजनि जातः ॥ २२ ॥

**अथाविशिष्टयोर्द्वयोः पुनर्भवमाह मायेति—**

**मायावशात् तावपि वाणिजौ मृतौ पतीशसंज्ञौ धनपूर्वकौ क्रमाद् ।**
**पुत्र्यावभूतां वणिजोर्यथाक्रमं मदोद्धतैका मदिराऽथ केशरा ॥ २३ ॥**

तौ द्वौ धनपूर्वकौ पतीशसंज्ञौ धनपतिधनेश्वरनामानौ वाणिजावपि मायावशात्कपटस्वभावत्वाद्धेतोः क्रमतः मृतौ सन्तौ यथाक्रमं क्रमशः वणिजोः पुत्र्यावभूताम्, मदोद्धता उन्मत्ता एका प्रथमा धनपतिजीवः मदिरा तन्नाम्नी, अथ परा धनेश्वरजीवः केशरा तदाख्या मदोद्धता जातेतिशेषः ॥ २३ ॥

**अथ तयोः नगराद्याह आद्येति--**

**आद्याऽभवच्छङ्खपुरे महोत्तमे परा जयन्त्यां पुरि ते क्रमेण च ।**
**चत्वार एतेऽपि विशीर्णशैशवा समासदन् यौवनमङ्गदीपनम् ॥ २४ ॥**

ते द्वे मदिराकेशरे क्रमेण च आद्या मदिरा महोत्तमे शङ्खपुरेऽभवत् परा केशरा च जयन्त्यां पुरि जयन्तीनगर्यां अभवत् । एते त्वदतिरिक्ताश्चत्वारोऽपि विशीर्णशैशवाः व्यतीतबाल्यकालाः सन्तः अङ्गदीपनम् अङ्गशोभाजनकं यौवनं युवावस्थां समासदन्नाश्रितवन्तः ॥ २४ ॥

अथ वसन्तदेवस्य धनार्जनमाह आपृच्छयेति--

आपृच्छ्य वप्तारमसौ परेद्यवि-वसन्तदेवो विभवाऽर्जनेच्छया ।
यातो जयन्त्यां पुरि तत्र चार्जयद् धनानि कुर्वन् व्यवहारमादरात् ॥ २५ ॥

परेद्यवि एकदा असौ सुधनजीवः वसन्तदेवः विभवस्य धनस्यार्जनेच्छया वप्तारं पितरमापृच्छ्य पितुरनुज्ञां प्राप्य जयन्त्यां पुरि यातः गतः तत्र जयन्तीपुरे च आदरात्सदाशयपूर्वकं व्यवहारं वणिक्-कर्म कुर्वन् धनानि आर्जयदुपार्जयत् ॥२५॥

अथ तस्योद्यानगमनमाह-स इति--

सोऽन्येद्युरुद्यानमियाय नन्दनं जयत् स्वलक्ष्म्या रतिनन्दमाह्वयम् ।
चन्द्रोत्सवं द्रष्टुमदृष्टसाध्वसो यदृच्छयाऽतुच्छतयाऽष्टमीदिने॥२६॥

अन्येद्युरेकदा सः वसन्तदेवः अदृष्टसाध्वसः निर्भीकः सन् अष्टमीदिने अतुच्छतया महत्या यदृच्छया-कृत्वा चन्द्रोत्सवं द्रष्टुम् स्वलक्ष्म्या स्वशोभया कृत्वा नन्दनं प्रसिद्धदेववनं जयत् पराभवद्रतिनन्दनाह्वय मुद्यानमियाय ययौ, अष्टमीदिने चन्द्रोत्सवो भवतीति भावः ॥२६॥

अथ तत्रान्योन्यकेशरावसन्तदेवयो रागाधानमाह तत्रेति --

तत्राऽऽगतां वीक्ष्य स चापि केशरां सरागचेताः समजायत क्षणात् ।
सा तं च सातं ददतं सुचक्षुषां भवान्तरोत्था प्रियता हि नान्यथा ॥२७॥

तत्रोद्याने स वसन्तदेवश्चापि आगतां केशरां तदाख्यवणिक्सुतां वीक्ष्य क्षणात्तत्कालमेव सराग-चित्तकेशरायां प्रीतिमान् समजायत, सा केशरा च सातं सुखं, ददतम् दर्शनेनेति भावः.तं वसन्तदेवं वीक्ष्य सरागचेताः समजायतेत्यर्थाल्लभ्यते, नन्वेवं कुतो जातमिति चेत्तत्राह--हि यतः सुचक्षुषां सम्यग्दृ-ष्टीनाम् भवान्तरोत्था भवान्तरजातप्रीतिजन्या, प्रियता भवतीति शेषः; अन्यथा भवान्तरहेतुं विना, न नैव ॥२७॥

अथ वसन्तदेवस्य केशराजिज्ञासामाह पार्श्वेति-

पार्श्वस्थितं स्वस्य स वाणिजाङ्गजं प्रियङ्करं नाम मनःप्रियङ्करम् ।
इत्यन्वयुङ्क्तार्य! मनोरमाकृति-स्त्वियं किमाख्या वत! कस्य वा सुता? ॥२८॥

स वसन्तदेवः पार्श्वस्थितं स्वस्य मनःप्रियङ्करं प्रियमित्रम् प्रियङ्करं नाम वाणिजाङ्गजम् वणिक्पुत्रमितीत्थमन्वयुङ्क्त पप्रच्छ, इतीति किमित्याह--इयं दृश्यमाना मनोरमाकृतिः सुन्दरस्वरूपा, त्वित्यौत्सुक्ये, किमाख्या किं नाम्नी, वतेति हर्षे, तथा वा कस्य सुता, अस्तीति शेषः ॥२८॥

अथ प्रियङ्करकृतोत्तरमाह-स इति—

सोऽप्यब्रवीद् नामत एव केशरां जयन्तिदेवस्य सुवासिनीमिमाम् ।
आनन्दिनीं देव ! निबोधनन्दिनीं महेभ्यचूडामणिपञ्चनन्दिनः ॥२९॥

स प्रियङ्करोऽप्यब्रवीत्, किमित्याह– देव ? वसन्तदेव ? महेभ्यचूडामणेः श्रेष्ठिश्रेष्ठस्य पञ्चनन्दिनः पञ्चनन्दीत्याख्यस्य आनन्दिनीं जयन्तिदेवस्य तदाख्यस्य नन्दिनीं पुत्रीमिमां प्रत्यक्षदृश्यमानाम् सुवासिनीं भगिनीम् नामतः केशराम् केशरानाम्नीमेव निबोध ॥२९॥

अथ वसन्तदेवचिन्तामाह-एतदिति—

एतद् निशम्याऽपि वसन्तदेवको विचिन्तयामास निजेन चेतसा ।
लभ्या कथङ्कारमियं सुराङ्गनासमानसौन्दर्यगुणा मयाऽर्थिना ॥३०॥

एतत्प्रियङ्करोक्तं निशम्यापि निशम्य च वसन्तदेवकः वसन्तदेवः निजेन चेतसा विचिन्तयामास, किमित्याह— अर्थिना केशरेच्छुना मया वसन्तदेवेन सुरांगना समानः देवीतुल्यः सौन्दर्यगुणो यस्या सा इयं दृश्यमाना केशरा कथङ्कारं केनोपायेन लभ्या प्राप्या ? ॥३०॥

अथ चिन्तान्तरमाह-अभ्यर्थमानेति—

अभ्यर्थमानाऽपि मया न दास्यते धनेश्वरेणाऽपि विदेशजन्मना ।
एषा पितृभ्यां न च बान्धवेन यत् किमीदृशी स्यात् प्रियता लघीयसी ? ॥३१॥

धनेश्वरेण धनाढ्येनापि मया वसन्तदेवेन विदेशजन्मना विदेशेऽन्यदेशे यज्जन्म तेन हेतुना अभ्यर्थमाना स्वयं याच्यमानाऽपि । एषा केशरा पितृभ्यां मातापितृभ्यां न दास्यते, विदेशजन्मा हि अज्ञातकुलशीलो भवतीति भावः, बान्धवेन केशरा परिजनेनापि च न दास्यते । यद्यतः प्रियता प्रेम ईदृशी अज्ञातकुलशीलदानप्रयोजिका लघीयसी स्वल्पतरा स्यात्किम् ? नैवेत्यर्थः । प्रेमाल्पत्व एव कन्या कुलाद्यविचार्यैव कस्यापि दीयते, नान्यथेति भावः ॥३१॥

अथ वसन्तदेवस्योपायचिन्तामाह-तदिति—

तत्सोदरेणैव जयन्तिना समं वितन्वतः प्रेम परं मम ध्रुवम् ।
सा सानुरागा भविनी यतो मतं मनः प्रकाशान्तरनिर्व्यपेक्षकम् ॥३२॥

तस्याः केशरायाः सोदरेण भ्रात्रा "भ्राता तु स्यात् सहोदरः" इत्यभिधानचिन्तामणिः जयन्तिना तदाख्येनैव समं सह परमुत्कृष्टं प्रेम वितन्वतः कुर्वतः सतो मम वसन्तदेवस्य ध्रुवम् स केशरा सानुरागा मयि प्रीतिमती भविनी भविष्यति, यतः मनः प्रकाशान्तरस्य निर्व्यपेक्षकम् अपेक्षारहितम्, मनः सामग्रीसत्त्वे स्वयमेव कुत्रापि अनुरज्यते, न तु तत्र सहायान्तरमपेक्षते इति सान्निध्यात्सा मयि सानुरागा भविष्यतीति ॥३२॥

अथ वसन्तदेवस्य जयन्तिदेवेन मैत्रीप्रसङ्गमाह-एतदिति—

एतद् विमृश्य स्वहृदा वसन्तको जयन्तिदेवेन सह प्रचक्रमे ।
सौहार्दमाधातुममुष्यमन्दिर-प्रसङ्गगत्यागतिकर्मनिर्मितेः ॥३३॥

एतदुक्तप्रकारं स्वहृदा विमृश्य वसन्तको वसन्तदेवः जयन्तिदेवेन सह सौहार्दं मैत्रीमाधातुं कर्तुममुष्य जयन्तिदेवस्य मन्दिरे गृहे प्रसङ्गेऽवसरे गत्यागतिकर्मणः गमनागमनक्रियायाः प्रचक्रमे प्रवृत्तोऽभूत्, गृहगमनागमनादिभिः मैत्री भवतीति ॥३३॥

अथ तयोर्मैत्रीवृद्धिमाह-सौहार्देति—

सौहार्दकल्पद्रुम एव सद्रसै-स्तयोर्नियत्या नियतं प्रवर्धितः।
भावी वसन्ते फलवान् शनैः-शनै-र्यदेष पूर्वं सुमितोऽथ पत्रितः ॥३४॥

तयोः वसन्तदेवजयन्तिदेवयोः सौहार्दकल्पद्रुमः मैत्रीकल्पवृक्षः नियत्या भाग्येन कृत्वा नियतं निश्चयेन सद्भिः अधिकैः रसैरनुरागैः अथ च जलैः प्रवर्धितः वृद्धिं प्रापितः वसन्ते वसन्तदेवविषये, अथ च वसन्तर्तौ, यद्यतः एषः मैत्रीकल्पवृक्षः पूर्वं शनैः शनैः सुमितः पुष्पितः अथ च पत्रितः नवपत्रवान् जातः आकारप्रकारैर्वृद्धिं गतश्च, अतः फलवान् भावी भविष्यति, । अत्र मैत्रीकल्पद्रुमयोः श्लेषातिशयोक्तिजीवितरूपकम् ॥३४॥

अथ वसन्तदेवनिमन्त्रणमाह-सन्तमिति—

सन्तं वसन्तं सुजनं निमन्त्र्य तं जयन्तिदेवः स्वगृहेऽन्यदाऽनयत् ।
औचित्यनैचित्यभृतो महाशयाः कुत्राऽपि किं नाम परिस्खलन्त्यमी ? ॥३५॥

अन्यदैकदा जयन्तिदेवः सुजनं सुपुरुषं सन्तं सज्जनं च तं वसन्तं वसन्तदेवं निमन्त्र्य स्वगृहे आनयत्, तदानयनमेव समर्थयति औचित्यस्य प्रसङ्गे मित्रादिनिमन्त्रणादिरूपस्य नैचित्यं राशिं बिभ्रतीति तादृशः औचित्यज्ञाः अमी जयन्तिसदृशा महाशयाः उदारमनसो जनाः किं कुत्रापि परिस्खलन्ति औचित्याद् भ्रश्यन्ति नाम ! नैवेत्यर्थः, अवसरे निमन्त्रणादिना मित्रादेरौचितीं कुर्वन्त्येवेति भावः ॥ ३५ ॥

अथ तत्र केशरावलोकनमाह-तत्रेति—

तत्राऽर्चयन्तीं कुसुमैः सुमायुधं तदेकतानां समवेक्ष्य केशराम् ।
तोषं वसन्तो निभराम्बभूव यत् प्रियाऽवलोकादपरं न संमदे ॥३६॥

तत्र जयन्तिदेवगृहे कुसुमैः कृत्वा सुमायुधं कामदेवमर्चयन्तीम् तदेकतानां कामपूजामग्नाम् केशराम् समवेक्ष्य वसन्तो वसन्तदेवः तोषं मनस्तृप्तिं निभराम्बभूव धारयामास, ननु दर्शनमात्रेण

कुतस्तोष इत्यतस्तत्समर्थयति- यद्यतः प्रियाया अवलोकादवलोकनादधिकमपरमन्यत्सम्मदे हर्षाय न नैव भवति, प्रियावलोकनं प्रियतृप्तिकरमिति भावः ॥ ३६ ॥

**अथ वसन्तदेवावलोकनमाह-गृह्णन् इति—**

गृह्णन् स चाऽऽलोकितया सरागया जयन्तिदेवस्य करात् सुमस्रजम् ।
कल्याणरूपं शकुनं तदेतदित्यभूत् तदाऽभवत् सम्मद एतयोर्द्वयोः ॥३७॥

स वसन्तदेवश्च सरागया रागवत्या तया केशरया जयन्तिदेवस्य करात्सकाशात्सुमस्रजं पुष्पमाल्यं गृह्णन्नावलोकि दृष्टः, तद् एदत् परस्परं विशिष्टावस्थायां दर्शनरूपं शकुनं शुभनिमित्तं कल्याणरूपं शुभसूचकमिति हेतोः तदा परस्परावलोकनकाले एतयोर्द्वयोः केशरावसन्तदेवयोः संमदो हर्षोऽभूत् ॥ ३७ ॥

**अथ धात्र्यास्तनयोर्भावावबोधमाह-धात्रीति—**

धात्रीतनूजाऽभिधया प्रियङ्करा समीपगा भावमबुद्ध सा तयोः ।
वर्ण्याः सतां किं न भवन्ति संततं परेङ्गितज्ञानफला हि बुद्धयः ? ॥३८॥

तयोः केशरावसन्तदेवयोः समीपगा समीपस्था सा धात्र्याः तनूजा पुत्री अभिधया प्रियङ्करा भावम् तयोराशयमबुद्ध ज्ञातवती तज्ज्ञाने हेतुमाह सतां बुद्धिमतां किं न वर्ण्याः निरूपणीया भवन्ति ? अपि तु सर्वे एव पराशयादिरूपार्थाः ज्ञेया भवन्तीत्यर्थः हेतुमाह हि यतः बुद्धयः परस्यान्यस्येङ्गितस्याशयस्य ज्ञानं फलं यासां ताः तादृश्यः भवन्तीति शेषः बुद्ध्या परेङ्गितादि अनुमीयते इत्यर्थः ॥ ३८ ॥

**अथ वसन्तदेवसमादरमाह-श्रीमदिति—**

श्रीमद्वसन्तं स जयन्तिरादरादहार्य्यभक्त्याऽभ्यवहार्य्य तं स्वयम् ।
कर्पूरताम्बूलविलेपनांशुकैरनेकधा सत्कुरुते स्म विस्मयः ॥ ३९ ॥

स जयन्तिः जयन्तिदेवः स्वयम् अहार्यभक्त्या अकृत्रिमप्रेम्णा तं श्रीमन्तं वसन्तं वसन्तदेवमादरादरपूर्वकमभ्यवहार्य भोजयित्वा विस्मयः विगताभिमानः सन् कर्पूरताम्बूलैः स कर्पूरैस्ताम्बूलैः विलेपनैश्चन्दनैः अंशुकैः वस्त्रादिभिश्चानेकधाऽनेकैः प्रकारैः सत्कुरुते स्म सत्कारमकरोत् ॥ ३९ ॥

**अथ प्रियङ्कराकृतकेशरासम्बोधनमाह-माधुर्येति—**

माधुर्यसंवादिवचा वचस्विनी प्रियङ्कराऽप्यभ्यधिताऽथ तां प्रति ।
आलि ! त्वमप्यस्य यथोचितं कुरु जयन्तिवत् ते प्रियताऽत्र युज्यते ॥ ४० ॥

माधुर्यं संवदन्तीत्येवं शीलं वचो यस्याः तादृशी मधुरवाग्वचस्विनी प्रियङ्कराऽपि तां केशरां प्रत्यभ्यधित जगौ, किमित्याह । आलि ! सखि ? त्वमपि अस्य वसन्तदेवस्य यथोचितम् उचितमनतिक्रम्य सत्कारादि कुरु, तत्र हेतुमाह–अत्र वसन्तदेवे ते तव जयन्तिदेववत्त्वसोदर-जयन्तिदेववत् प्रियता प्रेम युज्यते भ्रातुर्मित्रं प्रति स्वसुरपि प्रेमावश्यकमिति भावः ॥ ४० ॥

**अथ केशराप्रतिवचनमाह–औत्सुक्येति–**

**औत्सुक्यमन्दाक्षमदप्रमादभीप्रसञ्जनाऽऽव्याकुलिताशयाऽपि सा ।**
**प्रत्याह तां प्रत्ययितां प्रियङ्करां सखि ? त्वमेवाऽस्य समाचरोचितम् ॥ ४१ ॥**

औत्सुक्यस्य वसन्तदर्शनादावुत्सुकतायाः मन्दाक्षस्य त्रपायाः 'मन्दाक्षं ह्रीस्त्रपा" इत्यमरः मन्दाक्षस्य प्रमादस्य भियश्च प्रसञ्जनेन प्रसङ्गेन रागाद् भावसन्धिसमुदयेन आव्याकुलितः आप्लुत आशयो यस्याः सा तादृशी अपि सा केशरा तां प्रत्ययितां विश्वस्तां प्रियङ्करां प्रति आह, किमित्याह सखि? त्वम् प्रियङ्करा एवास्य वसन्तदेवस्योचितं प्रसङ्गोचितं सत्कारादि समाचर-कुरु ॥ ४१ ॥

**अथ प्रियंकराप्रवृत्तिमाह–स्वेति–**

**स्वप्राङ्गणासन्नसमुद्गतानत–प्रियङ्गुशालाद् नवमञ्जरीस्ततः ।**
**उच्चित्य कक्कोलफलान्यथ प्रियं प्रियङ्करैनं निजगाद सादरम् ॥४२॥**

ततः केशराकृतनियोगानन्तरम् प्रियङ्करा स्वप्राङ्गणस्यासन्ने समीपे समुद्गतादुत्पन्नादान-तात्फलादिभारनम्रात् प्रियङ्गोः शालात् तदाख्यवृक्षविशेषात् नवमञ्जरीः कक्कोलफलानि च उच्चित्या–वचित्य, अथान्तरमेनं वसन्तदेवं प्रियं सादरं निजगाद ॥ ४२ ॥

**तदुक्तिमेवाह–एषेति–**

**एषा ममाऽऽलिः कुसुमानि पाणिना समुत् समुच्चित्य फलानि च स्वयम् ।**
**त्वं मे प्रियोऽसीति समाकुला ह्रिया समर्पयत्येव मया विभिन्नया ॥४३॥**

एषा ममालिः सखी "आलिः सखी वयस्ये"त्यमरः केशरा त्वं वसन्तदेवः मे मम प्रियोऽसीति हेतोः समुद् हर्षवती स्वयं पाणिना कुसुमानि फलानि च समुच्चित्य अवचित्य ह्रिया लज्जया समाकुला इति हेतोः मया विभिन्नया द्वारा एव समर्पयति ददाति ॥ ४३ ॥

**अथ वसन्तदेवस्य फलादिग्रहणाद्याह–पुष्पाणीति–**

**पुष्पाणि कक्कोलफलानि चाऽऽददे प्रियङ्करायाः करवारिजन्मनः ।**
**एतत्प्रियाप्रेषितमित्ययं विदन् वहन् प्रमोदं वचसोऽप्यगोचरम् ॥४४॥**

अयं वसन्तदेवः एतद् पुष्पादि प्रियया केशरया प्रेषितमिति विदन् जानन् अत एव वचसोऽपि अगोचरमत्यधिकं प्रमोदं वहन् प्राप्नुवन् प्रियङ्करायाः करवारिजन्मनः पाणिपद्मात् पुष्पाणि कक्कोलफलानि च आददे गृहीतवान् ॥ ४४ ॥

अथ तत्कृतमुद्रिकादानमाह—दत्त्वेति—

दत्त्वा स तस्यै प्रमनाः स्वमुद्रिकां जगौ त्वया साध्विदमाहितं खलु ।
ब्रूयाः पुनस्तामिति सर्वदैव मे प्रियाऽनुरूपं रचयेर्मनस्विनि ! ॥४५॥

स वसन्तदेवः प्रमनाः हृष्टः सन् तस्यै प्रियङ्करायै स्वमुद्रिकां दत्त्वा जगौ, किमित्याह— त्वया प्रियङ्करया खलु इदं पुष्पादिदानादि साधु उत्तममाहितं कृतम् पुनः तां केशरामिति ब्रूयाः इतीति किमित्याह— मनस्विनि ! सर्वदैव मे मम प्रियानुरूपं मम प्रियं यथा स्यात्तथा रचयेः कुर्याः ॥ ४५ ।

अथ प्रियङ्कराप्रवृत्तिमाह-गत्वेति—

गत्वा वरालापमसौ प्रियङ्करा तदैव तस्यै मुदिता न्यवेदयत् ।
आकर्ण्य तं साऽपि सकर्णवर्णिता मुदं मयूरीव घनध्वनिं दधौ ॥४६॥

असौ प्रियङ्करा तदैव तत्कालमेव गत्वा मुदिता प्रसन्ना सती तस्यै केशरायै वरालापं प्रियभाषितं न्यवेदयत्, सकर्णेन धीमता वर्णिता प्रशंसिता सा केशराऽपि तं प्रियालापम् मयूरी घनध्वनिं मेघशब्दमिवाऽऽकर्ण्य मुदं दधौ ॥ ४६ ॥

अथ केशरायाः स्वप्नमाह-स्वप्ने इति—

स्वप्ने तृतीयप्रहरे विवाहितं निशः स्वमालोकत केशराऽन्यदा ।
कान्तेन तेनाऽऽशयमध्यवर्त्तिना वसन्तदेवेन समं महौजसा ॥४७॥

अन्यदा केशरा निशः रात्रेः तृतीये प्रहरे स्वप्ने तेन आशयमध्यवर्त्तिना हृद्गतेन महौजसा बलवता कान्तेन प्रियेण वसन्तदेवेन समं सह स्वमात्मानं विवाहितं कृतपरिणयं आलोकत दृष्टवती वसन्तेन मम परिणयो जात इत्येवं स्वप्नमदर्शदित्यर्थः ॥ ४७ ॥

अथ वसन्तदेवस्वप्नमाह-स्वप्नान्तरिति—

स्वप्नान्तरुद्वाहविधिं व्यलोकयद् वसन्तदेवोऽपि तथा सहात्मनः ।
श्रीपञ्चनन्दीभ्यभुवा गुणाढ्यया तथाऽपि हर्षः समभूत्तयोर्महान् ॥४८॥

वसन्तदेवोऽपि स्वप्नान्तः स्वप्ने श्रीपञ्चनन्दीभ्यभुवा श्रेष्ठिपञ्चनन्दिपुत्र्या गुणाढ्यया गुणवत्या तया केशरया सह आत्मनः स्वस्य उद्वाहविधिं परिणयविधिं व्यलोकयत्, तथापि तथा च तयोः केशरावसन्तयोः महान् अतिदीर्घः हर्षः समभूत् ॥ ४८ ॥

अथ केशराया: स्वप्नकथनमाह–स्वप्नमिति–

स्वप्नं प्रगे लब्धनिधानयुग्मवत् प्रियङ्कराया: पुरतो बभाण सा ।
तच्चित्तचैत्यं प्रति याऽधिदेवता तदग्रतो गोप्यमियं न चातुरी ॥४९॥

प्रगे प्रभाते सा केशरा लब्धनिधानयुग्मवत् प्राप्तनिधिद्वयवत् स्वप्नं प्रियङ्करायाः पुरतोऽग्रतः बभाण ननु अन्यस्मै रहस्यकथनमनुचितमिति चेत्तत्राह– तस्याः केशरायाः चित्तमेव चैत्यं मन्दिरम् तस्मिन् तद्विषये या अधिदेवता अधिष्ठातृदेवतेव, तच्चित्तवृत्तिज्ञा, तदग्रतो रहस्यादि, गोप्यमप्रकाश्य-मित्येतच्चातुरीबुद्धिमत्त्वं न अस्तीतिशेष., त्वदग्रभावज्ञे रहस्यं न किमपि भवतीति भावः ॥ ४९ ॥

अथ पुरोहितस्य स्वप्नफलकथनमाह संपत्स्यते इति–

संपत्स्यते सर्वमिदं महाशये त्वया न कार्यः पुनरत्र संशयः ।
एतां गिरं प्राह हितः पुरोहितस्तदा तदासन्नचरोऽपि कश्चन ॥ ५० ॥

तदा प्रियङ्करां प्रति स्वप्नकथनकाले तदासन्नचरः तत्स्थानसमीपस्थः कश्चन हितः हितचिन्तकः पुरोहितोऽपि महाशये ! मनस्विनि! सर्वमिदं त्वया दृष्टः स्वप्नः सम्पत्स्यते तथैव भविष्यति, अत्रास्मिन् स्वप्नविषये त्वया संशयः पुन. न कार्यः अवश्यंभावित्वादिति भावः ॥ ५० ॥

अथ प्रियङ्कराकृतमनुमोदनमाह स्वप्नेनेति–

स्वप्नेन चाऽनेन सखि ! श्रुतीरया तथोपश्रुत्याऽप्यनया स्यादपि ।
भावी वसन्तस्तव जीवितेशितेत्युवाच वाचं प्रति तां प्रियङ्करा ॥५१॥

सखि ! अनेन त्वद्दृष्टेन स्वप्नेन अनया पुरोहितकथितया श्रुतीरया शास्त्रवाण्या तथा तादृश्या उपश्रुत्या किंवदन्त्या च स्यादपि शीघ्रमेव तव केशरायाः वसन्तो वसन्तदेव जीवितेशिता पतिर्भावीतीत्थं वाचं प्रियङ्करा तां केशरां प्रत्युवाच ॥५१॥

अथ वसन्तदेवस्य स्वप्नकथनमाह–स्वप्नमिति–

स्वप्नं वसन्ताय ततः प्रियङ्करा, प्रमोदसम्पूर्णमनास्तमाख्यत् ।
स्वस्वप्नसाम्येन वसन्तदेवकः, स सत्यमेवेदममन्यत स्वयम् ॥५२॥

ततः अनन्तरम् प्रियङ्करा प्रमोदसम्पूर्णमना. आनन्दनिर्भरमानसा सती तं केशरादृष्टं स्वप्नं वसन्ताय वसन्तदेवायाख्यत्कथितवती, स वसन्तदेवको वसन्तदेव स्वयं स्वस्वप्नसाम्येन तुल्यतया हेतुना इदं स्वप्नं सत्यमेवामन्यत ॥५२॥

अथ पुनः प्रियंकरावचनमाह–प्रोवाचेति–

प्रोवाच भूयोऽपि ततः प्रियङ्करा, प्रियंवदा तं स्वमरन्तयत् सती ।
संजातमेवेदमवेत्य संशयं, स्वकीयपाणिग्रहणप्रयोजनम् ॥५३॥

ततस्तदनन्तरं भूयोऽपि पुनरपि प्रियंकरा प्रोवाच, किमित्याह--प्रियंवदा मिष्टभाषिणी कनी कन्या केशरा ते तव, त्वामित्यर्थः, सम्बन्धसामान्ये षष्ठी, स्वमात्मीयम् स्वपतिमित्यर्थः, अकल्पयत् कल्पितवती, इदं स्वकीयं पाणिग्रहणं रूपं केशरापाणिग्रहणरूपं प्रयोजनमभीष्टं संजातमेव, इत्येतद- संशयं निश्चितमवेहि ॥ ५३ ॥

अथ वसन्तोक्तिमाह ऊचे इति—

ऊचे वसन्तोऽपि शृणु प्रियङ्करे ! तया समं दर्शनमादधे विधिः
संयोगमापादयिता स एव मे, कृतं न नीचोऽपि यतो विलुम्पति ॥ ५४ ॥

वसन्तो वसन्तदेवोऽप्यूचे, किमित्याह–प्रियङ्करे ! शृणु किमित्याह विधिः भाग्यमेव तया केशरया सह समं दर्शनमादधे चकार, भाग्यादेव तां द्द्रष्टवानस्मीत्यर्थः स विधिरेव मे मम तया समं संयोगं विवाहरूपं सम्बन्धमापादयिता कर्त्ता, तत्र हेतुमाह यतः नीचः निकृष्टप्रकृतिः पाम- रादिरपि कृतं स्वयं विहितं न विलुम्पति नाशयति । कथं तर्हि सकलकार्यसाधारणकारणं भाग्यमेव स्वकृतं दर्शनादि सम्बन्धायोजने न विलुम्पेदिति भावः ॥ ५४ ॥

अथ प्रियङ्करासत्कारमाह विश्वासेति—

विश्वासरूपां कलयन्निमामयं, जयन्तिजामेरपरां शरीरिणीम् ।
स्वाकूतमावेद्य विधाय सत्क्रियां, विसर्जयामास सदा प्रियङ्कराम् ॥ ५५ ॥

अय वसन्तदेवः जयन्तिजामेः जयन्तिदेवस्वसुः केशरायाः "जामिः स्वसृकुलस्त्रियो" इत्यमरः अपरामन्यां शरीरिणीम् मूर्त्तिमिवेमां प्रियङ्करां सदा विश्वासरूपां विश्वासास्पदां कलयन् जानन् स्वा- कूतं स्वाभिप्रायमावेद्य निवेद्य सत्क्रियां सत्कारं विधाय विसर्जयामास ॥ ५५ ॥

अथ केशराया रागवृद्धिमाह श्रीति—

श्रीकेशरायाः पुरतः प्रियङ्करा, यथा यथाऽऽगत्य निवेदयत्यसौ ।
तस्य प्रवृत्तिं प्रणयानुबन्धिनीं, ममज्ज सा प्रेमरसाम्बुधौ तथा ॥ ५६ ॥

असौ प्रियङ्करा आगत्य श्रीकेशरायाः पुरतः तस्य वसन्तदेवस्य प्रणयानुबन्धिनीम् प्रीतिवर्धिकां प्रवृत्तिं समाचारं यथा यथा निवेदयति तथा तथा सा केशरा प्रेमैव रसस्तस्याम्बुधौ ममज्ज प्रेमातिशया- ऽऽप्लुताऽभूदित्यर्थः ॥ ५६ ॥

अथ तयोः प्रेमसन्देशतः कालक्षेपमाह अन्योऽन्येति—

अन्योऽन्यसंदेशनदेशनोत्कयोः, प्रियङ्कराभ्यागमकांक्षिणोर्मिथः ।
संवर्धमानानुपमानुरागयोः, कियाननेहा युगवत् तयोर्ययौ ॥५७॥

तयोः केशरावसन्तदेवयोः मिथः परस्परं युगपत्सहैव अन्योन्यं सन्देशनस्य वाचिकस्य देशने प्रेषणे उत्कयोरुत्सुकयोः प्रियङ्कराया अभ्यागमनकांक्षिणोः प्रियङ्करायास्तयोर्मध्ये विश्वास्यदूतीभावादित्यर्थः । संवर्धमानः अनुपमोऽनुरागो ययोस्तयोः तादृशयोः कियान् अनेहा दिवसो ययौ व्यतीयाय ।। ५७ ।।

अथ पञ्चनन्दिगृहे उत्सवमाह श्रीति—

श्रीपञ्चनन्दीभ्यनिकेतनेऽन्यदा, वसन्तदेवः स्वगृहस्थितोऽशृणोत् ।
तूर्यस्वनं नागरनायिकाजनं, समाह्वयन्तं रभसादिवोत्सवे ।। ५८ ।।

अन्यदा एकदा वसन्तदेवः स्वगृहस्थित एव श्रीपञ्चनन्दीभ्यस्य निकेतने गृहे तूर्यस्वनं वाद्यध्वनिम् उत्सवे रभसात् हठात् नगरसमाह्वयन्तमिवोपलक्षितम् अशृणोत् ।। ५८ ।।

अथ वाद्यहेतुमाह श्रीकान्येति—

श्रीकान्यकुब्जस्थसुदत्तसूनवे, वरादिदत्ताय दिदेश केशराम् ।
यत्पञ्चनन्दी तत एव वाद्यते, सुतूर्यमित्येत्य तदाऽऽण कोऽपि ना ।। ५९ ।।

तदा वाद्यध्वनिकाले कोऽपि ना पुरुष एत्यागत्य पञ्चनन्दी श्रीकान्यकुब्जस्थस्य कान्यकुब्जदेशस्थस्य सुदत्तस्य तदाख्यस्य सूनवे पुत्राय वरादिदत्ताय वरदत्ताय तदाख्याय केशरां दिदेश दातुमियेष, ततो हेतोरेव सुतूर्यं सुवद्यं वाद्यते इतीत्थमाण बभाण ।। ५९ ।।

अथ तस्य तच्छ्रुत्वा मूर्च्छामाह तस्येति -

तस्याननादित्यवगम्य मूर्च्छितोऽपतद् महावातहतद्रुवच्च सः ।
प्रस्थापिता केशरया प्रियङ्करा, तदा तमाश्वासयदेत्य भाषितैः ।। ६० ।।

तस्य पुरुषस्याननान्मुखात्सकाशादित्युक्तप्रकारमवगम्य ज्ञात्वा स वसन्तदेवश्च मूर्च्छितः महावातेन हतद्रुवत् पराहतवृक्षवदपतत् तदा तस्मिन् काले केशरया प्रस्थापिता प्रेषिता प्रियङ्करा एत्यागत्य भाषितैः वचनैः कृत्वा तं वसन्तदेवमाश्वासयत् ।। ६० ।।

अथ तदाश्वासनमेवाह त्वामिति--

त्वां केशरैवं वदतीन्दुमण्डला, नना कृथा मा हृदि खेदमात्मनः ।
प्रक्रम्यमाणं जनकेन मामकं, निशम्य पाणिग्रहणं प्रिय ! प्रभो ! ।। ६० ।।

इन्दुमण्डलानना केशरा त्वां वसन्तदेवमेव वदति, एवमिति किमित्याह प्रिय ! प्रभो ! स्वामिन् ! जनकेन मम पित्रा पञ्चनन्दिना प्रक्रम्यमाणं विधीयमानं मामकं पाणिग्रहणमन्येन सार्धमम् विवाहं निशम्य स्वस्य आत्मनः हृदि खेदं मा कृथाः ।। ६१ ।।

स्वस्य मातृपितृपारतन्त्र्यमाह कोनामेति -

को नाम मच्चित्तविबोधदुर्विधौ, विचेष्टमानौ पितरौ निवारयेत् ?
संकल्पवृत्त्या मयका पतीकृतस्त्वमेव नाथाऽपरथा न बुध्यताम् ॥ ६२ ॥

मच्चित्तस्य मम केशरायाश्चित्तस्य उपलक्षणत्वादाशयस्य विबोधे ज्ञाने दुर्विधौ दुर्विदग्धौ अत एव विचेष्टमानौ ममाशयविरुद्धं चेष्टमानौ पितरौ मम मातापितरौ को नाम निवारयेत् मदनभिमतक्रियातः पराङ्मुखौ कुर्यात् न कोऽपि तादृशोऽस्ति यस्तौ निवारयेदित्यर्थः एवञ्च परवशाहमितिभावः तथापि मम मनस्तु त्वय्येवेति आह नाथ ! स्वामिन् मयका मया केशरया संकल्पवृत्त्या मनसा त्वं वसन्तदेव एव पतीकृतः अपरथा नेयं मदनुरक्तेत्येवमन्यथा न बुध्यताम् मन्यताम् ॥ ६२ ॥

स्वस्य तदेकतानत्वमाह चेदिति—

चेत् पद्मबन्धुं विजहाति पद्मिनी, विभावरी चन्द्रमसं कदाचन ।
गौरी महेशं कमला त्रिविक्रमं, तदाऽहमन्यं प्रियमाद्रिये प्रिय ! ॥ ६३ ॥

पद्मिनी कमलिनी चेद्यदि पद्मबन्धुं सूर्यं विजहाति, प्रियत्वेनेति शेषः, विभावरी रात्रिः कदाचन कदाचिच्चन्द्रमसम्, विजहाति प्रियत्वेन, गौरी पार्वती महेशम्, कमला लक्ष्मीः त्रिविक्रमं विष्णुं विजहाति प्रियत्वेन, प्रिय तदा तादृशविपरीतकाले अहं केशरा अन्यं त्वदन्यं प्रियमाद्रिये स्वीकुर्वे पद्मिन्यादेः सूर्यादिरिव मम त्वमिति नाहं त्वत्तोऽन्यं वरीतुं समर्थाऽस्मीति भावः ॥ ६३ ॥

नैतद्वचनमात्रम्, किन्त्वग्रतो यथार्थं भवितेत्याह इतीति—

इत्यार्यपुत्रेण सदा हृदन्तरे, निवेशनीयं हृदयालुना त्वया ।
विज्ञास्यते मत्प्रिय एव वाऽऽयतौ, मदाश्रवस्याऽपि न सत्यतां कथम् ? ॥ ६४ ॥

इति हेतोः आर्यपुत्रेण हृदयालुना सुहृदयेन त्वया वसन्तदेवेन इति मदुक्तं सदा हृदन्तरे मनसि निवेशनीयम् धारणीयम् मत्प्रियो भवान् वसन्तदेवः आयतावुत्तरकाले वा मदाश्रवस्य त्वमेव मम प्रियः पतिरिति प्रतिज्ञायाः " प्रतिज्ञानं नियमाश्रवसंश्रवाः " इत्यमरः सत्यतां यथार्थतां कथं न विज्ञास्यते ? अपि तु विज्ञास्यत एव, नाहं मृषाभाषिणीति भावः ॥ ६४ ॥

ननु अन्यस्मिन् वृते कथं त्वदुक्तं सत्यं भवेदिति चेत्तत्राह दैवमिति—

दैवं कदाचिद् भवता समं यदि, प्रमन्युरुद्वाहयते न मां प्रिय ! ।
साचिव्यमासाद्य तदाऽऽशुशुक्षणेः, क्षणाद् भवन्तं दयितीकरोम्यहम् ॥ ६५ ॥

प्रिय ! यदि कदाचित्कुतोऽपि हेतोः प्रमन्युः प्रवृद्धरोषः, अभिमतविपरीतपरिणामप्रदत्वा दितिभावः विधिः भाग्यम् भवता वसन्तदेवेन समं मां केशरां न उद्वाहयते परिणाययति तदा अहम्

केशरा आशुशुक्षणेरग्नेः साचिव्यं साहाय्यमासाद्य प्राप्य क्षणाद् भवन्तं वसन्तदेवं दयितीकरोमि पतिकरोमि, त्वया समं विवाहाभावे अग्नौ प्रविश्य प्राणांस्त्यक्ष्यामि इति भावः अत्र दैवमिति विशेष्यस्य क्लीबलिङ्गस्य प्रमन्युरिति पुंलिङ्गविशेषणं न्याय्यम्, नपुंसकत्वे च सन्धौ छन्दोहानिरिति मया दैवमित्यस्य स्थाने विधिरिति पाठ आदृतः, एवं च च्छन्दोऽपि समञ्जसमेवेति ध्येयम् ॥ ६५ ॥

**अथ वसन्तदेवप्रतिवचनमाह-एतदिति—**

एतत् समाकर्ण्य विवर्ण्यसद्गुणो, वसन्तदेवोऽपि जगाद तां प्रति।
तत्स्वप्नसंदर्शनमेव जातुचिद्, निरर्थकं नैव भवेत् सदुक्तिवत् ॥६६॥

एतत्प्रियङ्करोक्तं समाकर्ण्य विवर्ण्यः प्रशंसनीयः सद्गुणो यस्य स तादृशः प्रशस्यसद्गुणवान् वसन्तदेवोऽपि तां प्रियङ्करां प्रति जगाद, किमित्याह— तत्स्वप्नसंदर्शनम् पूर्वदृष्टस्वप्नः सतासुक्तिवत् जातुचिदेव कदाचिदपि निरर्थकं मिथ्या नैव भवेत्, रात्रिशेषे दृष्टो हि स्वप्नः सफलो भवतीति भावः ॥६६॥

**अथ स्वभिसन्धिमाह-एषेति—**

एषा प्रतिज्ञा मम च प्रियङ्करे ! निधीयतां कर्णपथे त्वयाऽधुना ।
यत् केशरामेव यथाकथञ्चनोद्वहेऽन्यथा यामि यमस्य मन्दिरम् ॥६७॥

प्रियङ्करे ! मम वसन्तदेवस्य एषा कथ्यमाना च प्रतिज्ञा अधुना त्वया प्रियङ्करया कर्णपथे निधीयताम् श्राव्यतामित्यर्थः का सा प्रतिज्ञेत्याह— यत्केशरामेव यथा कथञ्चन केनाप्युपायेनोद्वहे परिणये, अन्यथा केशराया अपरिणये यमस्य मंदिरं यामि प्राणांस्त्यक्ष्यामीत्यर्थः ॥६७॥

**अथ ततः प्रियङ्कराया गमनमाह-आकर्ण्येति—**

आकर्ण्य तद्वाचमितीष्टशासना, प्रियङ्कराऽगादुपकेशरं मुदा ।
तद्वाक्यपीयूषभरेण केशरामथापि संसिच्य चकार निर्वृताम् ॥६८॥

इत्युक्तप्रकारं तस्य वसन्तदेवस्य वाचमाकर्ण्य इष्टशासना प्राप्ताज्ञा सती प्रियङ्करा मुदा सहर्षम् उपकेशरम् केशरायाः समीपमगात् अथापि ततश्च तस्य वसन्तदेवस्य वाक्यमेवातीष्टत्वात्पीयूषं तद्भरेण संसिच्य, वसन्तदेववाक्यानि कथयित्वेत्यर्थः । केशरां निर्वृतां सुखितां चकार ॥६८॥

**अथ केशरां परिणेतुं जन्ययात्रागमनमाह-संयोगेति—**

संयोगसंबन्धविधित्सतोस्तयोरुपाय एवानुदिते क्वचित् परे ।
प्रातः समागम्यत जन्ययात्रया जयन्तिजामिं परिणेतुमन्यदा ॥६९॥

संयोगसम्बन्धं परस्परसङ्गमम् विधित्सतोः विधातुमिच्छतोस्तयोः केशरावसन्तदेवयोः सतोः क्वचित्कस्मिंश्चित्तत्परे उत्कृष्टे उपाये सङ्गमसाधने अनुदिते अप्राप्ते एव सति अन्यदा प्रातः जयन्तिजामि जयन्तिदेवस्वसारं केशरां परिणेतुम् जन्ययात्रया वरातिना समागम्यत ॥६९॥

अथ वसन्तचिन्तामाह-श्रुत्वेति—

श्रुत्वा वसन्तोऽपि तदात्मनो गृहाद् निरीय गत्वा क्वचनाऽपि तत्क्षणात् ।
उद्यान एको विरहोपतापितस्ततान चिन्तामिति चेतसाऽऽकुलः ॥७०॥

वसन्तो वसन्तदेवोऽपि तज्जन्ययात्राऽऽगमनं श्रुत्वा आत्मनः स्वस्य गृहान्निरीय निर्गत्य तत्क्षणात् क्वचनाऽपि उद्याने एक एकाकी एव गत्वा विरहोपतापितः अत एव आकुलः व्यग्रः चेतसा इति वक्ष्यमाणप्रकारां चिन्ता ततान चकार ॥७०॥

तच्चिन्तामेवाह-जाते इति—

जाते विवाहेऽननुरूप ईदृशे विपत्स्यते निश्चितमेव केशरा ।
सीमन्तिनीनां मनसोऽसमीहितं मनागपि प्राणवियोजनं यतः ॥७१॥

ईदृशे भाविनि अननुरूपे अयोग्ये विवाहे जाते सम्पन्ने सति निश्चितमेव केशरा विपत्स्यते मरिष्यति, तथैव प्रतिज्ञातत्वादिति भावः ननु कदाचित्प्रतिज्ञाभङ्गोऽपि सम्भाव्यते इति चेत्तत्राह—यतः सीमन्तिनीनाम् स्त्रीणाम् मनागीषदपि मनसोऽसमीहितं स्वानभिमतं कार्यं प्राणवियोजनम् प्राणवियोगजनकमेव, भवतीति शेषः स्त्रियः स्वासमीहितं न सहन्ते किन्तु म्रियन्ते एव तथा स्वाभाव्यादिति भावः ॥७१॥

अथ स्वकर्त्तव्यमाह-तामिति—

तां प्रेमकाष्ठां प्रतिपद्य तादृशीं, विपद्यते यावदसौ न केशरा ।
विपद्य तां तत्प्रथमं प्रदर्शये न मादृशाः पृष्ठचराः स्युरीदृशाः ॥७२॥

यावदसौ मत्प्रिया केशरा तां तादृशीं प्रेमकाष्ठां प्रेमावस्थां प्रतिपद्य न विपद्यते तावत्ततः प्रथमं प्रागेव विपद्य मृत्वा तां केशरां प्रदर्शये, किमित्याह— मादृशाः ईदृशाः स्वप्रियातः प्रागेव प्राणवियोगकर्त्तारः पृष्ठचराः अनुसर्त्तारः न सन्तीतिशेष ॥७२॥

अथ मरणार्थं वसन्तदेवस्य स्वोद्बन्धनमाह-एवमिति—

एवं स्वचित्तेन विचिन्त्य चेतना-धनो निजभावरणेन शोकभाक् ।
सोऽशोकशालस्य समुच्चशाखिका-तले गले पाशमसूत्रयत् स्वयम् ॥७३॥

चेतनाधनः धीमान् स वसन्तदेवः स्वचित्तेन एवमुक्तप्रकारं विचिन्त्य शोकभाक् सशोकः सन् अशोकशालस्याशोकवृक्षस्य समुच्चायाः शाखिकाया अल्पशाखास्तले गले स्वकण्ठे स्वयमात्मनैव निजप्रावरणेन स्वोत्तरीयेण पाशमसूत्रयद्बद्धवान् ॥७३॥

अथ तत्र पुरुषकृततन्निवारणमाह बद्धोद्यममिति--

वद्धोद्यमं वीक्ष्य तमाशुमृत्यवे नृकुञ्जरःकश्चिदुपेत्य कुञ्जतः।
आचष्ट मा साहसमातथा वृथा भवादृशामीदृशमा विगर्हितम् ॥७४॥

तम् वसन्तदेवम् मृत्यवे प्राणत्यागार्थं बद्धोद्यमं कृतप्रयासं वीक्ष्य कश्चिन्नृकुञ्जरः पुरुषश्रेष्ठः कुञ्जतः लतागुल्मतः आशु उपेत्यागत्य आचष्ट जगौ, किमित्याह साहसमविमृश्यकारित्वं वृथा निष्फलं मा आतथाः कृथा, आ इति खेदे, भवादृशामुत्तमानाम् ईदृशं बन्धनादिनाऽऽत्मघातः विगर्हितम् निन्दितम् आत्मघातो हि पामरजनकृत्यमिति भवान् ततो निवर्ततामिति भावः ॥७४॥

अथ तस्य पाशच्छेदमाह-आदायेति—

आदाय तीक्ष्णक्षुरिकां स्वपाणिना विदार्य तस्याशु स पाशमूचिवान्।
भद्राकृते! युक्तमिदं न भद्र! तेन पातकं ह्यात्मविघाततः परम् ॥७५॥

स पुरुषः स्वपाणिना तीक्ष्णां पाशकर्त्तनसमर्थां क्षुरिकामादाय तस्य वसन्तदेवस्य पाशं गलबन्धनमाशु विदार्य छित्वा ऊचीवान्, किमित्याह--भद्राकृते ! सौम्य! भद्र! ते तदेवं पाशबन्धनं न युक्तम् अनुचितम्, तत्र हेतुमाह—हि यतः आत्मविघाततः आत्महत्यातः परमधिकं पातकं न अस्तीति शेषः ॥७५॥

अथ वसन्तोक्तिमाह—

ऊचे वसन्तोऽपि तमीदृशीं गिरं ममाऽऽकृतेः संमदमादधासि किम्?।
पचेलिमं प्रेक्ष्य तदिन्द्रवारुणंको नाम माधुर्यमृते प्रमोदते ? ॥७६॥

वसन्तो वसन्तदेवोऽपि तं पुरुषं प्रतीदृशीं गिरं वाणीमूचे, ईदृशीमिति किमित्याह मम वसन्तदेवस्य आकृतेः स्वरूपात् सौन्दर्यं वीक्ष्येत्यर्थः, किम् संमदं हर्षमादधासि प्राप्नोषि, अन्तःरवीक्ष्य बहिः स्वरूपमात्रतः संमदो न युक्त इत्यर्थः। तत्र दृष्टान्तमाह- तत्प्रसिद्धमिन्द्रवारुणं अन्तःसारशून्यं बहिरेव मनोहरं फलविशेषं पचेलिमं पक्वं वीक्ष्य माधुर्यमृते मधुरतां विना को नाम प्रमोदते? न कोऽपि प्रमोदते इत्यर्थः। बहिर्मनोहरमपि तत्फलं माधुर्याभावान्न मोदाय, तथाऽहमपि सुन्दरोऽपि अन्तरतिदुःखितत्वात् शोकायैव न तु स्तुतये इत्यर्थः ॥७६॥

त्वत्कृतो मरणान्तरायो न मह्यं रोचते इत्याह कान्तेति –

कान्तावियोगापगमे निबन्धनं वितन्वतो मृत्युमसंशयं मम
तत्कण्ठपाशस्य विसूत्रणात् त्वया किमन्तरायः प्रसभं विनिर्ममे ? ॥७७॥

कान्तायाः स्वप्रियायाः वियोगस्योपचाराद्वियोगजन्यदुःखस्यापगमे निवारणे निबन्धनं हेतुभूत-मसंशयं निश्चितं मृत्युं वितन्वतः साधयतः मम तस्य कण्ठपाशस्य मरणसाधनगलबन्धनस्य विसूत्र-णाच्छेदनात् त्वया अज्ञातेन पुरुषेण प्रसभं हठात्किम् अन्तरायो विघ्नो विनिर्ममे कृतः? नैतद्युक्तमि-त्यर्थः वियोगजन्यदुःखस्य मरणमपेक्ष्याधिकत्वादिति भावः ॥७७॥

अथ तयोः प्रश्नप्रतिप्रश्नमाह केति—

का नाम कान्ता विरहः कथं तये-ति पृष्ट एतेन वसन्त एव तत् ?
आवेद्य तस्मै निखिलं यथास्थितं मनागसातं गमयाम्बभूव सः ॥ ७८ ॥

एतेनागन्तुकेन पुरुषेण का नाम कान्ता त्वत्प्रिया, तया प्रियया, कथं केन तथा हेतुना विरह इतीत्थं पृष्टः वसन्तः तस्मै पुरुषाय तत्कान्तादि यथास्थितं यथार्थं निखिलमेवावेद्य कथयित्वा वसन्त-देवः मनाक्किञ्चिदसातं दुःखं गमयाम्बभूव जहौ, दुःखस्यान्यस्मै कथनात्तनूभाव इति भावः ॥ ७८ ॥

अथ पुनः पुरुषोक्तिमाह-तदिति—

तद् दुःखमीदृग् विनिशम्य रम्यधीः पुनर्बभाषे पुरुषोऽप्यनिष्ठुरम् ।
त्वं दुःखितो यद्यपि वर्तसे तमां तथाऽपि तेऽर्हं न च जीवितोज्झनम् ॥७९॥

तत्तस्य ईदृगुक्तप्रकारं दुःखं विनिशम्य रम्यधीः सुबुद्धिः पुरुषोऽपि अनिष्ठुरम् मधुरं यथास्या-त्तथा पुनर्बभाषे, किमित्याह- त्वं वसन्तदेवः यद्यपि दुःखितो वर्त्तसेतमामतिशयेन दुःखितोऽसि, तथापि दुःखातिशये सत्यपि ते तव जीवितोज्झनम् प्राणत्यागः न च नैव अर्हं युक्तम् ॥७९॥

प्राणत्यागायोग्यत्वे उपपत्तिमाह-इष्टार्थेति—

इष्टार्थसंसाधनकर्मकर्मठा न सन्त्युपायाः किमु भद्र ? भूरिशः !
व्यापद्यसे तत् किमहो ! निरर्थकं विपत्तिरेवं भविता हि दुर्गतौ ॥८०॥

भद्र ! इष्टार्थस्य संसाधनकर्मणि कर्मठाः निपुणाः समर्था वा भूरिशः बहव उपायाः किंतु न सन्ति? अपि तु सन्त्येव, अहो इति खेदे, तत्तः उपायास्तित्वे. किम् निरर्थकं वृथा व्यापद्यसे म्रियसे' न मर्त्तव्यमित्यर्थः सकलोपायवैफल्येऽपि आत्महत्या अयुक्तैवेत्यत आह–हि यतः एवमात्म-हत्यातः दुर्गतौ नारकादिगतौ विपत्तिर्भविता भविष्यति ॥८०॥

जीवन्नरो भद्रशतानि पश्यतीत्याह-एतादृशीमिति—

एतादृशीं प्राप्तदशां कथञ्चन, स्वजीवितं भद्र ! मयाऽपि धारितम् ।
स्वार्थाद्यभावाय कदाऽपि जीवता नरेण कल्याणमवाप्यते यतः ॥८१॥

भद्र ! मया आगन्तुकेन पुरुषेणापि एतादृशीं स्वदुःखकारां दशावस्थां प्राप्य स्वजीवितं कथञ्चन कष्टं सोढ्वाऽपि धारितम् न तु त्यक्तम्, तत्र हेतुमाह—यतः स्वार्थाद्यभावाय जीवता नरेण कदाऽपि कल्याणमवाप्यते, एवेति शेषः ॥८१॥

अथ स्वनामादि कथयति-श्रीति—

श्रीकामपालोऽभिधयाऽपि कुणिका-पुरस्थलोकस्तुतवाणिजाग्रणीः ।
श्रीकामपालः स्ववपुष्करश्रिया न कामपालस्तरसाऽस्मि केवलम् ॥८२॥

कुणिकापुरस्थः लोकस्तुतः वणिजाग्रणीः अभिधया कामपालः स्ववपुष्करस्य निजोत्तमवपुषः श्रिया लक्ष्म्या कृत्वा श्रीकामपालः श्रियः कामपालस्य च पालकः, अस्मि, केवलम् तरसा वेगेन कृत्वा कामपालः इच्छापालकः नास्मि, किन्तु सकलोत्तमगुणयुक्तोऽभिमतसिद्धिरवाङ्मुखश्चा-स्मीत्यर्थः ॥८२॥

अथ कामपालः स्वस्य विदेशयात्रामाह-अर्थस्येति—

अर्थस्य सर्वोऽपि तनोति गौरवं न मानवस्येति विचिन्त्य चेतसि ।
अर्थार्जनार्थं विषयान्तरं युवा पैतृकागारत एव निर्ययौ ॥८३॥

सर्वोऽपि जनोऽर्थस्य धनस्य गौरवमादरादि तनोति करोति न मानवस्य धनहीनस्य मानव-मात्रस्येत्यर्थं चेतसि विचिन्त्य पैतृकादगारात् युवाऽहं कामपालः आगारतः स्वगृहतः धनार्जनार्थं धनो-पार्जनायैव विषयान्तरं देशान्तरं प्रति निर्ययौ निर्गतः ॥८३॥

अथ स्वस्य शङ्खपुरप्राप्तिमाह-देशान्तरमिति—

देशान्तरं देशत एव पर्यटन्, सरोवराद् हंस इवाऽपरं सरः ।
शङ्खोज्ज्वलः शङ्खपुरं पुरं गतः, परिस्फुरन्मानसवासवासितः ॥८४॥

देशात् एकस्माद्देशाद्देशान्तरमन्यं देशं हंसः सरोवरादपरं सर इव पर्यटन् भ्रमन्नेव परि-स्फुरता उदयेन मानसवासेन मनोवृत्त्या वासितः सहृदयत्वादिगुणान्वितः, हंसपक्षे च मानससरोवर-वासयुक्तः, शङ्ख इव उज्ज्वलः विशुद्धचारित्रः, अथ च धवलः शङ्खपुरं पुरं गतः प्राप्तः श्लेष-पूर्णोपमालङ्कारः ॥८४॥

तत्रोद्याने यक्षं वर्णयति-यक्ष इति—

यक्षस्तदुद्यानविभूषणं परं स शङ्खपालोऽस्त्यभिधानतः श्रुतः ।
पुंसां यदर्चाऽपि विनिर्मिता हृदा करोति कल्पद्रुमवत् समीहितम् ॥८५॥

तस्य शङ्खपुरस्य उद्यानस्य विभूषणमिव विभूषणम् परं उत्कृष्टम् महद्यथास्यात्तथा अभिधानतः शङ्खपाल इति श्रुतः प्रसिद्धः यक्षोऽस्ति यस्य शङ्खपालस्य यक्षस्य हृदा मनसाऽपि विनिर्मिता कृता अर्चा पूजा पुंसां कल्पद्रुमवत्समीहितं करोति ॥८५॥

अथ तत्रोत्सवे कन्यादर्शनमाह-अव्राजिषमिति—

अव्राजिषं तस्य महोत्सवेऽन्यदा, समं समग्रैः पुरवासिभिर्जनैः ।
एकां कनीं तत्र सखे ! व्यलोकयं रसालशालान्तरवर्तिनीमहम् ॥८६॥

अन्यदैकदा, तस्य शङ्खपालयक्षस्य महोत्सवे समग्रैः पुरवासिभिर्जनैः समं सह तत्रोद्याने अव्राजिषमगमम् सखे ! तत्र पुरवासिजनसमूहे उद्याने अहं कामपालः एकां रसालशालस्याम्रवृक्षस्य अन्तरे व्यवधाने वर्त्तते इत्येवंशीलां रसालवृक्षव्यवहिताम् कनीं कन्यां व्यलोकयम् ॥८६॥

अथ स्वस्य कामवशत्वमाह-शूलीति—

शूलीति नाम्ना दयितस्य धूर्जटेः प्रकोपभावेन पृथग् व्यवस्थिताम् ।
गौरीमिवैतामवलोक्य मानसं मनोभुवा पञ्चशरैर्ममाऽऽहतम् ॥८७॥

दयितस्य प्रियस्य धूर्जटेः शिवस्य शूली त्रिशूलधर इति नाम्ना हेतुना, तादृशनाम्ना हिंसासम्बन्धावगतेरिति भावः प्रकोपभावेन कोपेन पृथग् शिवं परित्यज्यान्यत्र व्यवस्थितामवस्थिताम् गौरीं पार्वतीमिव एतां कनीमवलोक्य मम मानसं मनोभुवा कामेन पञ्चभिरेव शरैः पौष्पैः स्वायुधैः कृत्वा आहतम् कामातुरो जात इत्यर्थः ॥ ८७ ॥

अथ तस्या अपि स्वस्मिन् रागमाह-श्रुत्वेति—

श्रुत्वा सखीभ्यो मम नाम सा श्रुतं प्रदर्शयन्ती प्रियतामिवान्विताम् ।
कर्पूरपूरेण समं ससंमदा सखीकरेणाऽर्पयति स्म वीटकम् ॥८८॥

सा कनी सखीभ्यः सकाशात् श्रुतं प्रसिद्धं मम नाम श्रुत्वा अन्विताम् सम्बन्धिताम् प्रियतां प्रेमेव प्रदर्शयन्ती ससंमदा सहर्षा सती सखीकरेण कृत्वा कर्पूरपूरेण समं कर्पूरयुक्तं वीटकं ताम्बूलमर्पयति स्म, साऽपि मदनुरक्ता जातेत्यर्थः ॥८८॥

**अथ स्वकर्तव्यचिन्तामाह-तच्चेति—**

तच्चाऽऽददानः स्वकरेण मानसे विचिन्तयामास मुदाऽहमीदृशम् ।
किञ्चिद् ममाऽपि प्रतिदातुमौचिती प्रतीयते मे कृपणत्वमन्यथा ॥८९॥

अहं कामपालः मुदा हर्षपूर्वकं तद्वीटकं स्वकरेणाददानः गृह्णँश्च मानसे ईदृशं विचिन्तयामास; ईदृशमिति किमित्याह ममाऽपि किञ्चित्प्रतिदातुमौचिती औचित्यम्, अन्यथा मे मम कृपणत्वं प्रतीयते व्यज्यते ।८९॥

**अथ तदा तत्र मत्तगजागमनमाह- आलानमिति—**

आलानमुन्मूल्य तदा क्षरन्मदः समागमद् कश्चन तत्र वारणः ।
उच्छृङ्खलस्त्रोटितलोहशृङ्खलः कृतान्तयानभ्रममादिशन्निव ॥९०॥

तदा मयि कामपाले तथा विचारयति सति, क्षरन्मदः मदस्रावी कश्चन वारणो गजः आलानं बन्धनस्तम्भमुन्मूल्योत्पाट्य त्रोटितम् भिन्नम् लोहशृङ्खलमन्दुकं येन स तादृशः, अत एव उच्छृङ्खलः निगडरहितः, असाध्य इति यावत् । कृतान्तस्य यमस्य यानभ्रमं वाहनभ्रममादिशन् कारयन्निव तत्रोद्याने समागमत् ॥९०॥

**अथ गजभयेन परिच्छदपलायनमाह- उत्सृष्टमिति—**

उत्सृष्टमाधोरणधोरणीमहा—प्रतिक्रियाभिर्नितमां मतङ्गजम् ।
तत्राम्रकुञ्जेऽधिगतं निरीक्ष्य स परिच्छदोऽस्याः सकलः पलायितः ॥९१॥

आधोरणानां हस्तिपकानां "आधोरणाः हस्तिपकाः" इति "धोरणी श्रेणी" इति चाभिधानचिन्तामण्युक्तेः । या धोरण्यः गजसाधनक्रियाः ताभिः तद्रूपाभिः महतीभिः प्रतिक्रियाभिः प्रतीकारक्रियाभिः नितमां सर्वथा उत्सृष्टं रहितम् हस्तिपकवर्जितमित्यर्थः, मतङ्गजम् तत्राम्रकुञ्जे-अधिगतमागतं निरीक्ष्यास्याः ससकलः परिच्छदः परिजनादिः पलायितः ॥९१॥

**किन्तु सा न पलायितेत्याह- स्तम्बेरमे इति—**

स्तम्बेरमे तत्र समापतत्यपि स्थितिं वितेने भयविह्वलापि सा ।
आनन्दसंपादनबद्धविभ्रमा सुधांशुलेखेव विधुन्तुदागमे ॥९२॥

तत्राम्रकुञ्जे स्तम्बेरमे गजे समापतति समागते सत्यपि धावन्नागच्छत्यपि सति सा कन्या भयविह्वलाऽपि विधुन्तुदस्य राहोरागमे ग्रसनसमये सुधांशुलेखा चन्द्रलेखा इव आनन्दस्याह्लादस्य सम्पादने बद्धः कृतः आसक्तो वा विभ्रमो विलासो यस्याः सा तादृशी सति स्थितिं वितेने ततो गजभयान्न पलायितवती ॥९२॥

अथ स्वस्य हस्तिताडनमाह- हस्तेनेति—

हस्तेन हस्ती नलिनीमिवाशु तां कनीं समाकर्षति यावदस्तभीः ।
तावद् निजघ्ने मयका स पेचके प्रपञ्चतः स्थूलतमेन दारुणा ॥९३॥

अस्तभीः निर्भीकः हस्ती नलिनीं कमलिनीमिव तां कनीं हस्तेन स्वशुण्डया यावदाकर्षति तावदाशु झटित्येव मयका मया कामपालेन प्रपञ्चतः विशिष्टोपायतः स्थूलतमेन दृढेन विशालेन च दारुणा काष्ठेन स हस्ती पेचके पुच्छमूले "पुच्छमूलं तु पेचकः" इत्यभिधानचिन्तामणिः । निजघ्ने हतः ॥९३॥

अथ स्वस्य कनीमादाय ततो गमनमाह- रोषेति—

रोषाञ्चितः सोऽपि विहाय योषितं बलाभिमानाद् वलते स्म मां प्रति ।
तं वञ्चयित्वाऽहमपीभशिक्षया कनीं समादाय ययावितोऽन्यतः ॥९४॥

स हस्ती अपि रोषाञ्चितः क्रुद्धः सन् योषितं तां कनीं विहाय बलाभिमानाद्बलदर्पाद् मां कामपालं प्रति वलते सम्मुखं चागच्छति स्म, अहं काकपालोऽपि इभशिक्षया गजविद्यया निपुणतयेत्यर्थः । तं गजं वञ्चयित्वा छलयित्वा कनीं समादाय इतः आम्रकुञ्जादन्यतोऽन्यत्र ययौ गतवान् ॥९४॥ ०

अथ तस्या एकान्ते स्थापनमाह- त्रैलोक्येति—

त्रैलोक्यसुभ्रूजनकामनीयकं रुचा जयन्तीं विजने मुमोच ताम् ।
एकान्त एवाऽऽसितुमक्षमं ततो मया समं तद्धृदयं समागमत् ॥९५॥

रुचा स्वकान्त्या कृत्वा त्रैलोक्यस्य सुभ्रूजनानां योषितां कामनीयकं सौन्दर्यं जयन्तीं तां कनीम् विजने एकान्ते उपद्रवशून्यस्थान इति यावत् मुमोच स्थापयामास, अहमिति शेषः ततस्तदनन्तरम् एकान्ते आसितुं स्थातुमेवाक्षममसमर्थमिव तस्याः कन्याया हृदयं मया कामपालेन समं सह समागमत्, तस्या मनो मयि विशेषतः समासक्तमित्यर्थः ॥९५॥

अथ परिच्छदकृतस्वप्रशंसामाह- स्तम्बेरमे इति—

स्तम्बेरमे जग्मुषि तत्परिच्छदः समागतस्तत्र पुनः समन्ततः ।
बुध्वा सुबुद्धिर्मदिराऽसुदायिनं मुहुर्मुहुर्मां प्रशशंस संमदात् ॥९६॥

स्तम्बेरमे गजे जग्मुषि गतवति सति तत्रोद्याने तस्याः कन्याः परिच्छदः परिजनः पुनः समन्ततः सर्वतः समागतः तथा सुबुद्धिः धीमान् परिच्छदः मदिरायाः तन्नामककन्याः असुदायिनं प्राणरक्षकं मां बुध्वा ज्ञात्वा संमदाद् हर्षात् मां कामपालं मुहुर्मुहु' प्रशशंस ॥९६॥

**अथ तत्र गजशीकरागमनमाह-निन्ये इति-**

निन्ये सखीभिः पुनरेव तत्र सा रसालकुञ्जे सरसालसायना ।
भूयः समायासिपुराशुगेरित-स्तदैव तत्र द्विपशीकराः परे ॥ ९७ ॥

पुनरेव सा मदिरा सरसम् अलसं मन्दं चायनं गमनं यस्याः सा तादृशी सती तत्र रसालकुञ्जे सखिभिः निन्ये प्रापिता' तदा, एव भूयः पुनरपि आशुगेरितः पवनप्रेरितः "गन्धवाहानिलाशुगा" इत्यमरः परे बहवः द्विपशीकराः गजहस्तमुक्ताम्बुकणाः तत्र रसालकुञ्जे समायासिपुरागताः ॥ ९७ ॥

**अथ तासां पलायनमाह-तस्या इति—**

तस्या वयस्यास्तदनन्तरं ययु-र्दिशो दिशं साध्वससंकुलाशयाः ।
कुत्राऽपि सा स्त्रैणमतल्लिका गते-त्यहं समन्तात् सुतमां व्यलोकयम् ॥९८॥

तस्याः मदिरायाः वयस्याः सख्यः तदनन्तरं शीकरागमनान्तरम् साध्वससंकुलाशयाः भयव्याकुलितचेतसः सख्यः दिशः एकस्या दिशः दिशमपरां दिशं ययुः अस्तव्यस्तं पलायिता इत्यर्थः । सा स्त्रैणमतल्लिका प्रशस्तयोषित्समूहः कुत्रापि क्वापि गतेत्यहं समन्तात्सर्वतः सुतमां चारुतया व्यलोकयम् ॥९८॥

**अथ तासामदर्शनमाह-नेति—**

नाऽऽलोकि कर्पूरशलाकिकेव सा, पुनर्मया तापविभेदिनी दृशोः ।
जीवाम्यहं मित्र ! तथापि निष्ठुरः, कदाशया विघ्नितजीवनिर्गमः ॥९९॥

सा स्त्रैणमतल्लिका मदिरा वा दृशोः समाक्षणे तापविभेदनी दर्शनाभिलाषाग्निजनितापसंशमनी पुनः मया कामपालेन कर्पूरशलाकिका कर्पूरखण्ड इव, न आलोकि दृष्टा, कर्पूरो हि पवनसम्पर्काद्वितीयादृश्यतां यातीति भावः मित्र ! तथापि तादृशप्रियतमावियोगेऽपि निष्ठुरः कर्कश[illegible] [illegible], कदाशया सा मिलिष्यतीति दुराशावशतः विघ्नितजीवनिर्गमः प्राणान् त्यजन्नेवाहं कामपालः [illegible], न तु त्वमिव प्राणान् त्यजामीति भावः ॥९९॥

**अथोपसंहरति-उन्मत्तेति—**

उन्मत्तरूपी मदिराऽभिधानतोऽप्यहं तदादि क्षितिमण्डले भ्रमन् ।
अत्रागमं सम्यगुपायवर्जितो, वयस्य ! तत् त्वं [illegible] संश्रय ॥१००॥

तदादि तत्प्रभृति मदिराभिधानतोऽपि [illegible] [illegible] उन्मत्त इव भ्रमन् सम्यगुपायवर्जितः मदिराप्राप्तिसाध्य[illegible] [illegible] आगतः, [illegible]

स्य ? मित्र ? तत्तस्मान्मद्दृष्टान्ताद्धेतोः त्वं वसन्तदेवः धृतिं धैर्यमेव संश्रय, ममेव, न तु प्राणान् जही-हीति भावः ॥१००॥

अथ प्रियासङ्गमे उपायोऽप्यस्तीत्याह-किञ्चेति—

किञ्चास्त्युपायोऽप्यनपाय एव ते, सखे ! प्रियासङ्गमसाधनेऽधुना ।
आस्वादिताऽशर्मभरोऽहमीदृशं, हितं ब्रुवे त्वां न तु मा मृथा वृथा ॥१०१॥

सखे ! अधुना ते तव प्रियायाः सङ्गमे अनपायः निर्विघ्नः फलसाधनसमर्थ इति यावत्, उपायोऽप्यस्त्येव, आस्वादितोऽनुभूतोऽशर्मभरो दुःखातिशयो येन स तादृशः अहम् कामपालः त्वत्समानुभूतिमान् त्वं वसन्तदेवम् ईदृशमुक्तप्रकारं हितं हितवचनं ब्रुवे कथयामि, न तु वृथा मोघम्, अननुभवे हि हितं कथनं कदाचिद् वृथाऽपि सम्भाव्यते इति भावः । अतः मा मृथाः प्राणान् त्यजस्व ॥१०१॥

अथ प्रियासङ्गमोपायमेवाह-कल्ये इति—

कल्ये विवाहो भवितेति सैकिका, रतिप्रियं पूजयिताऽद्य सप्रियम् ।
कल्पोऽयमाकल्पमितीड्यहेतुना, न शस्यते कल्पविलोपकोऽत्र यत् ॥१०२॥

कल्ये श्वः विवाहो भविता इति हेतोः सा केशरा एकाकिन्येवाद्य सप्रियम् प्रियया त्वया सहितम् रतिप्रियं कामदेवं पूजयिता पूजयिष्यति, ननु त्वया कथमेतन्निश्चीयते इति चेत्तत्राह-यद्यतः आकल्पम् कल्पान्तपर्यन्तमयं कामपूजारूपः कल्पो विधिः, विवाहात्प्रथमदिने कामपूजा स्त्रीणां सनातनो विधिरिति भावः, ननु कुतश्चित्कारणात्तदभावोऽपि सम्भाव्यते इतिचेत्तत्राह-यद्यतः इति इड्येन प्रशस्येन हेतुना पूजायाः सनातनत्वहेतुनाऽऽवश्यकेन अत्रविषये कल्पविलोपकः कामपूजारूपविधिविरोधी न शस्यते आद्रियते, विरोधे सत्यपि विधिं कुर्वन्त्येव स्त्रियः, न तु त्यजन्तीति भावः ॥१०२॥

ननु ततः किमिति चेत्तत्राह-तदिति—

तत्पूर्वमेवाद्य परैरवीक्षितौ, प्रविश्य सन्ध्यासमये समाहितौ ।
कामालये कामितकल्पपादपे, निलीय तिष्ठाव उदग्रविक्रमौ ॥१०३॥

तत्तस्माद्धेतोरद्य सन्ध्यासमये पूर्वं पूजार्थं तदागमनात्प्रागेव परैरन्यैर्जनैरवीक्षितौ यथा न दृष्टौ स्यावः तथा कामितकल्पपादपे अभिलषितसिद्धकल्पद्रुमोपमे कामालये काममन्दिरे प्रविश्य उदग्रविक्रमौ अतिपराक्रमशालिनावावाम् समाहितौ सावधानौ निलीय तिरोधाय तिष्ठाव स्था-स्यावः ॥१०३॥

अथाग्रिमकर्त्तव्यमप्याह-तत्रैवेति—

तत्रैव तस्याः कुसुमेषुमन्दिरे प्रवेशनिष्ठाक्षण एव वेगतः।
स्वीकृत्य वेषं तदगारमाश्रितस्तदिङ्गितैर्मोहयितास्मि तत्कुलम् ॥१०४॥

तत्र कुसुमेषुमन्दिरे काममन्दिरे तस्याः केशरायाः प्रवेशनिष्ठाक्षण एव प्रथमप्रवेशकाले एव वेगतो झटिति वेषम् केशराया एव नेपथ्यं स्वीकृत्य गृहीत्वा तदगारमाश्रितः काममन्दिरस्थः तस्याः केशरायाः इङ्गितैः चेष्टादिभिः केशराचेष्टानुरूपचेष्टाभिः तस्याः केशरायाः कुलम् परिवारजनम् काममन्दिरम् वा, उपचारात्तत्स्थलोकम् मोहयितास्मि वञ्चयितास्मि, यथेयं केशरा नेति न जानीयाल्लोक इति भावः ॥१०४॥

अथान्तरकर्त्तव्यमाह-तदिति—

तद्वेश्ममार्गे मयका समाश्रिते भवांस्ततस्तां परिगृह्य गृध्रवत्।
मांसस्य पेशीमिव पत्तनान्तराऽयनं समासाद्य समीहितं क्रियात् ॥१०५॥

मयका मया कामपालेन तस्याः केशरायाः वेश्ममार्गे गृहमार्गे समाश्रिते याते सति ततोऽनन्तरम् गृध्रवद् गृध्रतुल्यो भवान् तां केशराम् मांसस्य पेशीं खण्डमिव परिगृह्य गृहीत्वा पत्तनान्तरस्य नगरान्तरस्यायनं मार्गं गृहं समासाद्य प्राप्य समीहितं यथेष्टं क्रियां कर्तुं प्रभवेत् ॥१०५॥

अथ तत्रानिष्टशङ्कामाह-ईदृगिति—

ईदृक्सुधासारवचोभिरुक्षितः प्रयाततापः स तमब्रवीदथ।
एवं मम स्वस्ति समस्ति किन्तु ते वितर्कयामि व्यसनोग्रसंकटम् ॥१०६॥

अथानन्तरम् ईदृग्भिरुक्तप्रकारैः सुधासारैः अमृतकल्पैः वचोभिरुक्षितः सिक्तः, तृप्त इति यावत्। अत एव प्रयाततापः गतदुःखः, अमृतसेकस्य तापनाशकत्वमुचितमेवेति भावः। स वसन्तदेवः तम् कामपालमब्रवीत्, किमित्याह—एवं त्वदुक्तप्रकारेण मम स्वस्ति कल्याणं समस्ति सम्भवति, किन्तु ते तव व्यसनेन दुरुपायेनोग्रमुत्कटं सङ्कटमनर्थं वितर्कयामि, केशरारूपः पुरुषोऽयमिति ज्ञातः निगृहीतः स्या इति संशेते मम मन इति भावः ॥१०६॥

कामपालप्रतिवचनमाह-अभ्यर्णेति—

अभ्यर्णचर्याऽवनिदेवभार्यया श्रुतं जरत्या विनिशम्य निर्मितम्।
तं कामपालो न्यगदत् तदा मुदा न मेऽत्रमित्र! व्यसनं मनागपि ॥१०७॥

अभ्यर्णचर्यासमीपस्थया अवनिदेवभार्यया ब्राह्मण्या जरत्या वृद्धया निर्मितम् कृतं क्षुतं छिक्कां निशम्य तदा मुदा तत्क्षुतस्य शुभशकुनत्वात्सहर्षम् कामपालः तं वसन्तदेवं न्यगदत्, किमित्याह–मित्र ! मे मम कामपालस्य अत्र प्रागुक्तकार्ये मनागपि व्यसनं विघ्नो न, अस्तीति शेषः, तथा शकुनलाभादिति भावः ॥१०७॥

**किञ्च परोपकारिणो लाभ एव न तु हानिरित्याह-किञ्चेति—**

> किञ्च त्वदर्थाऽऽहितबद्धचेतसो ध्रुवं ममाप्यभ्युदयो भविष्यति
> किं श्रूयते नैव यशः सुखं श्रुतौ विनिर्मिमाणस्य परप्रयोजनम् ? ॥१०८॥

किञ्च त्वदर्थस्य त्वत्प्रयोजनस्य आहितावधाने, करणे इत्यर्थः, बद्धचेतसः संलग्नमनसो मम कामपालस्यापि ध्रुवमभ्युदयः शुभप्राप्तिर्भविष्यति, तत्र शास्त्रं प्रमाणयति–किं श्रुतौ शास्त्रे नैव श्रूयते ? अपि तु श्रूयत एव, किमित्याह–परप्रयोजनम् परस्य कार्यं विनिर्मिमाणस्य कुर्वतः परोपकारं कुर्वत इत्यर्थः, यशः सुखं चेति ॥१०८॥

**अथोभयोरिष्टसिद्धौ निमित्तान्तरमाह-कश्चिदिति—**

> कश्चिज्जरद्ब्राह्मणकोविदस्तदा जगाविदं कस्य च नाऽपि संमुखम् ।
> विज्ञैवमेवेति न संशयस्त्वया विधेय एवाऽत्र विधेय ईदृशे ॥१०९॥

तदोभयोरुक्तप्रकाराऽपलापसमये कश्चिज्जरन् वृद्धः ब्राह्मणकोविदः सुधीर्ब्राह्मणः कस्यचनाऽपि पुरुषस्य सम्मुखम् इदं जगौ इदमिति किमित्याह विज्ञ ! धीमन् ! इति युवयोर्विमर्शः एवमेव इत्थमेव सम्पत्स्यते अत्रेदृशे त्वदुक्तप्रकारे विधेये कार्ये संशयः नैव विधेयः कार्यः ॥१०९॥

**अथ वसन्तदेवस्य गृहगमनमाह—श्रुत्वेति—**

> श्रुत्वा तदुक्तेः सदृशीमुपश्रुतिं वसन्तदेवः सुहृदाऽमुना समम् ।
> ग्रन्थिं स्ववस्त्रे शकुनादिमं ततो निबध्य गेहं मुदितः समागमत् ॥११०॥

तस्य कामपालस्योक्तेः सदृशीमुपश्रुतिम् प्रतिध्वनिम् श्रुत्वा वसन्तदेवः अमुना सुहृदा मित्रेण कामपालेन समं सह ततः उक्तात् शकुनाद्धेतोः स्ववस्त्रे इमं ग्रन्थिं निबध्य शकुनौ सत्याम् वस्त्रग्रन्थिं ददतीत्याचार इति भावः मुदितः गेहं समागमत् ॥११०॥

**अथ तयोः काममन्दिरगमनमाह—वैकालिकाद्यमिति-**

> वैकालिकाद्यं प्रविधाय संविधिं विकालवेलासमये ततो गतौ ।
> मीनध्वजस्यायतने सकेतने स्मरस्य मूर्तेरनुतिष्ठतः स्म तौ ॥१११॥

ततः गृहगमनानन्तरम् वैकालिकाद्यम् विकालभवस्नानादिसंविधि क्रियां प्रविधाय समाप्य विकालवेलासमये शुभमुहूर्त्ते इत्यर्थः सकेतने सध्वजे मीनध्वजस्य कामदेवस्य आयतने मन्दिरे गतौ प्राप्तौ तौ कामपालवसन्तदेवौ स्मरस्य कामस्य मूर्तेः बिम्बादनुपृष्ठभागे तिष्ठतः स्म यथा न कोऽपि पश्येदिति भावः ॥१११॥

अथ केशराऽऽगमननिश्चयमाह—माङ्गल्येति

माङ्गल्यतूर्यस्य निनादमुच्चकैर्वितत्य ताभ्यां श्रवणातिथेयताम् ।
तस्याः समायातमिलोर्वशीश्रियस्तदेकहृद्भ्यां निरचायि चेतसि ॥११२॥

माङ्गल्यस्य मङ्गलसूचकस्य तूर्यस्य वाद्यस्य उच्चकैरुच्चैः निनादं ध्वनिम् श्रवणयोरातिथेयताम् वितत्य, श्रुत्वेत्यर्थः । तस्याम् केशरायामेवैकमेकमात्रम् हृदयम् ययोस्ताभ्याम् केशरामेव चिन्तयद्भ्याम् ताभ्याम् कामपालवसन्तदेवाभ्याम् चेतसि स्वमनसि इलायां पृथिव्यामुर्वशी अप्सरोविशेषः तस्याः श्रीरिव श्रीर्यस्यास्तस्याः केशरायाः समायातं समागमनं निरचायि निश्चितमनुमितमित्यर्थः ॥११२॥

अथ केशरायाः काममन्दिरागमनमाह-मन्त्रमिति

मन्त्रं महादेवमनोभवोदितं स्वयं स्मरन्ती प्रिययोगकारणम् ।
द्वाराङ्गणं सा स्मरदेवसद्मनः समाससादाऽथ समीहितप्रदम् ॥११३॥

अथानन्तरम् सा केशरा समीहितप्रदम् अभीष्टसाधकम् प्रियेण योगस्य सङ्गमरूपस्य कारणम् साधनम् महादेवस्य शम्भोर्मनसो भवेन कामदेवेनेत्यर्थः, शम्भुर्हि तृतीयनेत्राग्निना दग्धं कामं रतिप्रार्थनातः प्रसह्य पुनः स्वमनसा एव तमुत्पादितवानिति पौराणिकीकथाऽत्रानुसंधेया, यद्वा महादेवेन सर्वजगद्वशीकरणहेतुना देवश्रेष्ठेन, मनोभवेन कामदेवेनोदितमुक्तं मन्त्रं स्वयं स्मरन्ती काममन्त्रं जपन्तीत्यर्थः । स्मरदेवस्य कामदेवाख्यदेवस्य सद्मनः मन्दिरस्य द्वारे यदङ्गणं तत्समाससाद प्राप ॥११३॥

अथ तस्याः पुष्पादिग्रहणमाह—उच्चैरिति

उच्चैर्विमानादथ देवतेव सा मनुष्यवाह्यादवतीर्यवर्यरुक् ।
आदत्त पुष्पादिचयं प्रियङ्कराकरादनङ्गं भगवन्तमर्चितुम् ॥११४॥

अथ द्वाराङ्गणप्राप्त्यनन्तरं वर्यरुगुत्तमच्छविः सा केशरा देवताविमानादेव उच्चैः मनुष्यवाह्याद्विमानात् शिबिकादितः अवतीर्य भगवन्तमनङ्गं कामदेवमर्चितुम् प्रियङ्कराकरात् पुष्पादिचयमादत्त गृहीतवती ॥११४॥

अथ तया मन्दिरद्वारपिधानमाह-एकैवेति

एकैव सा मन्मथदेवमन्दिरान्तरं विवेशाऽऽलिनिषिद्धबालिका ।
कल्पोऽयमित्युज्झितसंशया ददौ स्वपाणिना तस्य कपाटसम्पुटम् ॥११५॥

केशरा आल्या सख्या निषिद्धा प्रविशन्ती निवारिता बालिका अन्या कुमारिकादिर्यस्याः सा तादृशी, अत एव एका एकाकिनी एव मन्मथदेवमन्दिरान्तरं विवेश, तथा कल्पोऽयम् एष विधिरित्यतः उज्झितसंशया संशयरहिता सती स्वपाणिना तस्य मन्दिरस्य कपाटसम्पुटम् ददौ द्वारं प्यधादित्यर्थः द्वारं पिधाय कामार्चनस्य विहितत्वान्निःसंशयं तथा चकारेत्यर्थ ॥११५॥

अथ तस्याः कामपूजनमाह-आनीतेति-

आनीतनैवेद्यसुमादिसंचयै-रनङ्गमुद्दिश्य महीतले कनी ।
प्रक्षिप्य सार्घं विरहाऽऽतुरा ततः कृताञ्जलिर्व्याहरति स्म चेदृशम् ॥११६॥

सा कनी कन्या केशरा अनङ्गम् कामदेवमुद्दिश्य आनीतैः नैवेद्यैः मधुरादिफलादिभिः सुमादिना पुष्पादिना संचयैश्च महीतले भूमौ अर्घ्यं पूजार्थजलं प्रक्षिप्य ततः अर्घ्यदानानन्तरम् विरहातुरा प्रियवियोगपीडिता सती कृताञ्जलिरञ्जलिं बध्वा ईदृशं वक्ष्यमाणप्रकारं व्याहरति कथयति स्म च प्रार्थयति स्मेति यावत् ॥११६॥

तद्व्याहृतिमेवाह—वृन्दारकेति—

वृन्दारकाधीश्वरमान्यशासन ! प्रवृद्धसारासुरनाथसेवित !
लक्ष्मीमनोऽम्भोजविकाशभास्कर ! प्रभो ! जय त्वं रतिजीवितेश्वर ! ॥११७॥

वृन्दारकाधीश्वरेण देवेन्द्रेणापि मान्यं शासनमाज्ञा यस्य स तत्सम्बुद्धौ, देवेन्द्रपूजित ! प्रवृद्धसारैरतिबलवद्भिः असुरनाथैः असुरेन्द्रैः सेवितः लक्ष्मीमनोऽम्भोजस्य लक्ष्णीहृत्कमलस्य विकाशे विकाशने भास्करः सूर्य इव, लक्ष्मीपुत्रत्वात्कमलस्येति भावः । रत्याः तदाख्यप्रियायाः जीवितेश्वर ! पते ! प्रभो ! त्वं जय सर्वोत्कर्षेण वर्त्तस्व ॥११७॥

अथ तत्सामर्थ्यं वर्णयति पौष्पैरिति—

पौष्पैः शरैः पञ्चभिरेव विष्टपत्रयं त्वया निर्जितमीश ! हेलया ।
प्राकाम्यमेतद्भुवनत्रयातिग ? प्रकाममालोक्यत एव तावकम् ॥११८॥

ईश ! स्वामिन् ! भुवनत्रयातिग ! लोकत्रयोत्तम ! त्वया कामदेवेन हेलया अप्रयासेनैव पौष्पैः पुष्पनिर्मितैः पञ्चभिः शरैरेव, आस्तां बहुभिः लौहादिमयैरिति भावः, ऐतेनेतरासाधारणं

सामर्थ्यमुक्तम् । विष्टपत्रयं भुवनत्रयं निर्जितं वशीकृतम् तावकं कामदेवस्य तव एतत्प्राकाम्यं प्राबल्यं प्रकामं यथेष्टमालोक्यते दृश्यते एव ॥ ११८॥

अथ साम्प्रतं कामस्यालङ्घ्यशासनत्वमाह ब्रह्मेशेति—

ब्रह्मेशनारायणमुख्यनिर्जरा न शासनं लङ्घयितुं क्षमास्तव ।
अन्यः प्रतापस्तव को विवर्ण्यते विवर्ण्यमानाद्भुतवीर्यवैभव ? ॥११९॥

विवर्ण्यमानम् कीर्तनीयमद्भुतं वीर्यं पराक्रमो वैभवः प्रतापश्च यस्य स तादृशः, तत्सम्बोधने स्तुत्यप्रताप ! ब्रह्मा ईशः शिवः नारायणो विष्णुश्च मुख्यं येषाम् ते तादृशा निर्जरा देवाः तव कामदेवस्य शासनमाज्ञामुल्लङ्घयितुम् न क्षमाः समर्थाः । सर्वे एव कामपरवशा इत्यर्थः । एवञ्च अन्य उक्तादन्यः कः प्रतापस्तव वर्ण्यते ? उक्तः प्रताप एवातिमहान्, ततोऽन्यस्त्वं वर्णनीय एवेति भावः ॥११९॥

अथ स्वाशयं निवेदयति वप्तुरिति—

वप्तुः स्वरूपं तनया विजानते यथार्थमित्यत्र न कोऽपि संशयः ।
स्वामिन् ! मनोभूर्मम मानसं विदन्ननिष्टभर्त्रा सह मां न योजय ॥१२०॥

तनयाः पुत्राः वप्तुः पितुः जनयितुरित्यर्थः, स्वरूपमाशयं यथार्थं एव विजानते जानन्ति इत्यत्र विषये संशयो न, अपितु निश्चय एव, अत एव, स्वामिन् । मनोभूः ! मम मानसं विदन् जानन्, मनोजन्यत्वात्तव पितुर्मनसः पुत्रत्वात्कामस्य तत्स्वरूपज्ञत्वादुक्तहेतोरिति भावः मां केशराम् अनिष्टेन अनभिमतेन भर्त्रा सह न योजय ॥१२०॥

अथोपालम्भमाह काममिति—

कामं समेषां सफलं करोपि चेति ते प्रवादः प्रथितो जगत्त्रये ।
भर्ता त्वया नैव स मे प्रदीयते तदत्र भाग्यं मम किं विगीयते ॥१२१॥?

ते तव कामदेवस्य समेषा सर्वेषां काममिच्छां सफलं करोषि च इतीत्थम् प्रवादः जनश्रुतिः जगत्त्रये प्रथितः ख्यातः, अस्तीति शेषः । किन्तु तादृशेन त्वया मम स भर्ता वसन्तदेवः न प्रदीयते तत्ततोऽत्र मम भाग्यं विगीयते निन्द्यते किम् ? मम मन्दभाग्यतया पूर्वैवं भवतीति भावः ॥१२१

जन्मान्तरेऽपि स पतिर्भवत्वित्याह विश्राणित इति—

विश्राणितो जन्मनि नात्र मे पतिर्वसन्तदेवः स वसन्तमित्र ! चेत् ।
जन्मान्तरेऽपि प्रियमेनमेव मे रतीश देया मृगये न चापरम् ॥१२२॥

वसन्तस्य तदाख्यस्य स एव वा मित्रं यस्य स तादृशः अत्रास्मिन् जन्मनि स वसन्तदेवः जन्मान्तरेऽपि एनं वसन्तदेवमेव प्रियं देयाः देहीत्याशासे, अपरं पतिं वसन्तदेवादन्यं न मृगये इच्छामि, अत्र वसन्तमित्रस्य वसन्तदानं सम्भवितमपि निषिध्यते इति विरोधालङ्कारो ध्वन्यते इति ॥१२२॥

अथ तस्या आत्मघातप्रयासमाह इत्याद्युदित्वेति—

इत्याद्युदित्वा किल तस्य तोरणे निबध्य पाशं लघु यावदाग्रहात् ।
उद्बन्धनं कर्तुमियेष केशरा स तावदाविर्भवति स्म तत्पुरः ॥१२३॥

इत्याद्युक्तप्रकारमुदित्वोक्त्वा केशरा, किलेत्यलीके, तस्य काममन्दिरस्य तोरणे आग्रहाद् हठपूर्वकम् यावल्लघु शीघ्रं पाशं निबध्य उद्बन्धनं स्वकण्ठोद्बन्धनं कर्तुमियेष प्रचक्रमे तावत्तस्याः पुरोऽग्रे स वसन्तदेवः आविर्भवति स्म प्रकटोऽभूदित्यर्थः ॥१२३॥

अथ तस्या आश्चर्यमाह-मेति—

मा साहसं तन्वि ! वितन्विति स्वयं निवेद्य तत्पाशमसौ व्यसूत्रयत् ।
कस्मादकस्मात् समुपागतः पतिर्ममेति चित्रं विभराम्बभूव सा ॥१२४॥

तन्वि ! कृशाङ्गि ! साहसमविमृश्यकारित्वं मा न वितनु कुरु इति इत्थं निवेद्य कथयित्वा असौ वसन्तदेवः स्वयमात्मनैव तत्पाशं केशरागलबद्धं पाशम् व्यसूत्रयदुदमोचयत् । सा केशरा च कस्मात्कुतः अकस्मादतर्कित एव मम पतिः प्रियो वसन्तदेवः समुपागत इति इत्थं चित्रमाश्चर्यं विभराम्बभूव चकार ॥१२४॥

अथ वसंतदेवोक्तिमाह-ऊचे इति—

ऊचे वसन्तेन सतेदृशं च सा प्रिये ! प्रियस्तेऽस्मि स विप्रियोज्झितः ।
एतद् यदर्थं निरमायि साहसं त्वया किमन्यत् तव वाऽस्ति दुर्घटम् ? ॥१२५॥

सता सज्जनेन वसन्तेन वसन्तदेवेन च सा केशरा ईदृशमूचे कथिता, ईदृगमिति किमित्याह प्रिये ! विप्रियेणानर्थेन उज्झितः रहितः स कुशल इति यावत्, स ते प्रियो वसन्तदेवोऽस्मि, अहमिति शेषः । स क इत्याह यदर्थं यं वसन्तदेवमुद्दिश्य त्वया केशरया एतदात्मघातरूपम् साहसं निरमायि कृतम्, वा अथवा तव केशरायाः अन्यदात्मघातादितरत्कि दुर्घटम् दुष्करमस्ति ? न किमपी-त्यर्थः या आत्मघातमपि कर्तुं प्रभवति । सा अन्यदपि सर्वं कर्तुं प्रभवतीति भावः ॥१२५॥

सम्प्रति करणीयमाह-एतदिति-

एतन्मित्रपवित्रमन्त्रवशतोऽत्र प्राक् प्रविश्य स्थित-
स्त्वां प्रापं किल तज्जिहीर्षुरधुनाऽहं कामदेवाज्ञया।
तन्नेपथ्यमशेषमस्य निजकं प्रीत्या भवत्याऽर्प्यतां,
येन द्राक् परिधाय तत्तव पितुर्वेश्माऽधितिष्ठत्ययम् ॥१२६॥

एतस्य प्रत्यक्षस्थितस्य मित्रस्य कामपालाख्यस्य पवित्रस्य निरन्तरा यस्य कार्यसाधकस्य च मन्त्रस्य परामर्शस्य वशतः प्रभावतः प्राक् पुरा एवात्र मन्दिरे प्रविश्यागत्य स्थितः अहं तत् स वसन्तदेवः कामदेवाज्ञया मन्दिरस्थदेवाज्ञया कामातुरतया वा त्वां केशरां जिहीर्षु हर्तुमिच्छुः अधुना प्रापं प्राप्तोऽस्मि, किलेति हर्षे, त्वां प्राप्य हृष्टोऽस्मीत्यर्थः। तत्तस्मात्तव हरणीयत्वाद्धेतोः भवत्या केशरया प्रीत्या, न तु बलादित्यर्थः। निजकं स्वकीयमशेषं समस्तं नेपथ्यं वेषपरिधानमस्य कामपालस्यार्प्यताम् दीयताम्, येन त्वन्नेपथ्यदानेन हेतुना अयं कामपालः द्राक् तन्नेपथ्यं परिधाय गृहीत्वा, त्वद्वेषमाधायेत्यर्थः तव पितुः पञ्चनन्दिनः वेश्म गृहमधितिष्ठति अधिश्रयति ॥१२६॥

ननु तदनन्तरमावयोः किं कर्त्तव्यमिति चेत्तत्राह - त्वदिति-

त्वन्नेपथ्यभृताऽमुना तव गृहे तन्वङ्गि ! चाङ्गीकृते-
यास्यावो निशि नौ निरीय नगरं सौख्याप्तये स्वेप्सितम्।
श्रुत्वैवं निजवेषमार्पयदियं सा कामपालाय तं,
देवं काममनुस्थितः सह तया हृष्टो वसन्तोऽप्यथ ॥१२७॥

तन्वङ्गि ! मृद्वङ्गि ! त्वन्नेपथ्यभृता गृहीतत्वद्वेषेणामुना कामपालेन तव गृहे अङ्गीकृते प्राप्ते च नौ त्वञ्चाहञ्चेत्यावाम् निशि रात्रौ निरीय ते मन्दिरान्निर्गत्य सौख्याप्तये सुखप्राप्तये स्वेप्सितं निजेष्टं नगरं यास्यावः, एवमुक्तप्रकारं श्रुत्वा इयं सा केशरा कामपालाय निजवेषमार्पयद्दत्तवती, अथानन्तरं वसन्तः वसन्तदेवोऽपि तया केशरया सह तं मन्दिरस्थं कामं देवमनु कामदेवमूर्तेः पश्चाद्भागे स्थितः सन् हृष्टः हर्षमाप्तवान् ॥१२७॥

अथ कामपालस्य ततो निर्गमनमाह-पुष्पौघैरिति-

पुष्पौघैः पूजयित्वा परिमलकलितैः कामदेवं प्रकामं,
नीरङ्ग्यन्तर्हितास्यः सुललितगमनः केशराकल्पकल्पः।
उद्घाट्याऽरं कपाटे स्वयमपि रुचिरः कामपालो निरीय,
तत्सख्या दत्तहस्तः पृथुतरमभजद् याप्ययानं नृवाह्यम् ॥१२८॥

रुचिरः सुन्दरः कामपालः केशरायाः कल्पः नेपथ्यमेव कल्पो नेपथ्यं यस्य स तादृशः केशरा-रूपः सन् परिमलकलितैः सुरभिभिः पुष्पौघैः कामदेवं प्रकाममतिशयेन पूजयित्वा निरङ्ग्याम् अव-

गुण्ठने अन्तर्हितं तिरोहितमास्यं मुखं यस्य स यथा मुखं दृष्ट्वा न कोऽपि लक्षयेदिति भावः तादृशः सन् स्वयमपि स्वयमेवारं शीघ्रं कपाटे अरे उद्घाट्य निरीय काममन्दिरान्निर्गत्य तस्याः केशरायाः सख्या प्रियङ्करया दत्तहस्तः गृहीतकरः सुललितगमनश्चारुगतिमान् स्त्र्युचितगतिमानित्यर्थः । नृवा-ह्यम् पुरुषवाह्यम् पृथुतरं विशालं याप्यायानं शिविकामभजत् ॥१२८॥

अथ तस्य पञ्चनन्दिगृहप्राप्तिमाह—वाहीकैरिति—

वाहीकैरुह्यमानं प्रथममधिगतं पञ्चनन्दीभ्यगेहे
यानादुत्तार्य वेगात् प्रथमसहचरी स्वर्णवेत्रासनस्थम् ।
तं प्रोचे केशरे ! त्वं सहृदयहृदयाधीशसंयोगहेतुं
मन्त्रं तिष्ठ स्मरन्ती, भवति हि भविनां मन्त्रतो वाञ्छितार्थः ॥१२९॥

वाहीकैः तज्ज्ञातीयैः शिविकावाहकपुरुषैः उह्यमानम् शिविकायां नीयमानम् प्रथमम् तदेव प्रथमं यथास्यात्तथा न तु प्राक्कदापि पञ्चनन्दीभ्यस्य गेहे अधिगतं प्राप्तम् प्रथमा पूर्वोक्ता सह-चरी सखी प्रियङ्करा वेगाद् झटिति यानात् शिविकाया उत्तार्य स्वर्णस्य वेत्रासने तिष्ठतीति तं ता-दृशं तं कामपालं केशरारूपं प्रोचे; किमित्याह केशरे ! त्वम् सहृदयस्य प्रियस्य हृदयाधीशस्य स्व-प्राणेशस्य संयोगहेतुं सङ्गमसाधकं मन्त्रं स्मरन्ती हृदि जपन्ती तिष्ठ, ननु मन्त्रस्मरणेन किमिति चेत्त-त्राह हि यतः भविनां प्राणिनाम् मन्त्रतः मन्त्रस्मरणतः वाञ्छितार्थः भवति अभीष्टसिद्धिर्भवति, मन्त्र-स्यालौकिकशक्तिमत्त्वादिति भावः ॥१२९॥

अथ मदिरायास्तत्रागमनमाह- तदिति—

तद्वाक्यश्रवणादनन्तरमसौ तस्यां गतायां तदा
मन्त्रं कामरतीष्टसङ्गमकरं नामाऽस्मरत् सोऽप्यलम् ।
तत्कान्ता मदिराऽपि मातुलसुता श्रीकेशरायास्तदा-
ऽऽहूता शङ्खपुरादिहाऽऽगमदरं पाणिग्रहस्योत्सवे ॥१३०॥

असौ केशरारूपः स कामपालोऽपि तस्याः प्रियङ्कराया वाक्यस्य श्रवणादनन्तरं तस्यां प्रियङ्करायां गतायां सत्याम् तदा कामस्य रतेश्च इष्टं सङ्गमकरं सङ्गमसाधकशक्तिमन्तं मन्त्रं अलमत्यर्थम् अस्मरन्नाम, नामेतिवाक्यालङ्कारे तदा तस्मिन्काले तस्य कामपालस्य कान्ता प्रिया श्रीकेशरायाः मातुलस्य सुता मदिरा अपि पाणिग्रहस्य केशराविवाहस्योत्सवे आहूता आमन्त्रिता सती अरं शीघ्रमेव शङ्खपुरादिह पञ्चनन्दिगृहे आगमदागता ॥१३०॥

अथ मदिराकृतकेशराssसमाश्वासनमाह- तस्येति--

तस्याग्रे सा निषद्येदमवददुदयत्कोष्णनिःश्वासपूर्वं
किं खेदं केशरे ! त्वं नियतिविनियते कार्यजाते तनोषि ?
आस्ते ते जीवितेशः प्रियसखि ! सुकृती श्रीवसन्तः कलावा-
नित्यश्रौषं सखीभ्यो निजनगरगता सौख्यसम्पत्तिदाभ्यः ॥१३१॥

सा मदिरा तस्य केशरारूपस्य कामपालस्याग्रे निषद्य उपविश्य उदयन् निर्गच्छन् कोष्णः खेदादीषदुष्णः निःश्वासः पूर्वः यथास्यात्तथा उष्णं निःश्वस्येत्यर्थः । इदमवदत्, इदमिति किमित्याह- केशरे ! नियत्या भाग्येन विनियते नियन्त्रिते कार्यजाते कार्यमात्रे सति किं खेदं तनोषि ? न कर्त्तव्यम्, स्वाधीने हि खेदो युक्तः, भाग्याधीने तु खेदान्न कोऽपि लाभ इति खेदस्त्याज्य इति भावः । तत्प्रियवर्णनेन तामाह प्रियसखि ते तव जीवितेशः प्रियः वसन्तः वसन्तदेवः कलावान् कलाकुशलः सुकृती पुण्यवांश्चास्ते इतीत्थम् निजनगरगता स्वपुरस्यैवाहं मदिरा सौख्यस्य सम्पत्तिमाधिक्यं ददतीति ताभ्यः सुखदात्रीभ्यः सखीभ्योऽश्रौषम् ॥१३१॥

न केवलं तवैव प्रियवियोगः, किन्तु ममापीत्याह- मयेति--

मया प्रियवियोगजं प्रचुरदुःखमास्वादितं
स्वयं खलु वदामि तत तव विधातुमाश्वसनाम् ।
विधिर्भजति वामतां किल तनोत्यनिष्टं ततो
गतोऽयमनुकूलतां सखि ! मनीषितं दास्यति ॥१३२॥

मया मदिरयाऽपि प्रियवियोगजं प्रचुरदुःखमतिदुःखम् आस्वादितमनुभूतं खलु, तदनुभूतं दुःखम् तवाश्वसनां मनःशान्तिं विधातुं कर्तुं स्वयं वदामि, समानदुःखे ज्ञाते मनोधैर्यं बध्नातीति भावः । सखि ! किल यदा विधिः वामतां प्रतिकूलतां भजति श्रयति ततस्तदा अनिष्टं स्वानभिमतं तनोति, ततस्तदनंतरम् अनुकूलतां गतः विधिः मनीषितं स्वाभिमतं दास्यति, इष्टानिष्टे भाग्याधीने इति भावः ॥१३२॥

त्वत्तोऽपि ममदुःखमधिकमित्याह- किञ्चेति--

किञ्च त्वं सखि ! वर्णनीयचरिता धन्याऽसि नूनं यथा-
ऽऽलापालोकनजं सुखं सह मुहुः स्वप्रेयसाऽऽसादितम् ।
वृत्तं मेऽप्यतिदारुणं पुनरिदं संश्रूयतां दुःश्रवं,
स्वालीभिः सममेकदाऽगममहं श्रीशङ्खयक्षोत्सवे ॥१३३॥

सखि ! किञ्च त्वं केशरा नूनं निश्चयेन वर्णनीयचरिता स्तुत्यचरिता धन्या धन्यवादार्हासि, तत्र हेतुमाह- यथा त्वया केशरया स्वप्रेयसा स्वप्रियतमेन सह मुहुः वारंवारम् आला-

पाऽऽलोकनजं सम्भाषणदर्शनजनितं सुखमासादितम् प्रापम्, ननु तर्हि त्वं कथमसीति चेत्तत्राह पुनः मे मम मदिरया इदं वक्ष्यमाणम् वृत्तमुदन्तोऽतिदारुणमतिभयंकरमतिकठिनं वा, अत एव दुःश्रवम् श्रोतुमपि दुःखं संश्रूयताम्, किन्तदित्याह- स्वालीभिः । निजसखीभिः सह अहं मदिरा एकदा श्रीशङ्खयक्षस्योत्सवे अगमम् गतवती ॥१३३॥

ननु तत्र किमभूदित्याकाङ्क्षायामाह—तत्रेति—

तत्राऽशोकपलाशिपल्लवचयं गृह्णन्तमेकान्ततो,
मूलेऽशोकमहाद्रुमस्य तरुणं मूर्त्या स्मरं प्रैक्षिषि ।
ताम्बूलं प्रहितं सरागमनसा तस्मै वयस्ये ? मया,
तेनाऽहं करुणारसाम्बुनिधिना व्यालेभतो रक्षिता ॥१३४॥

तत्र शङ्खयक्षोत्सवे एकान्तत एकान्ते अशोकस्य तदाख्यस्य महाद्रुमस्य मूले अशोकपलाशिनः अशोकवृक्षस्य पल्लवचयं किसलयपुञ्जं गृह्णन्तम् मूर्त्या स्वरूपेण कृत्वा स्मरं कामदेवतुल्यं तरुणं युवानं प्रैक्षिषि दृष्टवती, वयस्ये ! सखि ! मया मदिरया तस्मै यूने सरागमनसा सप्रेमहृदयेन ताम्बूलं प्रहितं सखीद्वारा प्रेषितम् । करुणा एव रसस्तस्याम्बुनिधिना सागरेण तेन तरुणेनाहं मदिरा व्यालान्मत्तादिभतो गजाद्रक्षिताऽगोपि ॥ १३४ ॥

ननु ततः किमभूदित्याह-भूय इति--

भूयो व्यालकरीन्द्रभीतिविधुरा नष्टा सखीभिः समं,
पश्यन्ती पुनरेव तं बहुतरं प्रैक्षिष्यहं न क्वचित् ।
वारीमध्यगतेव तत्प्रभृति च स्तम्बेरमी विस्तृतो-
द्वेगा प्राणिमि गाढपञ्जरमिता सारीव दुःखार्दिता ॥ १३५ ॥

भूयः पुनः व्यालान्मत्तात्करीन्द्राद्या भीतिस्तया विधुरा पीडिता सखीभिः समं नष्टा पलायिता पुनरेव मुहुर्मुहुः बहुतरं सविशेषं पश्यन्त्यपि अहं मदिरा तं तरुणं क्वचिदपि न प्रैक्षिषि दृष्टवती, तत्प्रभृति तदारभ्य च वारीमध्यगता आलानबद्धा स्तम्बेरमी गजस्त्री इव विस्तृतोद्वेगाऽत्युद्वेगवती गाढे दृढे पञ्जरे मिता बद्धा सारी शुकस्त्री इव दुःखेनार्दिता पीडिता प्राणिमि जीवामि, न तु सुखं जीवामि, परतन्त्रत्वात्प्रियवियोगाच्चेति भावः ॥ १३५ ॥

प्रियदर्शनदौर्लभ्यमाह-विनेति—

विना स्वप्नं क्वाऽपि प्रियसखि ! न पश्यामि तमहं,
प्रसन्ने दैवेऽतः परमपि यदीक्षिष्यत इह ।
तनूकर्तुं दुःखं हृदि तव पुरः प्रोच्यत इदं,
यथा दुःखी दुःखं कलयति तया नैव हि सुखी ॥ १३६ ॥

प्रियसखि ! केशरे ! अहं मदिरा तं प्रियं कामपालं स्वप्नं विना क्वाऽप्यन्यत्र जाग्रतीति भावः न नैव पश्यामि तदेकतानचित्ततया स्वप्ने सोऽनुभूयते, न तु जाग्रत्या, स्वप्नस्य जाग्रच्चिन्तिताऽनुगुणत्वादितिभावः एवञ्च तद्दर्शनं भाग्यादेव.संभावयामि, तदाह- यदि अथवा अतः अस्मात् कालात्परमग्रतः इहास्मिन् जन्मनि, दैवे भाग्ये प्रसन्ने अनुकूले सत्येव ईक्षिष्यतेऽपि तद्दर्शनसंभावनेति यावत्, ननु मदग्रे तव स्वदुःखकथनेन को लाभ इति चेत्तत्राह- इदमनुभूयमानं हृदि दुःखं हृत्स्थं दुःखं तनूकर्तुमल्पीकर्तुं लघूकर्तुमित्यर्थः तव केशरायाः पुरः प्रोच्यते, कथनेन हृष्टेभ्यो दुःखं लघूभवतीति भावः किञ्च सहानुभूत्या समाश्वासोऽपीत्याह- यथा हि दुःखी स्वयं दुःखितः दुःखं परकीयं दुःखं कलयति मनुते, सहानुभूतेरिति भावः तथा सुखी नैव, समानशीलाभावात्सहानुभूतेरभावादिति भावः ॥१३६॥

त्वदधिक दुःखशीलतयाऽपि यथाऽहं धैर्यवती तथा त्वमपि धैर्यं समाश्रयेत्याह- तदिति--

> तत् खेदमाशु विजहीहि मनः प्रसाद-संपादकं सखि ! समाश्रय धैर्यमेव ।
> आराधितो विधिरयं तव शर्मदाता, नैतादृशस्य भवतीह कृतघ्नभावः ॥ १३७ ॥

तत्तस्मात्त्वाधिकदुःखितामपि सधैर्यां मां दृष्ट्वा आशु खेदं प्रियाप्राप्तिजं दुःखं विजहीहि त्यज, तथा, सखि ! मनःप्रसादसम्पादकं धैर्यमेव समाश्रय, धैर्येण हि दुःखं सह्यते, मनश्च स्वस्थं भवतीति भावः ननु न धैर्यमात्रणेष्टप्राप्तिरिति चेत्तत्राह- अयं मन्त्रजपात्मकः विधिरनुष्ठानम् आराधितः कृतः सन् तव केशरायाः शर्मदाता इष्टप्रदः, स्यादेवेति शेषः, धैर्यमास्थाय मन्त्रं जप, तदेव समर्थयति इहास्मिन् विषये इष्टसाधनविधौ एतादृशस्य मन्त्रानुष्ठानादिप्रकारस्य विधेः कृतघ्नभावः निष्फलत्वं न नैव, भवति अपि तु फलप्रदत्वमेवेति भावः ॥१३७॥

अथ कामपालस्य स्वप्रकटनमाह-नीरङ्गीमिति—

> नीरङ्गीमपनीय तामथ जगौ कामः स रङ्गान्विते !,
> यं त्वं काङ्क्षसि सर्वदा स च पुरा दृष्टप्रियस्तेऽस्म्यहम् ।
> संयुक्ताऽस्त्यधुना वसन्तसुहृदा सा केशरा त्वं मये-
> वैतस्याऽभिमतं विधेर्विदधतः किं वा विलम्बो भवेत् ॥ १३८ ॥

अथ मदिरोक्तिश्रवणानन्तरम् स केशरारूपः कामः कामपालः नीरङ्गीमवगुण्ठनमपनीयोत्सृज्य, प्रकटो भूत्वेति यावत् जगौ किमित्याह रंगान्विते । त्वं मदिरा यं पुरुषं सर्वदा काङ्क्षसि इच्छसि स त्वत्कामनाविषयः पुरादृष्टश्चासौ प्रियश्च स तादृशश्च ते तव अहमहमेवास्मि ननु तर्हि केशरायाः किमिति यत्तत्राह सा तव सखी केशरा अधुना वसन्तेन तदात्वेन सुहृदा प्रियेण संयुक्ता मिलिताऽस्ति, त्वं मदिरा मया स्वप्रियेण कामपालेनैव, ननु

कथमित्थं जातमिति चेदचिन्त्यमहिमा विधिरित्याह एतस्य प्रसिद्धस्य विधेर्भाग्यस्य अभिमतमिष्टं विदधतः सम्पादयतः सतः को वा विलम्बो भवेत् ? न कोऽपीत्यर्थः अचिन्त्यमहिमात्वाद्विधिरभिमतं झटित्येव सम्पादयति, यदुक्तम्" आनीय झटिति घटयति विधिरभिमतमभिमुखीभूत" इति ॥ १३८ ॥

नन्वेवमेतत् सम्प्रति किं विधेयमिति चेत्तत्राह-प्रेति--

प्रत्यासीदति सांप्रतं प्रियतमे ! वेलाऽपि वैवाहिकी,
किञ्चिद् येन निरीयते झटिति मे तद् द्वारमुद्भावय ।
पश्चात्योपवनीयपक्षकमियं तस्याऽथ साऽदर्शयत्,
तेनैव प्रययौ समं मदिरया कामः स कामातुरः ॥ १३९ ॥

प्रियतमे ! सम्प्रति वैवाहिकी वेला विवाहमुहूर्त्तमपि प्रत्यासीदति आसन्नतामेति, अतः येन द्वारेण निरीयते निर्गम्यते तत्तादृशं किञ्चित्किमपि द्वारं मे मम झटिति उद्भावय दर्शय येनारमितो निर्गच्छाव इति भावः अथानन्तरमियं सा मदिरा तस्य कामपालस्य पाश्चात्यस्य गृहपश्चिमस्थस्योपवनस्य पक्षकं द्वारमदर्शयत्, ततश्च स कामः कामपालः कामातुरः रागार्त्तः सन् रागातुरस्य हि न किञ्चिदकर्त्तव्यमिवेत्यतः तेनैव द्वारेण मदिरया समं सह प्रययौ निर्गतवान् ॥ १३९ ॥

अथ जिनपतिः कथामुपसंहरन्नाह-आयातस्येति--

आयातस्य पुरः पुरेऽत्र मदिराप्राणेश्वरः केशरा-
प्राणेशस्य समेत्य दारकलितोऽसौ प्राप कामो मुदम् ।
प्राग्जन्मप्रियतावशाद् नरपते तौ ढौकने पञ्चकं
वस्तूनां तनुतोऽनिशं कलय तानग्रं निषण्णानिमान् ॥ १४० ॥

पुरः प्रागेव अत्रास्मिन् हस्तिनापुरे आयातस्यागतस्य केशरा प्राणेशस्य वसन्तदेवस्य मिलित्वा समेत्य, सम्बन्धसामान्ये षष्ठी दारकलितः प्रियासमन्वितः असौ कामः कामपालः मुदं प्राप नरपते ! कुरुचन्द्र ! तौ द्वौ वसन्तदेवकामदेवौ प्राग्जन्मप्रियतावशात् पूर्वजन्मप्रेमाधीनौ सन्तौ ढौकने तवोपहारेऽनिशं सर्वदा वस्तूनां पञ्चकम् पञ्चवस्तूनि तनुतः सम्पादयतः तानिमान् पूर्वजन्मप्रियानग्रं निषण्णान् उपविष्टान् कलय जानीहि ॥ १४० ॥

प्रियसङ्गमादिष्टं भुङ्क्ष्वेत्याह-इष्टैरिति--

इष्टैरेभिः सह नरपते ! जाततत्त्वावबोध-
स्तत्त्वं भोक्तुं प्रभवसि तरां सन्निधिस्थैर्निकामम् ।
नेयत्कालं किमपि भवता भुक्तमेतानमत्वा-
ऽभीष्टान् प्रीतान् सुकृतकरणे निर्निदानं सहायान् ॥१४१॥

नरपते ! कुरुचन्द्र ! जाततत्त्वावबोधः एतेनोक्तप्रकारेण वस्तुपञ्चकढौकनमर्मज्ञः सन् एभिरिहस्थैः सन्निधिस्थैः सद्भिः जातपरिचयैरिष्टैः प्रियैः सह तत्त्वं सारभूतं वस्तु भोक्तुमुपभोक्तुं निकामम् यथेच्छम् प्रभवसि तराम् समर्थोऽसि यद्वा निकामं भोक्तुमित्यन्वयः एतान् पार्श्वस्थान् अभीष्टान् प्रियान् प्रीतान् प्रसन्नान् सुकृतकरणे पुण्यविधौ निर्निदानम् निष्कारणं यथास्यात्तथा सहायान् उपकारकान् अमत्वा अज्ञात्वा भवता त्वया कुरुचन्द्रेण इयत्कालमेतावन्तं कालं किमपि न भुक्तम्, प्रियसङ्गतो भुक्तं भुक्तम् अन्यथा त्वभुक्तमेवेति भावः ॥ १४१ ॥

अथ तेषां गृहगमनमाह-आकर्ण्येति--

आकर्ण्येत्यथ पञ्च तेऽपि सहसाऽस्मार्षुर्भवं प्राक्तनं,
स्थेमप्रेमनिमित्तसख्यभणने साक्षित्वविद्योतकम् ।
श्रीशान्तिं कुरुचन्द्रभूमिपतिरप्यानम्य कल्याणदं,
प्राक्प्रेम्णा स्वगृहे निनाय चतुरो बन्धूनिवेच्छुः सुखम् ॥१४२॥

अथानन्तरम् ते कुरुचन्द्रादयोऽपि इत्युक्तप्रकारमाकर्ण्य श्रुत्वा सहसा शीघ्रं प्राक्तनं भवं पूर्वजन्म अस्मार्षुः तथा, श्रीकुरुचन्द्रभूपतिः स्थेम्नः स्थिरस्य प्रेम्णः निमित्तस्य सख्यस्य भणने कथने सत्यापने वा साक्षित्वविद्योतकम् साक्षिणं, सर्वज्ञत्वादिति भावः कल्याणदं श्रीशान्तिमानम्य प्रणम्य सुखमिच्छुः सन् प्राक् पूर्वजन्मनः प्रेम्णा बन्धूनिव चतुरः वसन्तदेवादीन् स्वगृहे निनाय नीतवान् ॥१४२॥

आसीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः,
पट्टे श्रीगुणभद्रसूरिसुगुरुर्विद्यानदीसागरः ।
तच्छिष्येण कृते गतोऽसमरसः श्रीशान्तिवृत्ते महा-
काव्ये श्रीमुनिभद्रसूरिकविना सर्गोऽयमष्टादशः ॥१४३॥

निगदसिद्धोऽयं श्लोकार्थः

पाणिस्थं बदरं यथा कलयति द्रव्येण कालत्रये,
पर्यायेण तथाखिलं जगदमुं शान्तिः सदा शान्तिदम् ।
नत्वाऽनुग्रहकाम्यया रुचिमता मध्येहसर्गं मुदा,
नाम्ना दर्शनसूरिरेष शुभधीर्व्याख्याति चाष्टादशम् ॥

इति श्रीमन्मुनिभद्रसूरिकृते श्रीशान्तिनाथचरिते शासनसम्राट्-सूरिचक्रचक्रवर्ति-परमसद्गुरुश्रीमद्विजयनेमिसूरीश्वर पट्टालङ्कारावाप्तन्यायवाचस्पति-शास्त्रविशारद-विरुदाचार्यश्रीविजयदर्शनसूरीश्वर सन्दृब्ध प्रबोधिनी व्याख्यायामष्टादशः

सर्गः समाप्तः ॥



अर्हम्

## ॥ अथ एकोनविंशः सर्गः ॥

सर्गादौ मङ्गलमारचन् शान्तिं स्तौति-पृथ्व्यामिति—

पृथ्व्यां यस्मिन् संप्रवृत्ते विहारं, कर्तुं साग्रे योजनानां शतेऽपि ।
नेशुस्तूर्णं मारिदुर्भिक्षरोगाः, स श्रीशान्तिः श्रेयसे भूयसे वः ॥१॥

यस्मिन् श्रीशान्तौ पृथ्व्यां विहारं पादचारेण भ्रमणं कर्तुं, देशनादिना लोकानुग्रहायेति भावः। सम्प्रवृत्ते सति, साग्रे साधिके योजनानां शतेऽपि चतसृषु दिक्षु प्रत्येकं पञ्चविंशतिर्मध्ये मारयश्च दुर्भिक्षं च तादृशा अन्ये चापि रोगाः तूर्णं नेशुः शान्ताः तीर्थकृतोऽचिन्त्यातिशयवत्त्वादिति भावः। स तादृशोऽलौकिकमहिमा श्रीशान्तिः तदाख्यतीर्थकृद्वो युष्माकम् वाचकानां श्रोतॄणां च भूयसे प्रचुराय श्रेयसे कल्याणाय, भूयादिति शेषः ॥१॥

अथ त्रयोदशभिः कुलकेन लोकोपकृतिक्रियावर्णनमुखेन श्रीशान्तेर्विहारमाह-ग्रामीणानामिति—

ग्रामीणानां नागराणामिवाऽन्तश्चित्तं हर्षं निर्विशेषं प्रयच्छन् ।
साम्योत्कर्षं संप्रपन्नस्य दूरं, क्षेत्रज्ञस्याऽवस्थितेस्तत्त्ववृत्त्या ॥२॥

अन्तश्चित्तं मनसि साम्योत्कर्षं सर्वप्राणिषु समताऽतिशयम् दूरमतिशयेन सम्प्रपन्नस्याश्रितस्य क्षेत्रज्ञस्य स्वात्मनः "क्षेत्रज्ञ आत्मा पुरुष" इत्यमरः। तत्त्ववृत्त्या स्वस्वभावानुरूपेण, कषायादिसकलमलक्षयादिति भावः, तत्र च समताश्रयणं हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्। अवस्थितेरवस्थानाद्धेतोः नागराणामिव ग्रामीणानाम् नागराणाम् ग्रामीणानां चेत्यर्थः। निर्विशेषं निरतिशयं हर्षं प्रयच्छन् ददानः, व्यहार्षीदित्यग्रिमेणान्वयः, एवमग्रेऽपि बोध्यम्। यो हि समताश्रितो विशुद्धात्मा च, तं दृष्ट्वा जनास्तुष्यन्तीत्येवमुक्तिरिति ध्येयम् ॥२॥

कषायनाशाय तद्देशनाप्रवृत्तिमाह-विश्वेति—

विश्वारामं ताप्यमानं कषायज्वालाजिह्वज्वालजालेन कामम् ।
सिञ्चन्नुच्चैर्देशनावारिपूरैर्बिभ्रत्स्वच्छं शम्बरं वारिदो वा ॥३॥

कषायाः क्रोधमानमायालोभाः ज्वालेव जिह्वा यस्य सोऽग्निः स इव, तापकत्वादिति भावः। तस्य ज्वालानां जालेन कलापेन, कषायजनितप्रवृत्तिभिरित्यर्थः। काममत्यर्थम्; ताप्यमानम् भर्ज्यमानम्, पीड्यमानमिति यावत्, विश्वमाराम उपवनमिव, तम्, लक्षणया विश्वस्थलोकमित्यर्थः। देशना उपदेशवाचः वारिपूराः जलप्रवाहा इव तैः स्वच्छं निर्मलं निरतिचारञ्च शम्बरं जलम् "नीरक्षीराम्बुशम्बर" मित्यमरः। उपमेयपक्षे सशयोः श्लेषात् सम्बरम् सर्वथा आश्रमनिरोधात्मकं सर्वविरितिरूपं चारित्रमित्यर्थः, बिभ्रत् धारयन् वारिदो वः जलधर इव, उच्चैः अत्यन्तं सिञ्चन् प्लावयन् वर्षन् क इवेत्यत आह—यथा हि वारिदवर्षणेन आरामतापविलोपः, तथा तीर्थकृद्देशनया कषायोपशमेन कृत्वा लोकमनस्तापविलोप इति भावः ॥३॥

देशनया न तापलोपमात्रम् किन्तु प्रबोधोऽपीत्याह हृत्वेति--

हृत्वा विश्वव्यापि मोहान्धकारं वागुस्त्रौघैर्बोधयन् भव्यपद्मान्।
भिन्दन् सर्वं लोककोकस्य शोकमादित्यो वा विप्रलम्भप्रभूतम् ॥४॥

वाचः देशनागिरः उस्रौघाः मोहान्धकारनाशकत्वात् किरणकलापा इव तैः कृत्वा "किरणोस्रमयूखांशुगभस्तिघृण्गिरश्मयः" इत्यमरः। विश्वं व्याप्नोतीति स सर्वलोकगतश्चासौ मोहः अनात्माऽऽत्मीयेषु आत्मात्मीयबुद्धिः, स अंधकारः इव ज्ञानावरकत्वात्स च तम्, हृत्वा दूरीकृत्य, अत एव, भव्याः प्रबोधैकधर्मत्वात्पद्मानीव तान्, बोधयन् विकासयन् सम्यक्त्ववतः कुर्वंश्च, विप्रलम्भात्तीर्थान्तरीयकृतान्नानायुक्तिप्रयुक्तिभिर्विप्रतारणात्, तेषां मिथ्यात्वादिति भावः, प्रभूतम्, जातम्, अथ च दिवाऽपि मेघराहूपरागादिभिः रात्रिभ्रान्त्या वियोगजम्, लोकः कोकः चक्रवाक इव तस्य सर्वं शोकम् दुःखम् भिन्दन् नाशयन् आदित्यो वा सूर्य इव, व्यहार्षीत्। उपमा ॥४॥

अथ तस्य छत्रत्रयधारणं वर्णयति-वृत्तत्वेति

वृत्तत्वभाङ्निर्मलत्र्यातपत्रीव्याजाद् मौलेरूर्ध्वमाकाशदेशे।
प्रागाराद्धां धारयन् सुत्रिरत्नीं कार्तज्ञं चाख्यापयन् विश्वमध्ये ॥५॥

मौलेर्मस्तकस्योर्ध्वमुपरि आकाशदेशेऽवकाशे वृत्तत्वभाङ् वर्तुलाकारा या निर्मलाऽवदाता त्र्यातपत्री छत्रत्रयं तस्या व्याजान्मिषात् प्राक् पूर्वकाले आराद्धां सेविताम् सुत्रिरत्नीम् सम्यग् दर्शनज्ञानचारित्ररूपरत्नत्रयं धारयन् विश्वमध्ये कार्तज्ञं कृतज्ञतां ख्यापयन् प्रकटयन् नेव, सिद्धयर्थं प्राग-

राद्धाम् त्रिरत्नीम् साम्प्रतं कृतकृत्योऽपि धारयाम्येवेति कृतज्ञोऽहमेव, न तु अकृतज्ञः, अत्याक्षी-दिति भावः ॥५॥

अथ तद्ध्वजं वर्णयति-उद्दामोद्यदिति—

उद्दामोद्यच्छौर्यवीर्यप्रचण्डमोहात् त्रासाच्छिष्यवर्गस्य पूर्वम्।
भग्नज्ञानाऽह्वानविज्ञानहेतोरूर्ध्वीकृत्योद्भावयन् स्वध्वजं वा ॥६॥

पूर्वं सम्यक्त्वप्रतिपत्तितः प्राक्, शिष्यवर्गस्य उद्दामानि उच्छृङ्खलानि निग्रहीतुमशक्यानीति। यावत्, उद्यन्ति वर्धमानानि च शौर्याणि वीर्याणि च यस्य स चासौ प्रचण्डोऽनभिभवनीयो मोहश्च तद्रूपात् त्रासात् भग्नज्ञानत्वात् लुप्तविवेकत्वाद् हेतोरेव शिष्यवर्गस्य आह्वानस्य विज्ञानम् ज्ञानम् तद्धेतो-स्तदर्थम् मा बिभेहि, आगच्छ मत्पार्श्वम् अत्र च सम्यग्दर्शनादिरत्नत्रयप्राप्तिः समस्तमोहव्यपोहश्च तव स्यादित्येवमाह्वानं करोमीति ज्ञानार्थमित्यर्थः, वा इव स्वध्वजम् ऊर्ध्वीकृत्य उत्संस्थं कृत्वा उद्-भावयन् प्रकटयन्, व्यहार्षीत्, उत्प्रेक्षा ॥६॥

अथ विहारप्रकारमाह-पादेति—

पादाब्जाधः स्वर्णपद्मानि कुर्वन् स्वप्रत्नश्रीजागरूकप्रभाणि।
सर्वोत्कृष्टं निःस्पृहत्वं ब्रुवाणो निर्वाणस्य प्रापणे लग्नकामः ॥७॥

पादाब्जे इव तयोरधः अधस्तात् पादतले इत्यर्थः, स्वा स्वकीया या प्रत्ना अतिप्राचीना "पुराणे प्रतनप्रत्नपुरातनचिरन्तनाः" इत्यमरः श्रीः तथा जागरूकाऽतिप्रकटा प्रभा येषां तानि तादृशानि स्वर्णपद्मानि स्वर्णकमलानि कुर्वन्, तीर्थकृत्पादन्यासस्थाने देवैः प्रागेव स्वर्णकमलप्रस्त-रणादिति भावः अत एव सर्वोत्कृष्टमनन्यासाधारणं निःस्पृहत्वं निस्पृहत्वं ब्रुवाणः कथयन्निव, सर्वे सुवर्णार्थं स्पृहयन्ति, अहं तु वीतरागत्वात्तत्पादतले कृत्वा तृणाय मन्ये मोहक्षयचिकीर्षा चेत्तदा त्वमपि तथा मन्यस्वेति भावः। तथा निर्वाणस्य मोक्षस्य प्रापणे जना मुञ्चन्त्विव्येवम् लग्नकामः समी-हमानः, परमकारुणिकत्वादिति भावः। व्यहार्षीत्, अत्र स्वर्णपद्मपादाधःकरणस्य निःस्पृहत्वकथने हेतुत्वोपगमाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥७॥

अथ तद्धर्मचक्रं वर्णयति-अग्रे इति—

अग्रे स्फूर्जद्धर्मचक्रेण सूर्यं जित्वा भाता बिभ्रताऽऽरासहस्रम्।
विश्वस्यान्ध्यं निर्विशङ्कं वितन्वद् मोहध्वान्तं निघ्नता राजमानः ॥८॥

मोहः ध्वान्तमिव तत् निघ्नता नाशयता, अत एव, सूर्यं जित्वाऽभिभूय, भाता प्रकाशमा-नेन, सूर्यो हि ध्वान्तमेव नाशयति, न तु मोहध्वान्तमिति ततोऽयमधिक इति भाव.। आराणाम

राणां सहस्रं बिभ्रता धारयता, सहस्रारेणेत्यर्थः । अग्रे स्फूर्जता विजृम्भमाणेन धर्मचक्रेण राजमानः शोभमानः, विश्वस्य मोहान्धस्य सर्वस्यान्ध्यं मोहदृष्टिविलोपरूपम् निर्विशङ्कमसंशयम् वितन्वन् कुर्वन् व्यहार्षीत् ॥८॥

अथ तस्य चामरवीजनमाह-शक्रेति

शक्रेशानस्त्रीप्रमोदप्रमुक्तलाजाऽऽभाभ्यां सर्वदा चामराभ्याम् ।
जम्बूद्वीपान्तर्गतानुष्णरश्मिद्वैतज्योत्स्नानिर्जयं वीज्यमानः ॥९॥

शक्रेशानयोः स्त्रीभिः तत्रैव देवीनां सद्भावादिति भावः प्रमोदात्प्रमुक्ता विकीर्णा लाजा इवाभात इति ताभ्यां लाजवद्धवलाभ्याम् चामराभ्याम् जम्बूद्वीपान्तर्गतयोः अनुष्णरश्म्योः चन्द्रयोर्यद् द्वैतं द्वित्वं चन्द्रद्वयस्य । ज्योत्स्नायाः चामरद्वयरूपम् तेन कृत्वा ज्योत्स्नायाः व्योमचन्द्रद्वयचन्द्रिकायाः निर्जयोऽभिभवनं यथास्यात्तथा सर्वदा वीज्यमानः, व्यहार्षीत् ॥९॥

अथ गन्धर्वादिस्तुतिमाह-गन्धर्वेति—

गन्धर्वौघैः सुस्वरैर्गीयमानः श्रद्धाशुद्धैश्चारणैः स्तूयमानः ।
आकाशस्थैः खेचराणामधीशैः स्त्रीयस्त्रीणां दर्श्यमानोऽङ्गुलीभिः ॥१०॥

गन्धर्वाणामोघैः समूहैः सुस्वरैः श्रुतिप्रियैः स्वरैः कृत्वा गीयमानः कीर्त्यमानः श्रद्धाशुद्धैः श्रद्धालुभिश्चारणैः मागधैः स्तूयमानः आकाशस्थैः खेचराणां विद्याधरादीनामधीशैः स्त्रीयस्त्रीणाम् विद्याधरादिपत्नीनामङ्गुलिभिः दर्श्यमानः व्यहार्षीत् ॥१०॥

अथ तस्य धर्मादिप्रवृत्तिमाह-सौरे इति—

सौरे मार्गे दुन्दुभिध्वानपूर्वं धर्मस्थानं वासयन् सर्वतोऽपि ।
देशत्यागं निर्दिशंश्चापि पापव्यापाराणामेकवारं स्वतोऽपि ॥११॥

स्वतः आत्मनाऽपि एकवारम् युगपदेव सर्वतोऽपि सर्वत्रैव सौरे सूर्यसम्बन्धिनि मार्गे पथि आकाशे इत्यर्थः । दुन्दुभिध्वानः पूर्वं यथास्यात्तथा, धर्मस्थानं समवसरणं वासयन् आश्रयन् धर्मस्थानवासनकाले युगपदेव सर्वत्रैवाकाशे दुन्दुभयः स्वयमेव नदन्तीति चित्रमेषोऽतिशय इति भावः । पापव्यापराणां हि देशतः त्यागः तं, चकारात्सर्वतस्त्यागं चेति भावः । निर्दिशन्नुपदिशंश्चापि, व्यहार्षीत् ॥११॥

अथ भव्यानां तत्कृतसम्यक्त्वप्रापणमाह-भव्येति—

भव्यक्षेत्राभ्यन्तराले कुकर्मदावप्लुष्टे बोधसीरेण कृष्टे ।
स्वच्छोदश्चद्भावनाऽम्भःप्रसिक्ते सम्यक्त्वाख्यं बीजमेकं वपन् ज्ञः ॥१२॥

कुकर्महिंसादिरूपः दावो दावानल इव तेन प्लुष्टे दग्धे भव्याः क्षेत्राणीव तदन्तराले मध्ये बोधः सद्बोधः सीरो हल इव तेन कृष्टे कृतसंस्कारे सति स्वच्छैर्निर्मलैः उदञ्चद्भिरुच्छलद्भिः भावना अंभासीव तैः प्रसिक्ते कृतसेके च सति सम्यक्त्वाख्यमेकमासाधारणं बीजं वपन् ज्ञः ज्ञानी स ती व्यहार्षीत् उपमा ॥१२॥

अथ प्रवृत्त्यन्तरमप्याह-प्रेति—

प्रादक्षिण्यं शाकुनानां प्रकुर्वन् दाक्षिण्यं वा रोपयंस्तन्मनःसु ।
मिथ्यादृष्टीन् कण्टकौघानिवाराद् माहात्म्येनाऽवाङ्मुखान् निर्मिमाणः ॥१३॥

शाकुनानां पक्षिगणानाम् प्रादक्षिण्यं प्रकुर्वन् यथा पक्षिगणा अपि प्रभुप्रदक्षिणं कुर्वन्तीत्येवं स्वमहिम्ना तथा विदधन् तथा तेषां शाकुनानां मनःसु दाक्षिण्यं नम्रतां रोपयन् स्थापयन् नम्रः सन् हि श्रद्धालुर्भवतीति भावः तथा अवाङ्मुखान् कण्टकौघानिव यथा यत्र भगवान् विहरति तत्र स निखिलकण्टकानधोमुखान् स्वमहिम्ना कुर्वाण इव मिथ्यादृष्टीन् जिनोक्तत्वाऽश्रद्धालून् तत्कृतपूर्वपक्षरूपाणामनिवारादशक्त्याऽनुत्तरणाद्धेतोः माहात्म्येन स्वातिशयमहिम्ना अवाङ्मुखान् पराजितान् लज्जानम्रमुखान् निर्मिमाणः कुर्वाणः, व्यहार्षीत् ॥ १३ ॥

अथ विहारदेशमाह-नम्रीति—

नम्रीकुर्वन् वर्त्मगान् शालसङ्घान् सम्यक्त्वाढ्यान् श्रावकौघानिवाऽऽरात् ।
तत्राथाऽर्हन् श्रीसुराष्ट्राख्यराष्ट्रे स्वामी राजन् प्रातिहार्यैर्व्यहार्षीत् ॥ १४ ॥

अथ स्वामी अर्हन् तीर्थकृत्, तत्र प्रसिद्धे श्रीसुराष्ट्राख्यदेशे प्रातिहार्यैः अष्टभिरशोकादिभिः प्रसिद्धैः प्रातिहार्यैः राजन् शाभमानः आरात् दूरे समीपे च,सर्वत्रेत्यर्थः "आराद्दूरसमीपयो." इत्यमरः सम्यक्त्वाढ्यान् सम्यक्त्वसंपन्नान् श्रावकौघान् श्रावकसमूहानिव वर्त्मगान् मार्गस्थान् शालसङ्घान् वृक्षसमूहान् नम्रीकुर्वन्, विहारसमये तेषां पुष्पफलभरनम्रतयेत्थमुक्तिः व्यहार्षीत ॥ १४ ॥
युग्मम् ।

अथ सौराष्ट्रं वर्णयति-अध्वेति—

अध्वन्यानामाशु यत्रारघट्टाश्चीत्कारेण श्रोत्रमार्गं गतेन ।
खेदच्छेदं कुर्वते पूर्वमेव पश्चादापः शीतलाश्चातपेऽपि ॥ १५ ॥

यत्र सौराष्ट्रे आतपे खरकरेऽपि अरघट्टाः जलयंत्राणि पूर्वमेव चीत्कारेण [illegible] श्रोत्रमार्गं कर्णविवरं गतेन प्राप्तेन मता अध्वन्यानां पथिकानाम् खेदच्छेदं [illegible] शीतला आपो जलानि च पश्चात् क्लान्ताः तृषिताश्च पथिकाः [illegible] पश्चादद्भिरित्यत्र [illegible] शीतलाश्चाप इति तृषाविच्छेदका इति भाव ॥ १५ ॥

अथ तत्रत्यसमुद्रं वर्णयति-प्रेमोत्कर्षमिति--

प्रेमोत्कर्षं बिभ्रतोऽपत्यरूपे निःसामान्यं बालकालेऽपि चन्द्रे।
पारावारात् पुत्रवात्सल्यमेतद् यस्मिँल्लोकैरीक्षितं शिक्षितं च ॥ १६ ॥

यस्मिन् सौराष्ट्रे बालकालेऽपि उदयकालेऽपि, द्वितीयादितिथौ वा अपत्यरूपे पुत्ररूपे चन्द्रे समुद्राच्चन्द्रोत्पत्तिरिति पौराणिकाः। निःसामान्यमसाधारणं प्रेमोत्कर्षप्रेमातिशयम्, चन्द्रं दृष्ट्वोदधौ वेला समायातीतीत्थमुक्तिः बिभ्रतः धारयतः पारावारात् समुद्रात्सकाशात् एतत्सर्वानुभूतं पुत्रे विषये वात्सल्यम् लोकैरीक्षितं दृष्टं शिक्षितमधिगतञ्च, कथमन्यथा सर्वे पुत्रे स्निह्यन्तीति भावः अत्र लोका इतरविलक्षणापत्यवत्सला इत्यर्थः अत्र पुत्रवात्सल्यस्य समुद्रात् शिक्षणमुत्प्रेक्ष्यतेऽध्यवस्यते वेति उत्प्रेक्षाऽतिशयोक्तिर्वा ॥ १६ ॥

अथ तत्रत्यलोकानां-गुणान्तरमाह गम्भीरेति--

गम्भीरत्वं यत्र लोकैरुपात्तं नूनं भक्त्या सन्निधिस्थात् समुद्रात्।
लक्ष्मीवत्त्वं चापि, किं वा महान्तो नैवाऽऽराद्धाः संप्रयच्छन्त्यतुच्छम् ॥ १७

यत्र सौराष्ट्रे लोकैः सन्निधिस्थात्समीपस्थात्समुद्रात्सकाशात् भक्त्या आराधनया कृत्वा गम्भीरत्वं धीरबुद्धित्वम् लक्ष्मीवत्त्वमैश्वर्यञ्चापि उपात्तं गृहीतम् नूनमत्प्रेक्षे समद्र उभयोः सत्त्वादिति भावः ननु भवतु समुद्रे तदुभयम् किमिति तेन तेभ्यो दत्तमित्यतोऽर्थान्तरं न्यस्यति किमिति महान्तः विशालाशयाः आराद्धाः सेविताः सन्तः किं कतरं वा अतुच्छम् सारवद् द्रव्यादि नैव सम्प्रयच्छन्ति ददति ! अपि तु सारवदपि पूर्वमेव ददतीत्यर्थः इदमेव महत्त्वमिति भावः ॥ १६ ॥

अथ तत्रातिथिसत्कारिणो जना इत्याह-दृष्ट्वेति--

दृष्ट्वा सन्तो यत्र कूपान्तोघट्टाश्चीत्कारस्य च्छद्मनौचित्यभाजः।
अभ्यायातं स्वामिनः शिक्षयेव पृच्छन्त्येव स्वागतं पान्थवर्गम् ॥ १८ ॥

यत्र सौराष्ट्रे कूपारघट्टाः कूपे योजितानि जलयन्त्राणि स्वामिनः जलयन्त्रपतेः शिक्षयोपदेशे-नेव औचित्यभाजः सन्तः औचितीज्ञाः भूत्वा चीत्कारस्यारावस्य च्छद्मना छलेन पान्थवर्गम् अतिथिमभ्यायातमागतं दृष्ट्वा एव न तु विलम्बेन स्वागतं पृच्छन्ति आगतेऽतिथौ तत्स्वागतादि-पृच्छाया लोकाचारत्वादिति भावः अतिथिवत्सलास्तत्रत्यलोका इत्यर्थः उत्प्रेक्षाऽलङ्कारः ॥ १८ ॥

तत्र पानादिसमृद्धिमाह-पीत्वेति--

पीत्वा क्षीरं लाङ्गलीनां फलानां खर्जूराणां माधवीनां च सन्तः।
लब्ध्वाऽऽस्वादं नागवल्लीदलानां यं मूर्धानं धूनयन्तः स्तुवन्ति ॥ १९ ॥

सन्तः गुणज्ञाः क्षीरम् दुग्धम् पानीयं च पीत्वा "नीरक्षीराम्बु" इति "दुग्धं क्षीरं पयः" इति चामरः लाङ्गलीनां लवलीनां खर्जूराणां स्वनामप्रसिद्धानां माधवीनां च फलानाम् नागवल्ली-दलानाम् ताम्बूलपत्राणां च आस्वादं लब्ध्वा उपभुज्य चेत्यर्थः मूर्धानं मस्तकं धूनयन्तः कम्पयन्त' यं सुराष्ट्रदेशं स्तुवन्ति स्वादेन तृप्ताः सशिरःकम्पं प्रशंसन्ति लोका इति स्वभावः ॥ १९ ॥

अथ तत्र विलक्षणवस्तुसम्प्राप्तिमाह-यस्मिन्निति--

यस्मिन्नाम्रैर्नालिकेरप्रमाणैर्माधुर्येणेवाङ्गजैः शर्करायाः ।
राजास्वाद्यैर्विस्मयः कस्य न स्याद् दृष्ट्वाऽपूर्वं वस्तुचित्रं यतोऽत्र ? ॥२०॥

यस्मिन् सुराष्ट्रदेशे नालिकेरप्रमाणैः नालिकेरवन्महद्भिः नालिकेरतुल्याकारैः माधुर्येण कृत्वा शर्करायाः सिताविशेषस्य खण्डशर्करेति प्रसिद्धायाः अङ्गजैः पुत्रैरिवोत्प्रेक्ष्यमाणैः राजभिरेव अतिदुर्लभत्वादास्वाद्यैरुपभोग्यैः आम्रैः स्वानामप्रसिद्धफलैः अत्र लोके चित्रं नानाप्रकारमपूर्वमन-नुभूतं वस्तु दृष्ट्वा कस्य विस्मयो न स्यात्, अपि तु स्यादेव, यतः सर्वो हि अपूर्वमद्भुतं च दृष्ट्वा विस्मयत एवेति भावः ॥२०॥

अथ तत्र जिनमन्दिरसमृद्धिमाह-लोका इति—

लोका दृष्ट्वा यत्र देवाधिदेवं श्रीनाभेयं चन्द्रभं चाऽपि नेमिम् ।
श्रद्धाऽऽवेशात् तीर्थयात्रासमेता मन्यन्ते स्वं जन्म सत्यं कृतार्थम् ॥२१॥

यत्र सुराष्ट्रदेशे तीर्थयात्रया समेताः सहिताः समागताः लोका यात्रिकाः देवाधिदेवं श्रीना-भेयम्, वृषभनाथं, शत्रुञ्जयपर्वते इति भावः चन्द्रभं चन्द्रप्रभम् सोमनाथपाटणे, नेमिं चापि नेमिना-थञ्चापि, गिरिनारगिरौ दृष्ट्वा, श्रद्धाया आवेशादावेगात् स्वं जन्म सत्यं वस्तुतः कृतार्थं कृतकृत्यम् जन्मन एतन्मुख्यं फलं यदेतेषां दर्शनमित्येवमिति मन्यन्ते ए२१॥

अथ तत्र वासःसमृद्धिमाह-किमिति--

किं रत्नानां खानिरत्रास्ति यद्वत् सद्रूपाणां वाससां किं नु तद्वत् ? ।
संप्राप्यन्ते तान्यहो ! वाञ्छितानि यस्मादित्यूहं व्यधुर्यत्र पान्थाः ॥२२॥

अत्र सुराष्ट्रे यद्वत् यथा रत्नानां खानिराकरोऽस्ति, कि तद्वत्तथा सद्रूपाणां सदाकाराणां वाससां नु किं खानिरस्ति, ननु कुत एष वितर्क इतिचेत्तत्राह अहो इति सानन्दाश्चर्यो यस्माद्धेतोः तानि वस्त्राणि रत्नानि च वाञ्छितानि इच्छानुकूलानि सम्प्राप्यन्ते इतीत्थम् पान्थाः यात्रिकाः यत्र सौराष्ट्रे ऊहं वितर्कं व्यधुः कृतवन्तः, रत्नानां वाससां चात्र सौलभ्यमिति समृद्धोऽयं देश इति, ॥२२॥

अथ तत्रत्यसर्वसमृद्धिं वर्णयति वास इति --

वासश्चित्रं भोजनं देवभोज्यं वाहा रम्या भानुवाहोपमानाः ।
लक्ष्मीरूपा योषितो यत्र नूनं साक्षात् पुण्यश्रीफलं दृश्यते तैः ॥२३॥

वासो वस्त्रं चित्रं नानाविधमाश्चर्यकरञ्च, भोजनं भोज्यान्नपानादि देवेन भोज्यम् देव-भोज्यम्, दिव्यमित्यर्थः, एवञ्च वस्त्रान्नोत्कर्ष उक्तः, वाहा अश्वाः रम्याः मनोहराः, उत्कृष्टा इत्यर्थः, तथा चोपमामाह भानुः सूर्यस्तस्य वाहा उपमानं येषां ते तादृशाः तथा, योषितः स्त्रियः लक्ष्मीरूपाः लक्ष्मीतुल्यसुन्दर्यः, इत्येवं ज्ञै विज्ञैः साक्षात् पुण्यश्रियः फलमिव नूनं दृश्यते उत्प्रेक्ष्यते नहि पुण्यं विना तादृशविलक्षणवस्तु सम्पत्तिरिति भावः ॥२३॥

अथ तत्राहिंसादिसाम्राज्यमाह-ख्यात इति--

ख्यातो मारः केवलं पुष्पचापे वध्वां दारा इत्ययं शब्दयोगः
कृष्णे वर्णे काल एवास्ति चैते नैवाऽन्यार्थे विश्रुता यत्र शब्दाः ॥२४॥

यत्र सौराष्ट्रे मारः मारशब्दः केवलं पुष्पचापे कामे ख्यातः, पर्यायत्वात्, यथा, दारा इत्ययं शब्दयोगः शब्दप्रयोगः वध्वां भार्यायाम्, केवलमिति सम्बध्यते, तथा, कृष्णे वर्णे एव कालः कालशब्दोऽस्ति, कालशब्दप्रयोगः, एते चोक्ताः शब्दाः अन्यत्रार्थेऽर्थान्तरे नैव विश्रुताः प्रयुक्ताः, हिंसाद्यभावात् मारशब्दस्य परदारणाद्यभावात्, दारशब्दस्य सुखेन व्यतीयमानस्य कालस्यानवबोधात् समयात्मककाले कालशब्दस्य, अकालमरणादेर्दुष्कालस्य चाभावाच्च कालशब्दस्य चार्थान्तरे प्रयोगासम्भवादेव न प्रयोग इति गूढार्थः कुलकं दशभिः ॥२४॥

अथ तीर्थकृतः शत्रुञ्जयपर्वताद्यारोहणमाह-अध्येति--

अध्यारुक्षत् तीर्थकृच्छान्तिनाथः पुण्याम्भोजोद्बोधने द्वादशात्मा ।
स्वर्णस्तम्भच्छायया दृश्यमानोऽन्तःशत्रुद्विट् तत्र शत्रुञ्जयाद्रिम् ॥२५॥

तत्र सौराष्ट्रे पुण्यरूपस्याम्भोजस्य कमलस्य उद्बोधने विकासने प्रचारणे द्वादशात्मा दिवाकरः "आदित्यो द्वादशात्मा दिवाकरः" इत्यमरः । अन्तःशत्रून् कामादिषड्रिपून् द्वेष्टीति सोऽन्तः-शत्रुद्विट् वीतरागः स्वर्णस्तम्भस्य छायया कान्त्या "छाया सूर्यप्रिया कान्तिः" इत्यमरः । दृश्यमानः उपलक्ष्यमानः तीर्थकृत् शांतिनाथः शत्रुञ्जयाद्रिमध्यारुक्षदारूढवान् ॥२५॥

अथ शत्रुञ्जयं वर्णयन् तत्रौषधीसम्पत्तिमाह-यत्रेति—

यत्रौषध्यो दीपवत् प्रज्वलन्त्यस्तस्यां नित्यं तैलसम्बन्धवर्जम् ।
सीमस्थानां हृन्दि विस्मापयन्त्यो दीपाधानं पर्व संस्मारयन्ति ॥२६॥

यत्र शत्रुञ्जयपर्वते तस्यां रात्रौ "रजनी यामिनी तमी"त्यमरः । नित्यं सर्वदैव, तैलसम्बन्धवर्जम् तैलं विनैव दीपवत्प्रज्वलन्त्यः ओषध्यः, अत एव विस्मापयन्त्यः विस्मयं कारयन्त्यः, तैलं विनैव-ज्वालानामिति विस्मय इति भावः सीमस्थानां तत्पर्वताभितः समीपस्थानां दीपा आधीयन्ते अस्मिन्निति

तद्दीपाधानं दीपावलीति ख्यातं पर्व स्मारयन्ति, एतेन तत्र दीप्राणामोषधीनां प्राचुर्यमुक्तम् तैलसम्बन्धवर्जनरूपाधिककार्ययोगादधिकाऽलङ्कारः ॥२६॥

अत्र तत्र पर्वते मेघावस्थानमाह-अम्भोदेति-

अम्भोदानां पंक्तिरालम्बनस्याऽभावाद्व्योम्नि श्रान्तिमालम्बमाना ।
अध्यासीना यस्य सानूनि नूनं भ्रान्त्युच्छेदाद् निर्वृतिं विन्दतेऽरम् ॥२७॥

अम्भोदानां मेघानाम् पङ्क्तिः माला व्योम्नि आकाशे आलम्बनस्याधारस्याभावात् श्रान्ति सततं भ्रान्त्या क्लममालम्बमाना प्राप्ता सती यस्य सानूनि प्रस्थानि अध्यासीना आश्रयमाणा, एतेन शत्रुञ्जयस्य मेघप्रचारदेशापेक्षयाऽप्यधिकमुच्चैस्त्वं सूचितम् । नूनं निश्चितमरं शीघ्रमेव भ्रान्तेः पवनकृतभ्रमणरूपायाः श्रमक्रियायाः उच्छेदान्निर्वृत्तिं सुखम् विन्दते लभते, भारापगमे भारवाहवत्, अत्र भ्रान्त्युच्छेदादिति निर्वृतिमिति च श्लिष्टविशेषणमाहात्म्यात् शत्रुञ्जये लोकानां भ्रान्तेः । देहात्मरूपायाः आत्मनानात्वरूपायाः वा विपरीतबुद्धेः उच्छेदान्नाशान्निर्वृतिं निर्वाणं मोक्षमिति यावत्, विन्दन्ते प्राप्नुवन्तीत्यपि सूचितमिति समासोक्तिः ॥२७॥

तत्र गैरिकादिधातुप्राचुर्यमाह-धातुव्रातमिति-

धातुव्रातं शोणितं दर्शयन् स्वमेवं ब्रूतेऽभ्यागतानां पुरो यः ।
रागं मुक्त्वा स्वात्मनिष्ठं प्रभूताः सिद्धिं प्राप्ता अत्र निर्धूतमोहाः ॥२८॥

यः शत्रुञ्जयाद्रिः स्वम् स्वकीयम् धातुव्रातं गैरिकादिधातुसमूहम् शोणितम् रक्तवर्णं दर्शयन्नेवं अभ्यागतानामागतानाम् यात्रिकाणां पुरोऽग्रे ब्रूते, एवमिति किमित्याह अत्र पर्वते प्रभूताः बहवः स्वात्मनिष्ठं रागं विषयासक्तिं मुक्त्वा परित्यज्य, अत एव, निर्धूतमोहाः विगतमोहाः सन्तः सिद्धिं प्राप्ता मुक्ताः, अत एवात्र रागशब्दस्य श्लेषमाहात्म्यादत्र धातवः सरागा जाता इति भावः सिद्धिसाधकमहिमाऽयं पर्वत इति ॥२८॥

अथ तत्र निर्झरखेचरादिसम्पत्तिमाह-मुक्तेति-

मुक्ताभ्रान्त्या शीकरान् निर्झराणां क्लृप्तान् नूनं शारदज्योत्स्नयेव ।
संगृह्णन्त्यः पाणिपद्मेन मुग्धा वार्यन्ते स्वाः खेचरैर्यत्र कान्ताः ॥२९॥

यत्र शत्रुञ्जयाद्रौ निर्झराणां पर्वतप्रवाहाणाम् शीकरान् जलकणान् नूनम् शारदया शरदृतु-भवया ज्योत्स्नयाऽतिनिर्मलया चन्द्रिकया क्लृप्तान्निर्मितानितोपलभ्यमानान् मुक्तानां [illegible] मुक्ताफलानां भ्रान्त्या पाणिपद्मेन संगृह्णन्त्यः । [illegible] मुग्धाः, अत एव जलकणेषु मुक्ताभ्रान्तिरिति भावः । स्वाः स्वकीयाः कान्ताः [illegible] खेचरैः [illegible] वार्यन्ते प्रतिषिध्यन्ते, नैते मुक्ताः किन्तु जलकणा एवेति भावः । निर्झराः तत्र [illegible] सन्तीति [illegible]णोऽयं पर्वत इति भावः ॥२९॥

तत्र शान्तौ समायाते मेरोरप्यधिकमहिमाऽस्येत्याह-आयाते इति—

आयातेऽस्मिन् स्वामिनि श्रीनिवासे स्वेनानन्तज्ञानेन विभ्राजमाने ।
सौधर्मेन्द्राद्यन्विते तत्र बाल्ये शक्राऽऽक्रान्तं सोऽहसद् मेरुशैलम् ॥३०॥

श्रियां सर्वलक्ष्मीणां निवासे आस्पदे, अनन्तज्ञानेन केवलज्ञानेन विभ्राजमाने शोभमाने सौधर्मेन्द्रादिभिरन्विते युक्तेऽस्मिन् श्रीशान्तिनाथे स्वामिनि स्वेनाप्रेरणयैव आयाते समागते सति शत्रुञ्जयः बाल्ये शैशवे जन्मकल्याणकावसरे शक्राक्रान्तं इन्द्राद्यधिष्ठितं मेरुशैलम् अहसत् स्वस्मादपकृष्टममन्यत, त्वयि बाल्ये इन्द्रादिनानीतः न तु स्वेन मयि तु तीर्थंकृत्सन् स्वेन समायात इति त्वदधिकोऽहं भाग्यशालीत्येवमिति ॥३०॥

अथ तत्र तीर्थकृतो देशनामाह-देवैरिति—

देवैः पूर्णे निर्मिते तत्र पूर्वरीत्याऽऽस्थानेऽशोकवृक्षाद्युपेते ।
स्वाम्यासीनो देशनावाक्सुधाभिर्विश्वं विश्वं जीवयामास शान्तिः ३१॥

तत्र शत्रुञ्जये देवैः इन्द्रादिभिः पूर्वरीत्या पूर्ववर्णितरीत्या अशोकवृक्षाद्युपेते प्रसिद्धाष्टप्रातिहार्यसहिते पूर्णे अव्यङ्गे आस्थाने समवसरणे निर्मिते आसीन उपविष्टः स्वामी शान्तिस्तदाख्यस्तीर्थंकृत् देशनावाच उपदेशवाचः सुधा इव ताभिः विश्वं समस्तं विश्वं जगद् जीवयामास, देशनया अहिंसाद्यात्मकत्वात्, अभयप्रदत्वादिति भावः सुधाभिर्हि जीवनं समुचितमेव ॥३१॥

अथेन्द्रप्रश्नमाह-नत्वेति—

नत्वा नाथं प्राञ्जलिर्देशनान्ते विज्ञप्तिं स्वर्नाथ एतां व्यधत्त ।
स्वामिन्नद्रेरस्य मानं स्ववाचा व्याचक्ष्व त्वं मे पुरस्तात् प्रसद्य ॥३२॥

देशनान्ते व्याख्यानावसाने स्वर्नाथ इन्द्रः प्राञ्जलिः बद्धाञ्जलिः सन् नाथं तीर्थकृतम् शान्तिं नत्वा एतां विज्ञप्तिं प्रार्थनां व्यधत्त चकार, एतामिति किमित्याह स्वामिन् प्रसद्यानुगृह्य मे मम पुरस्तात् अस्य शत्रुञ्जयाख्यस्याद्रेः पर्वतस्य मानं माहात्म्यादि त्वं भवान् स्ववाचा स्ववाण्या, अन्यवाचा न तथा तृप्तिर्यथा त्वद्वाचेत्याग्रह इति भावः । व्याचक्ष्व व्याख्याहि ॥३२॥

अथ तीर्थकृद्वचनमाह-प्राक्रंस्तेति—

प्राक्रंस्ताऽथो शान्तिनाथः प्रवक्तुं तन्माहात्म्यं क्ष्माभृतोऽस्य प्रथीयः ।
पूर्वे कालेऽस्मिन्नयं पूर्वतीर्थं ख्यातं शक्राऽष्टापदाद्रेरपीड्यम् ॥३३॥

अथ इन्द्रप्रश्नानन्तरम् शान्तिनाथस्तीर्थकृत् अस्य शत्रुञ्जयाख्यस्य क्ष्माभृतः पर्वतस्य प्रथीयः प्रसिद्धतरं महत्तरं वा तद्विलक्षणं महात्म्यं महिमानं प्रवक्तुं प्राक्रंस्त समारब्धवान् । तदेवाह—पूर्वे काले पुरा अस्मिन् लोके शक्रस्य पर्वतेन्द्रस्य यद्वा शक्रेति सम्बोधनम् । अष्टापदस्य तदा-

ख्यस्याद्रेरपीड्यः स्तुत्यः, माहात्म्याधिक्यादिति भावः। अयं शत्रुञ्जयः, पूर्वतीर्थे तीर्थेषु पूर्वः प्रथमोऽग्रणीः स तथा ख्यातः प्रसिद्धः आसीदिति शेषः। ख्यातमिति पाठ स्वीकारे तु-अयं शुभावहम्, "अयः शुभावहो विधिरि"त्यमरः। ईडच्यं पूर्वतीर्थं ख्यातमित्येवमर्थो बोध्यः॥३३॥

माद्यदिति—

माद्यन्मोहेभच्छिदा पुण्डरीकसङ्काशश्रीपुण्डरीकस्य साधोः।
तीर्थाधीशेनादिमेनाऽमरेन्द्र! सिद्धिक्षेत्रं नन्विदं प्रत्यपादि॥३४॥

अमरेन्द्र! तीर्थाधीशेन आदिमेन प्रथमेन, ऋषभनाथेनेत्यर्थः। नन्वित्यैतिह्ये, विस्मये वा, माद्यतो विजृम्भमाणस्य मोहेभस्य मोहगजस्य छिदायां नाशने पुण्डरीकसङ्काशस्य सिंहसदृशस्य श्रीपुण्डरीकस्य तदाख्यस्य साधोर्मुनेः 'शेषे षष्ठी' पुण्डरीकसाधुमुद्दिश्येत्यर्थः। इदं शत्रुञ्जयाद्रि-रूपं तीर्थं सिद्धिक्षेत्रमित्येवं प्रत्यपादि प्रतिपादितम्॥३४॥

अथाऽस्य त्रिषु नामसु प्रत्येकं हेतुं प्रतिपादयन्नादौ शत्रुञ्जयेतिनामहेतुमाह नामानीति--

नामान्यस्य त्रीणि पृथ्वीधरस्य प्राहुर्विज्ञास्तत्र शत्रुञ्जयोऽयम्।
संसाराम्भोराशिपाते निदानप्रस्फूर्जत्क्रुन्मुख्यशत्रुप्रणाशात्॥३५॥

विज्ञाः विशिष्टज्ञानवन्तः, अस्य प्रस्तुतस्य पृथ्वीधरस्य शत्रुञ्जयाऽद्रेस्त्रीणि नामानि प्राहुः कथयन्ति तत्र तेषु त्रिषु नामसु संसारदुस्तरत्वविपुलत्वादितोऽम्भोराशिः सागरस्तत्र पाते पतने समागमने भ्रमणे वा निदानमादिकारणं प्रस्फूर्जन् प्रवृद्धश्च क्रुत् क्रोध एव मुख्यो बलवान् शत्रुस्तस्य प्रणाशादपनयनाद् एव हेतोः, "निदानं त्वादिकारणम्"। "कोपक्रोधाऽमर्षरोषप्रतिघरुट् क्रुधौ स्त्रियामि"ति चामरः। अत्र स्थितस्याऽवश्यं शमप्राप्तिरिति भावः। अयं प्रस्तुतोऽद्रिः शत्रुञ्जयः शत्रुं जयतीति स तदाख्यः, अभूदिति शेषः। अत्र स्थितस्य शमाऽऽगमात्क्रोधारिवर्गापगमाच्चायं शत्रुञ्जयेत्यन्वर्थनामा महामहि-मेति भावः॥३५॥

अथाऽपरनाम्नो हेतुमाह-पापेति--

पापध्वंसाद् निर्मलत्वं ददानः प्रोक्तोऽर्हद्भिश्चिद्घनैर्निर्मलाद्रिः।
निर्वाणाप्तेः पुण्डरीकस्य चैष ख्यातो जातः पर्वतः पुण्डरीकः॥३६॥

चिद् ज्ञानं घनः सारो येषां तैः ज्ञानिभिरर्हद्भिः, पापध्वंसाद् पापध्वंसं विधाय निर्मलत्वं पवित्रान्तःकरणत्वं ददानो वितरन्, पापध्वंसको विमलज्ञानप्रदश्चाऽयमिति भावः। एष प्रस्तुतोऽद्रिः निर्मलाऽद्रिर्विमलाचलेति नामा प्रोक्तः। एषाऽप्यन्वर्था संज्ञाऽस्येति भावः। तथा, पुण्डरीकस्य तदाख्यस्य गणधरः मुनेः निर्वाणाप्तेः मोक्षप्राप्तेर्हेतोः, एष पर्वतः, पुण्डरीकः पुण्डरीकाद्रिरित्येव ख्यातो जातः प्रसिद्धो बभूव। पुण्डरीकेति नामाऽप्यस्य सहेतुकमेवेति भावः॥३६॥

अथ सिद्धिक्षेत्रेति नामहेतुमाह- भव्योत्तापेति--

भव्योत्तापोज्जासने पुण्डरीकं संप्राप्ताऽन्वग् यन्मुनिं पुण्डरीकम् ।
अस्मिन् सिद्धिं कोटिकोटिर्मुनीनां सिद्धिक्षेत्रं कीर्त्यते तेन चैतत् ॥३७॥

यद्यस्माद् अस्मिन् प्रस्तुतेऽद्रौ, भव्यानामुत्तापानां दुःखानां तापानामिवोज्जासने विनाशने पुण्डरीकं कमलतुल्यम्, तापाऽपनोदाय जनैरङ्गेषु कमलनालादिधारणादिति भावः, मुनिं पुण्डरीकं तदाख्यमन्वगनुसृता मुनीनां कोटिकोटिः कोटिशो मुनयः सिद्धिं मुक्तिं संप्राप्ता सिद्धाः तेन हेतुना, एतत्प्रस्तुतं तीर्थम्, सिद्धिक्षेत्रम् सिद्धेः मुक्तेः क्षेत्रं स्थानमित्यन्वर्थसंज्ञया कीर्त्यते कथ्यते गीयते वा । नत्वेतन्नाममात्रमिति भावः ॥३७॥

अथ तत्र भरतचक्रवर्तिकृतमूर्तिस्थापनमाह-वक्त्रेति—

वक्त्राम्भोजादादितीर्थङ्करस्य श्रुत्वैतस्याऽप्यद्भुतं स प्रभावम् ।
अत्रैत्याऽद्यः सार्वभौमः सुरत्नचैत्ये मूर्ती पुत्रपित्रोर्न्यधत्त ॥३८॥

आदितीर्थङ्करस्य ऋषभाख्यतीर्थङ्करस्य वक्त्रं मुखमम्भोजमिव तस्मात्मुखकमलात्सकाशादेतस्य शत्रुञ्जयाऽद्रेरद्भुतमपूर्वं प्रभावं महिमानं श्रुत्वाऽपि श्रुत्वैव श्रवणमात्रत एव, स आद्यः प्रथमः सार्वभौमः सर्वभूमेरीश्वरः, चक्रवर्तीति यावत् । भरतः, अत्र शत्रुञ्जयाऽद्रौ, एत्याऽऽगत्य, सुरत्नचैत्ये उत्तमै रत्नैः कृते चैत्ये पुत्रपित्रोः पुत्रस्य पितुश्च पुण्डरीकगणधरस्य ऋषभप्रभोश्च मूर्ती बिम्बे न्यधत्त प्रतिष्ठापितवान ॥३८॥

अथ शत्रुञ्जयाऽद्रेर्माहात्म्यप्रकर्षाय तत्र एष इति--

एष स्पृष्टश्चाग्रिमैस्तीर्थनाथैरेकन्यूनैश्चन्द्रभागप्रमाणैः ।
स्प्रक्ष्यन्त्येनं नेमिवर्जं जिनेन्द्राः सप्ताऽन्येऽपि प्राप्तविज्ञानतत्त्वाः ॥३९॥

एष शत्रुञ्जयाऽद्रिः, च पूर्वोक्तसमुच्चायकः । एकेनैकसंख्यया कृत्वा न्यूनैरल्पैः, चन्द्रस्य भागाः कलाः, तत्प्रमाणैः तन्मात्रैः, पञ्चदशभिरित्यर्थः । चन्द्रस्य षोडशकलात्वादिति भावः । "कला-तु षोडशो भाग" इत्यमरः । शान्तिनाथप्रभोः अग्रिमैः पुरातनैः, तीर्थनाथैः, स्पृष्टः कृतस्पर्शः । वृषभनाथादिधर्मनाथाः प्राचीनाः पञ्चदशतीर्थनाथा अत्राऽऽगता इत्यर्थः । तथा, नेमिवर्जं नेमिनाथं विहाय अन्ये शान्तिनाथप्रभोः पश्चाद्भाविनोऽपि सप्त,प्राप्त विज्ञानस्य तत्त्वं सारो यैस्ते तादृशा' केवलज्ञानवन्तो जिनेन्द्रास्तीर्थङ्कराः, एनं पर्वतं स्प्रक्ष्यन्ति, निजाऽऽगमनेन कृत्वेति भावः शान्तिनाथप्रभुणा तु तदानीमेव स्पृष्ट इति त्रयोविंशतिजिनैरयं शत्रुञ्जयाऽद्रि स्पृष्ट इति सिद्धम्, तादृशां स्पर्शोऽपि प्रचुरपुण्यलभ्यो माहात्म्योन्नायकश्चेत्ययमद्रि' पुण्यतमो महामहिमा चेति यावत् ॥३९॥

लोकाग्रप्रापणकृतो महानुत्कर्षोऽस्य पर्वतस्येत्याह-ब्रूम इति--

ब्रूमः किञ्चोच्चैस्तमत्वं तदस्य, येन श्रीमन्नाभिभूमीन्द्रसूनोः ।
अध्यारुह्यैवाऽत्र लोकाग्रमग्र्यं, पौत्र्यैरप्याध्यायि सर्वैः करे स्वे ॥४०॥

किञ्चाऽन्यच्च अस्य शत्रुञ्जयाद्रेः, तल्लोकोत्तरम् उच्चैस्तमत्वमुत्कृष्टतमत्वम्, महोत्कर्षमित्यर्थः । ब्रूमः, येन उत्कर्षप्रभावेण, श्रीमन्नाभिभूमीन्द्रस्य सूनोर्ऋषभनाथस्य सर्वैः अपि पौत्रैः, न तु कतिपयैरेवेति भावः । अध्यारुह्य आरोहणेन कृत्वाऽधिष्ठाय, अत्र शत्रुञ्जयाऽद्रावेव स्वे करे हस्ते, अग्र्यं श्रेष्ठं वर्णनीयं लोकाग्रं सिद्धशीलारूपं लोकशिरःस्थं स्थानम्, आध्यायि प्रापि, स्वकरस्थवल्लोकाग्रं प्राप्तमित्यर्थः । अधिपूर्वकादिण् धातोरद्यतन्यां रूपमिदम् ॥४०॥

अथाऽस्याऽद्रेस्तारकत्वं मोहनाशकत्वञ्चाऽऽह-संसारेति--

संसाराम्भोराशिमज्जज्जनानां, निस्ताराया‌ऽऽवद्धकक्षं तदेतत् ।
तीर्थं दृप्यन्मोहराजस्य सैन्यं, रोद्धुं शक्तं शक्तितो दुर्जयस्य ॥४१॥

तत्तस्मादुक्तोत्कर्षादिहेतोः, एतद्वर्ण्यमानं तीर्थं सिद्धिक्षेत्रम् संसार एव दुस्तरत्वादम्भोराशिः सागरस्तत्र मज्जतां ब्रुडतां भ्रमतामित्यर्थः, जनानां निस्तारायोद्धाराय, भवच्छिदे इत्यर्थः । आवद्धा कक्षा येन तत्तादृशं बद्धकक्षपरिकरं तत्, शक्तितो बलादिभिर्दुर्जयस्य जेतुमशक्यस्य, बलिनोऽपि मोहसद्भावादिति भाव । दृप्यतो विजृम्भमाणस्य मोहो राजेव तस्य सैन्यं क्रोधादिकं बलं "बलं सैन्य" मित्यमरः रोद्धुं निवारयितुं शक्तं समर्थम्, मोहरोधे हि भवनिस्तारः सुकरः । अत्राऽऽगमनमात्रेणैतत्तीर्थमाहात्म्यान्मोहो नश्यति, तथा च भवोच्छेदो जायते इति महामहिमेदं तीर्थमिति भावः ॥४१॥

अथोपसंहरन् शान्तेर्विश्राममाह-श्रुत्वेति--

श्रुत्वा वाक्यं तद् यथार्थं विडौजास्तीर्थाधीशं भक्तिमानाननाम ।
स्वच्छन्दश्रीर्देवदेवोऽपि शान्तिर्देवच्छन्दे तत्र विश्राम्यति स्म ॥४२॥

विडौजाः इन्द्रः तत्तीर्थकृदुक्तं यथार्थं वाक्यं श्रुत्वा भक्तिमान् सन् तीर्थाधीशं शान्तिं तत्तीर्थाधीशमादीश्वरं वा, आननाम प्रणतवान् । स्वच्छन्दा स्वाधीना श्रीर्यस्य स स्वच्छन्दश्रीर्देवदेवः शान्तिरपि देवच्छन्दे तदाख्यासने तत्र समवसरणान्तर्गते, विश्राम्यति स्म विश्रामं कृतवान् ॥४२॥

अथ रात्रौ यत्र सङ्गीताऽऽरम्भमाह-तस्यामिति--

तस्यां यातेष्वेव मर्त्येषु सत्सु, श्रीनाभेयस्यार्हतोऽसौ पुरस्तात् ।
सङ्गीतस्यारम्भमाधत्त देवीरम्भामुख्योच्चाऽप्सरोभिः सुरेन्द्रः ॥४३॥

तस्यां रजन्यां "रजनी यामिनी तमी" इत्यमरः मर्त्येषु जनेषु यातेषु गतेषु सत्सु एव, असौ सुरेन्द्रः श्रीनाभेयस्य श्रीनाभिपुत्रस्य ऋषभनाथस्य पुरस्तादग्रतः, ऋषभप्रभोर्मन्दिरे इति भावः

देवी रम्भा मुख्या यासु ताभिरुच्चाभिःरुत्कृष्टाभिरप्सरोभिः सह कृत्वा, सङ्गीतस्यारम्भमाधत्त कृतवान् ॥४३॥

तत्र सङ्गीतेन दुःखनाशमाह-चातुर्विध्येति--

चातुर्विध्यासप्रसिद्धे ततादि-वादित्रेऽस्मिन्नातते तत्र चित्रम् ।
मग्नं चातुर्गत्यसंभूतदुःखं, कर्तृश्रोतृद्रष्टृवर्गस्य भावात् ॥४४॥

तत्र तत्तीर्थेऽस्मिन् प्रस्तुते सङ्गीते, चातुर्विध्यं चतुर्भेदतामाप्तं च तत्प्रसिद्धं च तस्मिन्, तताऽऽनद्ध-सुषिरघनभेदाच्चतुर्विधे ततादिवादित्रे ततप्रमुख्यातोद्ये, "ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । कंसादिकं तु सुषिरं कांस्यातालादिकं घनम् । चतुर्विधमिदं वाद्यं वादित्राऽऽतोद्यनामकमि"त्यमरः आतते, वादिते सति, कर्तृणां सङ्गीतप्रवर्तकानाम्, श्रोतृणाम् द्रष्टृणाम् च वर्गस्य समूहस्य, भावाद् तेन सङ्गीतेन भावशुद्धेः हेतोः, चातुर्गत्ये नरकदेवमनुष्यतिर्यग्गतिषु सम्भूतमुत्पन्नं दुःखं तापो मग्नं नष्टम् चित्रम्—सङ्गीतादपि तथाविधदुःखनाश इत्याश्चर्यमिति भावः । सङ्गीतस्य सद्यः प्रभावजनकत्वमिति यावत् ॥४४॥

तत्र सर्वे सङ्गीतैकताना जाता इत्याह-भाद्रेति--

भाद्राम्भोदोद्दामनिर्घोषजैत्रे स्फूर्जत्यस्मिन् पञ्चशब्दोत्थशब्दे ।
किं तत्स्थानां पञ्चशब्दादयोऽमी दूरीभूता गोचराः साभ्यसूयाः ॥४५॥

भाद्रे तदाख्यमासे अम्भोदानां मेघानामुदाम्नोऽत्युत्कटस्य निर्घोषस्य गर्जितस्य जैत्रे जयनशीलेऽस्मिन् सङ्गीतजन्ये प्रस्तुते, पञ्चशब्देभ्यः वादित्राणां चतुर्विधानां चत्वारो गायकस्य च पञ्चम इत्येवं पञ्चभ्यः शब्देभ्यः उत्तिष्ठति जायते इति स तस्मिन् पञ्चशब्दोत्थे शब्दे तुमुलध्वनौ स्फूर्जति सोत्कर्षं प्रसरति सति, तत्स्थानां सङ्गीतस्थलस्थितानाम्, अमी प्रसिद्धाः सदा सन्निहिताः शब्दादयः, शब्दगन्धरूपरसस्पर्शाः पञ्च गोचरा विषयाः, साभ्यसूयाः सेर्ष्याः सन्तः, दूरीभूताः किम् ?, सङ्गीतादिशब्देन बलवता विरोधिना पराभूताः क्वापि पलायिता इत्यर्थः । लोकानां सङ्गीतैकतानत्वात् शब्दादिबहिर्विषयसम्पर्को नष्ट इति शब्दादयः उपेक्षामसहमाना इव दूरीभूता इति वचनरचनेति भावः ॥४५॥

अथ तत्सङ्गीतस्य लोकोत्तरत्वमाह-द्रष्टेति--

द्रष्टा साक्षादादिमो यत्र चार्हन् सङ्गीतस्यारम्भको यत्र शक्रः ।
देवी वर्ण्या नर्तकी यत्र रम्भा तत् सङ्गीतं किं न लोकोत्तरं स्यात् ! ॥४६॥

यत्र सङ्गीते स्थले वा, साक्षात् प्रतिमारूपेण प्रत्यक्ष आदिमः प्रथमः अर्हन् श्रीऋषभनाथो द्रष्टा, प्रभोर्बिम्बस्य पुरतः सङ्गीतारम्भात्तथोपचारः । न तु स प्रभुः श्रोताऽपि, इन्द्रियव्यापारोपमात् केवलज्ञानेन तत्र द्रष्टृत्वस्यैव सम्भवादिति भावः । यत्र च सङ्गीतस्य आरम्भकः प्रवर्तयिता शक्रः,

तथा, यत्र वर्ण्या वर्णनीया देवी रम्भा नर्तकी, तत्सङ्गीतं लोकोत्तरमलौकिकं किं न स्यात् ? अपि तु भवेदेव । अलौकिकसमाजे कार्यस्याऽप्यलौकिकत्वमुचितमेवेति भावः ॥४६॥

अथ तत्र रम्भाया नृत्यमाह-रम्भेति—

रम्भा नृत्यं कुर्वती तत्र सारं पाणी पादौ लक्षयन्तीव रेजे ।
तीर्थाधीशस्याऽऽदिदेवस्य चाग्रे ज्ञाता यस्मादेप सामुद्रकस्य ॥४७॥

तत्र तत्तीर्थे तीर्थाधीशस्याऽऽदिदेवस्याग्रे, चः पूर्वोक्तसमुच्चायकः सारं श्रेष्ठं नृत्यं कुर्वती पाणी हस्तौ पादौ चरणौ लक्षयन्ती दर्शयन्ती इव रेजे बभौ लक्षणे हेतुमाह यस्माद् हेतोः, एष आदिनाथः सामुद्रकस्य सामुद्रिकलक्षणस्य ज्ञाता सामुद्रिकस्याऽग्रे हि जनाः स्वशुभाशुभज्ञानाय हस्तौ पादौ च प्रदर्शयन्तीत्येवमुक्तिः । विशिष्टनृत्ये हि नर्तकस्य हस्ततलं पादतलं च दृश्यं जायते इति तदुक्तया नृत्यवैशिष्ट्यमुच्यते इति भावः ॥४७॥

अथ तत्र कस्याश्चिद्वंशवादनं वर्णयति-वंशेति—

वंशख्यातिर्नान्यथा मे भवित्रीत्येवं चित्ते संविमृश्यैव तत्र ।
जम्भारातेः कौशलं वेदयन्ती देवी काचिद् वादयामास वंशम् ॥४८॥

तत्र आदीश्वरस्याऽग्रे काचिद्देवी, मे मम अन्यथा प्रकारान्तरेण वंशस्य कुलस्य ख्यातिः प्रसिद्धिर्न भवित्री भाविनी इत्येवं चित्ते संविमृश्यैव सम्यग्विचार्य इव, जम्भारातेः इन्द्रस्य कौशलं नैपुण्यं वेदयन्ती ज्ञापयन्ती वंशं तदाख्यवाद्यं वादयामास । उत्प्रेक्षा ॥४९॥

अथ तत्र रम्भाया मन्दनृत्यमाह-कम्पमिति—

कम्पं प्राप्ता दर्दरैः पादजातैर्मत्कैः शैलः पुण्डरीकः स चैषः ।
इत्थं चित्ते संविचिन्त्यैव रम्भा मन्दं मन्दं लीलया नृत्यति स्म ॥४९॥

मत्कैः मामकैः पादजातैः पादप्रक्षेपजैः, दर्दरैः तदाऽऽख्यवाद्यशब्दैः च, स एष पुण्डरीकः शैलः कम्पं कम्पनं प्राप्ता प्राप्स्यति, बलवान् पादाघातो महान् शब्दश्च दृढस्याऽपि कम्पाय जायत इति भावः इत्थं चित्ते संविचिन्त्य इव रम्भा तदाख्या देवी लीलया लोकरंजनं यथा स्यात्तथा मन्दं मन्दं नृत्यति स्म ॥४९॥

अथ कस्याश्चिद्वीणावादनमाह-वक्षोजाभ्यामिति—

वक्षोजाभ्यां मामकाभ्यां विशालमेतत् किञ्चित् किं समं वा समस्ति ?।
एवं ज्ञातुं तत्र तुम्बं हृदन्तर्विन्यस्यैवाऽवीदत् काऽपि वीणाम् ॥५०॥

मामकाभ्यां वक्षोजाभ्यां स्तनाभ्याम्, एतत्तुम्बं, किम् किञ्चिद्विशालमुरु, वा अथवा समं तुल्यप्रमाणम् समस्ति संभवति । एवं स्तनतुम्बतारतम्यं ज्ञातुमिव, काऽपि देवी, तत्र नृत्यस्थाने, तुम्बं

प्रसेवकं हृदन्तः वक्षोमध्ये विन्यस्य कृत्वा वीणामवीवदत् वादयति स्म, वीणां हि हृदये स्थापयित्वा वादयन्तीत्येव श्रुतिरिति भावः ॥५०॥

**अथ तत्र गीतस्य माधुर्यमाह-गीतमिति—**

**गीतं गीतं तत्र तत् कैश्चनाऽपि शक्राज्ञप्तैर्भावनाभव्यबोधैः ।**
**यत् पीयूषं मन्यमानैरमानि देवैः स्वर्गे केवलं वञ्चनैव ॥५१॥**

तत्र शक्रेणाऽऽज्ञप्तैरादिष्टैः, भावनायाः मनोवृत्तेर्भव्यो वर्यो बोधः उन्मेषो येषां ते तादृशास्तैः भावितात्मभिः, कैश्चनाऽपि तत्तादृशं गीतं गानं गीतमुद्गीतम्, "गीतं गानमिमे समे" इत्यमरः । यद् गीतं पीयूषममृतं मन्यमानैः देवैः, स्वर्गे वञ्चना एव केवलममृतम्, न तु वास्तविकमित्येवममानि मेने । अमृतादप्यधिकं तृप्तिजनकं तद्गीतमिति भावः । अत्रोपमेयस्य गीतस्योपमानादमृतादधिक्य-वर्णनाद् व्यतिरेकोऽलङ्कारः ॥५१॥

**तन्नृत्येण शक्रतोषमाह-रम्भेति—**

**रम्भानृत्यं चारु नानाऽभिनीत्या युक्तं पश्यँल्लोचनानां सहस्रम् ।**
**मेने शक्रः स्वं कृतार्थं तदानीमैश्वर्यं वाऽऽलोकयन् स्वस्य भक्तिम् ॥५२॥**

स्वस्य निजस्य भक्तिं सङ्गीतारम्भद्वाराऽऽसक्तिम्, आलोकयन् प्रदर्शयन् शक्रः, नानाऽभि-नीत्या विविधाऽभिनयेन युक्तम्, अत एव, चारु उत्तमं रम्भानृत्यं पश्यन्, तदानीं नृत्यविलोकनकाले स्वं लोचनानां सहस्रम्, ऐश्वर्यं वा कृतार्थम् सफलं मेने । लोचनसहस्रैश्वर्याभावे कुत एतादृशनृत्या-वलोकनमिति तत्सार्थकमित्येवं मन्यते स्मेत्यर्थः ॥५२॥

**अथ तन्नृत्येन देवानां तोषमाह-प्राशंसीति—**

**प्राशंसि स्वं निर्निमेषेक्षणत्वं संपश्यद्भिर्नृत्यमेकाग्रचित्तैः ।**
**गीर्वाणानां मण्डलैस्तत्र किञ्च विघ्नाभावोऽबोधि जन्मान्तरेऽपि ॥५३॥**

तत्र एकाग्रचित्तैः तदेकतानैः नृत्यं संपश्यद्भिरवलोकमानैः गीर्वाणानां देवानां मण्डलैः समूहैः, स्वं निजं निर्निमेषे निमेषरहिते ईक्षणे नेत्रे यस्य स तस्य भावः । तत, प्राशंसि बहुमेने, निमेषेण हि अन्तरा दर्शनविघ्नसम्भवादिति भावः । किञ्च जन्मान्तरेऽन्यजन्मनि विघ्नाऽभावः एतादृशनृत्य-दर्शनावरोधकान्तरायकर्माभाव, अबोधि अज्ञायि । पूर्वकृतविघ्नसत्त्वे एतादृशनृत्यदर्शनाऽसम्भवात् । पुण्येनैवैतत्सम्भवादिति भावः ॥५३॥

**अथेन्द्रकृतकिञ्चिद्दानाऽभावं समर्थयति-रम्भेति—**

**रम्भानृत्यालोकहृष्टैः सुरेन्द्रैर्दत्तं किञ्चिद् दानशौण्डैर्न चापि ।**
**ईदृग्भावाद् नृत्यकर्तुः फलानि यस्माद् दातुं देवदेवः समर्थः ॥५४॥**

रम्भायाः नृत्यस्य आलोकेन दर्शनेन कृत्वा हृष्टैः तुष्टैरपि सुरेन्द्रैः दानशौण्डैः प्रकृष्टदातृभिः सद्भिरपि किञ्चित्किमपि द्रव्यादि पारितोषिकं, न दत्तम् । कुत इत्याह—यस्माद् ईदृशोऽन्यसाधारणाद् भावान्मनःसमाधेः नृत्यकर्तुः नर्तकस्य फलानि दातुं देवदेवस्तीर्थङ्कर एव समर्थः, नाऽन्यः । महद्भिः साध्येऽन्यस्य प्रवृत्तिरनुचितेति भावः । भावेन हि तन्नृत्यं, न तु पारितोषिकलोभेनेति यावत् ॥५४॥

**सङ्गीते सर्वेषामेकतानत्वमाह-रम्भेति--**

रम्भानृत्येऽखर्वगन्धर्वगीते तीर्थेशाग्रे दत्तचित्तेषु तेषु ।
किं ध्यानस्थाश्चित्रिताः स्तम्भिताः स्विदित्यभ्यूहं तत्र कश्चिन्न चक्रे ? ॥५५॥

तीर्थेशाऽग्रे अखर्वं महत् गन्धर्वाणां तदाख्यदेवानां गीतं यस्मिन् तादृशे गन्धर्वकृतोत्तमगीतसहिते रम्भाया नृत्ये, तेषु देवेषु दत्तचित्तेषु तदेकतानेषु सत्सु, तत्र, किम्, इमे ध्यानस्थाः, समाधिस्थाः, चित्रिताः चित्रमयाः, स्तम्भिताः मन्त्रादिभिः कृतस्तम्भाः, वा, स्विदिति वाऽर्थे । इतीत्थमभ्यूहं वितर्कम्, कश्चित् को नाम न चक्रे ? अपि तु सर्व एव चक्रे इत्यर्थः । देवा नृत्यैकतानतया बहिश्चेष्टाविरहिता ध्यानस्थादय इव जाता इति भावः ॥५५॥

**अथ तत्र देवकृतमृदङ्गवादनमाह-देवैरिति--**

देवैस्तत्राऽवादि पूर्वं मृदङ्गो यद् रम्भायां नर्तनाभ्युद्यतायाम् ।
नृत्यारम्भेऽभ्युत्सवे चाऽपि तेन पूर्वं जज्ञे तस्य लोके प्रवृत्तिः ॥५६॥

तत्र रम्भायां नर्तनाऽभ्युद्यतायां सत्याम् पूर्वं नर्तनकाले नर्तनाऽऽरम्भात् प्रागेव यद् यस्माद्, देवैर्मृदङ्गस्तदाख्यो वाद्यविशेषोऽवादि, तेन हेतुना लोके नृत्याऽऽरम्भे अभ्युत्सवे चाऽपि पूर्वं तस्य मृदङ्गवादनस्य प्रवृत्तिर्विधानं जज्ञे जाता । तत्र पूर्वं मृदङ्गवादनाल्लोका अपि गतानुगतिकतया तदनुसारेण नृत्यादौ पूर्वं मृदङ्गं वादयन्तीत्यर्थः अत्र सम्बन्धे सम्बन्धोक्त्याऽतिशयोक्तिरलङ्कारः ॥५६॥

**अथ तत्र भेरीवादनमाह-स्वर्गेति--**

स्वर्गस्थानां देवतासंहतीनां भोगाऽऽसक्त्यावस्थितौ वञ्चितानाम् ।
आह्वानायेवात्र भाङ्कारनादैर्भेरी देवैस्तत्क्षणं वाद्यते स्म ॥५७॥

स्वर्गीयभोगाऽऽसक्त्या भोगसंलग्नतया, अत्र तीर्थेऽवस्थितौ नृत्यकालेऽवस्थाने वञ्चितानां छलितानाम्, स्वर्गीयभोगाऽऽसक्ततया अत्राऽनागतामित्यर्थः । अत एव, स्वर्गस्थानां, न त्वेतत्तीर्थस्थानां देवतासंहतीनां देववृन्दानाम्, भाङ्कारनादैः भेरीजन्यशब्दविशेषैः कृत्वा आह्वानाय इव तत्क्षणं तस्मिन् काले देवैः भेरी तदाख्यवाद्यविशेषो वाद्यते स्म । उत्प्रेक्षा ॥५७॥

अथ सूर्योदयमाह-ईदृगिति—

ईदृक् चित्रं तत्र सङ्गीतमासीत् स्वाराट् चक्षुर्वृत्तिसंस्तम्भहेतुः ।
भास्वान् द्रष्टुं यद् ध्रुवं द्वादशात्मभावं श्रित्वा पूर्वशैलं बभाज ॥५८॥

ईदृग्वर्णितप्रकारम्, चित्रं नानाविधमाश्चर्यकरं वा, स्वाराज इन्द्रस्य चक्षुषो वृत्तेः चक्षुर्व्यापा-पारस्य संस्तम्भहेतुः एकत्र निरन्तरलग्नत्वप्रयोजकम् सङ्गीतमासीत् । ध्रुवमित्युत्प्रेक्षायाम् । यत्सङ्गीतं द्रष्टुमिव, भास्वान् सूर्यः द्वादशात्मभावं द्वादशरूपत्वं श्रित्वा, पुराणे सूर्यस्य द्वादशात्मत्वं वर्णितम्, तच्चाऽत्र नृत्यावलोकननिमित्ततयोत्प्रेक्षितम् । पूर्वशैलमुदयाचलं बभाज शिश्राय । आगतवा-नित्यर्थः ॥५८॥

अथ तीर्थकृतो देवादीनां च ततः प्रस्थानमाह-देवैरिति—

देवैः सार्धं देवतानामधीशः प्रातर्नत्वा सोऽग्रिमं षोडशं च ।
तीर्थाधीशं साधयन्तं विहारं सौधर्माख्यं स्वं विमानं प्रपेदे ॥५९॥

स देवतानामधीशः शक्रः, देवैः सार्धम्, प्रातः प्रभाते, अग्रिममादिनाथम्, विहारं साध-यन्तं विहरन्तं षोडशं शान्तिं च तीर्थाधीशं तीर्थङ्करम् नत्वा सौधर्माख्यं स्वं विमानं प्रपेदे प्राप्तः॥५९॥

अथ शान्त्याज्ञाकारिसाधुसंख्यामाह-शान्तेरिति—

शांतेरेकत्रिंशदासन् सहस्राण्याज्ञासाराः साधवस्ते द्विरुक्ताः ।
आरभ्याऽऽजिं यैः समं पञ्चबाणस्त्रस्तो भग्नस्त्यक्तकोदण्डकाण्डः ॥६०॥

शान्तेः तीर्थङ्करस्य एकत्रिंशत्सहस्राणि द्विरुक्ताः । द्विगुणितानि, द्वाषष्टिसहस्राणीत्यर्थः । आज्ञा शान्तिनाथनिर्देश एव सारः प्रधानं येषां ते तादृशाः आज्ञावशवर्तिनः ते प्रसिद्धाः साधवः आसन्, यैः साधुभिः समं सह आजिं युद्धमारभ्य पञ्चबाणः कामः त्रस्तो भीतः, पराभव-भयादिति भावः । त्यक्तं कोदण्डस्य धनुषः काण्डं यष्टिर्येन स तादृशः त्यक्तधन्वा सन् भग्नः पला-यितः ते सर्वे साधवः कामाद्यान्तरारिविजेतार आसन्निति भावः ॥६०॥

अथ साध्वीनां सङ्ख्यामाह-तावदिति—

तावन्माना एव साध्व्योऽपि शान्तेः किन्तु न्यूनास्ताश्चतुर्भिः शतैश्च ।
न्यूनत्वं वा युक्तमेतन्मुनिभ्यः साध्वीनामप्युग्रचारित्रवत्त्वे ॥६१॥

शान्तेस्तीर्थङ्करस्य साध्व्योऽपि, अपिना साधुसमुच्चयः । तावन्मानाः साधुसमसङ्ख्या एव, किन्तु ताः साध्व्यः, चतुर्भिः शतैश्च न्यूना न्यूनसङ्ख्या षड्शताधिकानि एकषष्टिसहस्राणीत्यर्थः । तासां न्यूनत्वं समर्थयति—न्यूनत्वमिति मुनिभ्यो मुनीनपेक्ष्य साध्वीनाम् उग्रचारित्रवत्त्वेऽपि चारित्रस्योग्रपालनीयत्वेऽपि, मुन्यपेक्षया साध्वीनां चारित्रपालनमिति दुष्करमित्यतो हेतोः तासाम्, तन्न्यूनत्वं युक्तमेव, वा एवकारार्थः । दुष्करे हि अल्पा एव प्रवर्त्तन्ते इति भावः ॥६१॥

अथ श्रुतज्ञान्यादीनां संख्यामाह-आसन्निति—

आसन् शान्तेरर्हतोऽष्टौ शतानि प्रख्यातान्येव श्रुतज्ञानभाजाम् ।
सीमज्ञानां त्रीण्यभूवन् सहस्राण्येकाधिक्यात् स्वान्तपर्यायिणां च ॥६२॥

शान्तेरर्हतस्तीर्थङ्करस्य श्रुतज्ञानभाजां श्रुतकेवलीनां चतुर्दशपूर्विणां प्रख्यातानि प्रसिद्धान्येव, अष्टौ शतानि आसन् तथा सीमज्ञानां अवधिज्ञानिनां त्रीणि सहस्राण्यभूवन्, स्वान्तपर्यायिणां मनःपर्यायज्ञानिनां मुनीनां च एकाधिक्यात् एकाधिकानि त्रीणि सहस्राणि चत्वारि सहस्राणि, अभूवन्निति सम्बध्यते ॥६२॥

अथ केवल्यादीनां सङ्ख्यामाह-चत्वारीति—

चत्वारि केवलविदामभवन् सहस्राण्युत्कर्षतः समधिकानि शतत्रयेण ।
उद्दामवैक्रियविभूतिभृतां मुनीनां षष्टिः शतानि विमलप्रतिपत्तिभाजाम् ॥६३॥

केवलविदां केवलज्ञानीनामुत्कर्षतः शतत्रयेण समधिकानि चत्वारि सहस्राण्यभवन् । तथा विमला शुद्धा सम्यक्त्ववती या प्रतिपत्तिः ज्ञानं तद्भाजा तद्वताम्, उद्दाम यथेच्छं नानाविध वैक्रियरूपनिर्मितौ समर्था या वैक्रियविभूतिः वैक्रियलब्धिः तद्वतां तद्भृतां मुनीनां षष्टिः शतानि षट्सहस्राणि, अभवन्निति सम्बध्यते ॥६३॥

अथ वाद्यादिसङ्ख्यामाह-अष्टाविति—

अष्टौ शतानि गुणितानि विभोस्त्रयेण सद्वादिनां परपराजयदीक्षितानाम् ।
लक्षत्रयी दशसहस्रविनाकृताऽभूत् श्राद्धव्रजस्य जिनधर्मपरायणस्य ॥६४॥

विभोः प्रभोः शान्तेः, परेषां परवादिनां पराजयेषु दीक्षितानां गृहीतव्रतानाम् परवादिपराजेतॄणां सद्वादिनां वादिवराणां त्रयेण त्रिसङ्ख्यया गुणितानि अष्टौ शतानि, चतुःशताधिकद्विसहस्राणीत्यर्थः । अभवन्निति शेषः । यथा, जिनधर्मपरायणस्य जिनोक्तधर्मैकतानस्य भक्तिमतः श्राद्धव्रजस्य श्रावकसमूहस्य दशसहस्रविनाकृता दशसहस्रन्यूना लक्षत्रयी नवति सहस्राधिकालक्षद्वयी अभूत् ॥६४॥

अथ श्राविकासङ्ख्यामाह-चत्वारीति—

चत्वारि लक्षाणि विभोरुपासिका न्यूनाः सहस्रैः परमेव सप्तभिः ।
पादाम्बुजैः पावयतो धरां शरल्लक्षायुषस्यैष परः परिच्छदः ॥६५॥

विभोः शान्तेः उपासिकाः भक्तिमत्यः श्राविकाः, परमुत्कर्षतः सप्तभिः सहस्रैः न्यूना एवं चत्वारि लक्षाणि, लक्षत्रयं त्रिनवतिसहस्राणि चेत्यर्थः, पादाम्बुजैः चरणकमलैः धरां पृथिवीं पावयतः पवित्रयतः विहारक्रमेणेत्यर्थः । विभोः शरदां वर्षाणां लक्षमायुः सर्वमायुः यस्य स तस्य अनूनलक्षवर्षायुष्कस्य एष उक्तः सर्वः परः उत्कर्षतः परिच्छदः परिजनः, आसीदिति शेषः ॥६५॥

अथ शान्तेः संमेतशिखरेऽनशनमाह-अष्टोनमिति—

अष्टोनं तुर्यभागं विगमितवृजिनं स्वायुषः संविहृत्य,
ज्ञात्वा निर्वाणकालं नवशतयतिभिः सार्धमुत्सृष्टरागैः ।
नाथे संमेतभूभृच्छिखरमुपगते मुक्तसर्वाशने च,
प्रत्यासन्नावनीशाः प्रविदितकथया शोकनुन्ना इवेयुः ॥६६॥

नाथे प्रभौ श्रीशान्तौ, स्वायुषो निजायुषः अष्टभिर्वर्षैरूनमल्पं तुर्यभागं चतुर्थांशं पञ्चविंशतिसहस्रमितं यावत्, विगमितानि देशनादिद्वारा दूरीकृतानि नष्टानि वृजिनानि पापानि श्रोतॄणां यथा स्यात्तथा, धर्मदेशनाद्वारा पापोन्मूलनं यथास्यात्तथेत्यर्थः। संविहृत्य विहारं कृत्वा, निर्वाणकालं मुक्तिसमयं ज्ञात्वा, तस्य सर्वज्ञत्वादिति भावः । उत्सृष्टरागैः विरक्तैश्चारित्रवद्भिः नवशतानि च ते यतयश्च तैः नवशतसंख्यसाधुभिः सार्धम्, संमेतश्चासौ भूभृच्च तस्य शिखरम्, संमेताख्यपर्वतशिखरमुपगते प्राप्ते, मुक्तानि सर्वाणि सर्वप्रकाराण्यशनानि भोजनानि येन स तस्मिन् अनशनं प्रपन्ने च सति, प्रत्यासन्नाः संमेतशिखरपार्श्वस्थाश्च ते अवनीशा नृपाश्च ते समीपस्थनृपाः, प्रविदिता ज्ञाता चासौ कथा च तया ज्ञातवृत्तान्तेन कृत्वा, शोकेन नुन्नाः प्रेरिता इव इयुः समागतवन्तः ॥६६॥

अथ तत्रेन्द्रागमनमाह-आयुरिति—

आयुस्तीर्थेश्वराणामपि भजति तमां नैव यत्र स्थिरत्वं,
तद्योग्यं नः कथं स्यादिति कुलिशभृतां प्राचलन्नासनानि ।
मत्वा तत्कम्पहेतुं सहचरितविदा सर्व एवाऽत्र तूर्णं,
संमेताभिख्यशैले सह विबुधगणैरागमन् देवराजः ॥६७॥

यत्र यस्मिन् जगति तीर्थेश्वराणाम् तथाऽद्भुताऽतिशयवतां केवलिनां तीर्थकृतामपि आयुः जीवितं नैव स्थिरत्वमक्षयत्वं भजति तमामुपैति, तदायुः नोऽस्माकं योग्यं स्थिरतरं कथं स्यात् ? नैव स्यादित्यर्थः, इति हेतोः, कुलिशभृतां वज्रधारिणाम्, इन्द्राणामित्यर्थः । आसनानि सिंहासनानि प्राचलन्नकम्पन्त सहचरितया सहजया विदा ज्ञानेन, अवधिज्ञानेनेत्यर्थः । देवाना-मवधिज्ञानस्य भवप्रत्ययिकत्वेन सहजत्वादितिभावः । तेषामासनानां कम्पहेतुं मत्वा ज्ञात्वा, सर्व एव, न तु कतिपये देवराजः देवेन्द्राः तूर्णं शीघ्रमेव, अत्र अस्मिन् संमेताऽभिख्यशैले संमेतनामपर्वते, विबुधगणैः देववृन्दैः सह, आगमन् आगतवन्तः ॥६७॥

अथ शान्तेर्निर्वाणमाह-सेवन्त इति—

सेवन्तेऽपि जघन्यतः प्रभुमिमं यत्कोटिसंख्याः सुरा,
वैचित्र्येण च निर्निमेषनयना रात्रिंदिवं मानवाः ।

तन्नैसर्गिकदुर्विभेदरसतः संसर्गसर्गक्रमा-
उज्जज्ञे स्वाम्यपि निर्निमेषनयनो नम्रेषु तेषु क्षणात् ॥६८॥

यद् यस्माद् इमं प्रभुं श्रीशान्तिम्, जघन्यतोऽल्पाल्पतः अपि, सुराः मानवाश्च कोटिसंख्याः रात्रिन्दिवं, निर्निमेषाणि निमेषरहितानि नयनानि नेत्राणि येषां ते तादृशाः सन्तः, तेषां सेवैकतानतया नेत्राणां निमेषाऽनवकाशात्, सुराणां तु स्वभावादेवेति भावः । वैचित्र्येण विविधप्रकारेण सेवन्ते, तत्तस्माद्धेतोः, नैसर्गिकाद्, न तु लोभात्, अत एव दुर्विभेदाद् भेत्तुमशक्याद रसतोऽनुरागतः, कामनया तु कामानवाप्तौ भेदोऽपि सम्भवतीति भावः संसर्गिकस्य, सेवनादिना सम्पर्कस्य यः सर्गो रचना तस्य क्रमात् स्वामी शान्तिनाथोऽपि, तेषु देवादिषु नम्रेषु कृतनमनेषु सत्सु, निर्निमेषे नयने जीवाऽभावान्निर्व्यापारे नेत्रे यस्य स तथा मुक्तजीवो जज्ञे । अत्र निर्निमेषनयनेति पदं शान्तेर्देवत्वाऽर्ति ध्वनयति, तच्चानिष्टम्, इति नाशङ्क्यम्, उक्तरीत्या तत्परिहारादिति ॥६८॥

अथ शान्तेर्मोक्षाप्तितिथ्याद्याह-मासेति—

मासप्रान्ते स्थितिमधिगते शीतभानौ भरण्यां,
ज्येष्ठे मासे त्र्यधिदशतिथौ श्यामले पक्ष एव ।
स श्रीशान्तिप्रभुरतिभवो निर्वृतिश्रीप्रियत्वं,
नित्यानन्दोदयसहचरोद्भासि सौख्यं बभाज ॥६९॥

मासप्रान्ते मासस्य चरमेंऽशे, शीतभानौ चन्द्रे भरण्यां तदाख्यनक्षत्रे स्थितिमधिगते प्राप्ते, चन्द्रे भरणीनक्षत्रस्थे सति, ज्येष्ठे मासे त्र्यधिदशतिथा त्रयोदशीतिथौ, श्यामले कृष्णे पक्षे एव, स श्रीशान्तिप्रभुः, अतिक्रान्ते, पुनरप्राप्त्या वशीकृतो भवो भवग्रहणं येन स तादृशो भवाऽविषयः, मुक्तः सन्निति यावत् । निर्वृतेः निर्वाणस्य मुक्तेः श्रीस्तस्याः प्रियत्वं तद्रूपम्, नित्यानन्दस्य उदय आविर्भाव एव सहचरस्तेनोद्भासत इत्येवंशीलम् नित्यानन्दमयं सौख्यं सुखं मुक्तिसुखं बभाज प्राप्तः ॥६९॥

अथ शान्तेः योगान् निरुध्य शुक्लध्यानपूर्विकां मुक्तिमाह-रुद्ध्वेति—

रुद्ध्वा वाक्चित्तयोगौ प्रभुरपि नियतं बादरौ बादरेण
योगेनाङ्गेन सूक्ष्मावरुणदथ तकौ मङ्क्षु सूक्ष्मेण तेन ।
ध्यात्वा सूक्ष्मक्रियाऽऽख्यं दलिततनुवपुर्योगमन्यं तृतीयं
शुक्लध्यानं तुरीयं स्म भजति तदनूत्सन्नसर्वक्रियं सः ॥७०॥

स प्रभुरपि श्रीशान्तिनाथः नियतं नियमपूर्वकम्, बादरेण तदाख्येन योगेन, अङ्गेन, बादरेण काययोगेनेत्यर्थः । बादरौ वाक्चित्तयोगौ रुद्ध्वा विरतव्यापारौ कृत्वा, अथानन्तरम्, सूक्ष्मेण

तेन योगेन मङ्क्षु शीघ्रमेव बादरकाययोगं निरुध्य सूक्ष्मकाययोगेन सूक्ष्मौ तकौ तौ वाक्चित्तयोगौ, अरुणद् रुणद्धि स्म। तथा, अन्यमुक्ताभ्यां विलक्षणं तृतीयं सूक्ष्मक्रियाख्यम्, दलिततनुवपुर्योगं स्वात्मनैव सूक्ष्मकाययोगनिरोधो यथास्यात्तथा ध्यात्वा,तदनु तत्पश्चात्, उत्सन्ना विनष्टा सर्वा क्रिया यस्मिन् तत्सर्वव्यापारविरतं तुरीयं चतुर्थं समुच्छिन्नक्रियमप्रतिपत्तिशुक्लध्यानं भजति स्म ॥७०॥

श्रीशान्तेः ऋजुगत्या लोकाग्रप्राप्तिमाह-पञ्चेति—

पञ्चह्र स्वस्वरोक्तिक्षणमितिकलिते पूरितेऽस्मिंस्तदानीं,
प्रक्षीणाशेषकर्मा नवशतयतिभिः सार्धमुच्छिन्नमोहैः।
सिद्धानन्ताच्चतुष्कः प्रकृतिसरलताशालिना वर्त्मना च,
निर्लेपालाबुवत् स प्रभुरगमदयं लोकनीराग्रभागम् ॥७१॥

पञ्च च ते ह्रस्वाः स्वराश्चैकमात्रिकास्तेषामुक्तावुच्चारणे ये क्षणाः तन्मित्या तन्मानेन कलिते समन्विते, पञ्चह्रस्वोच्चारणकालतुल्यकाले इत्यर्थः अस्मिन् शुक्लध्याने, पूरिते समापिते सति, तदानीं शुक्लध्यानाऽवसाने, प्रक्षीणानि निरवशेषाणि जातानि अशेषाणि सकलानि कर्माणि यस्य स तादृशः सर्वकर्मलेशरहितः सन्, सिद्धानन्तज्ञानानन्तदर्शनानन्ताचारित्रानन्तवीर्यरूपचतुष्कः सोऽयं प्रभुः श्रीशान्तिः उच्छिन्नमोहैः मोहस्य प्राधान्यान्निरस्ताऽशेषकर्ममलैः, नवशतैः यतिभिः सार्धम्, प्रकृत्या स्वभावत एव सरलतया शालते इत्येवंशीलेन. ऋजुनेत्यर्थः वर्त्मना मार्गेण, ऋजगत्योर्ध्वं निर्लेपं मृत्तिकादिसम्पर्करहितं यदलाबु तुम्बी तद्वत् अन्तःसारशून्यमलाबु यथा जले तरत्येव न तु मज्जति, तथा कर्मकृतगौरवरहितः श्रीशान्तिप्रभुः लोको नम्बुडाधारत्वान्नीरं जलमिव, तस्याग्रं परं पारम् सिद्धशिलामित्यर्थः अगमत्। उपमा ॥७१॥

तदानीं नारकाणामपि संजातमित्याह-यदिति—

यन्मानुष्यकजन्मसु प्रतिभवं तुच्छं मया भङ्गुरं,
किञ्चित् सौख्यमुदारसारमनसा दत्तं जनेभ्योऽधिकम्।
तेनैवेदमभङ्गुरं गुरुतरं सारं समासादितं,
मत्वैवं प्रददौ तदा प्रभुरयं तन्नारकेभ्योऽपि शम् ॥७२॥

मया शान्तिना, मानुष्यकजन्मसु मनुष्यभवेषु, प्रतिभवम् भवे भवे, तुच्छमल्पं भङ्गुरमचिरस्थायि च, यत् किञ्चित्सौख्यम् उदारेणाकृपणेन सारेण भावशुद्धेन च मनसा लोकेभ्यो दत्तम्, तेन दानेन हेतुना एव, इदं सौख्यं सिद्धत्वरूपमधिकं दत्तापेक्षयाऽतिप्रमाणम् अभङ्गुरं शाश्वतं गुरुतर-मुत्कृष्टतरं सारं पारमार्थिकं समासादितम् अल्पस्याऽपि दानस्य फलमनन्तगुणमितिभावः। एवमुक्त-

प्रकारेण मत्वा विचार्य, तत्तादृशं शं सौख्यं तदा सिद्धत्वप्राप्तिकाले, अयं प्रभुः शान्तिनाथः, नारकेभ्योऽपि प्रददौ तदानीं नारका अपि मोदमानाः सुखिनो जाता इत्यर्थः ॥७२॥

अथेन्द्रस्य पञ्चभिर्विलापगर्भं स्तुतिमाह-याते इति—

याते षोडशधर्मचक्रिणि महानन्दाभिधाने पुरे,
शोकावेशविसंस्थुलोऽपि मघवा तुष्टाव चेत्थं प्रभुम् ।
संसाराम्बुनिधौ पतन्तमुदयद्-दुःखौघनक्राऽऽकुले,
तीर्थाधीश्वर ! तारयिष्यति जनं को वा भवन्तं विना ॥७३॥

षोडशधर्मचक्रिणि श्रीशान्तिनाथे महानन्दाभिधाने महानन्दो यस्मिन् तन्नाम्नि पुरे मुक्तिनगरे याते गतवति सति, शोकस्य तीर्थङ्करविरहजनितदुःखस्यावेशेन आवेगेन विसंस्थुलो व्यग्रोऽपि च मघवा शक्र इत्थं वक्ष्यमाणप्रकारेण प्रभुं शान्तिनाथं तुष्टाव, तं स्तुतिप्रकारमेवाह संसारेति तीर्थाधीश्वर ! उदयन्त आविर्भवन्तो दुःखानामोघाः परम्परा एव नक्रा ग्राहास्तैराकुले व्याप्ते, "ग्राहोऽवहारो नक्र" इत्यमरः संसारो दुस्तरत्वादम्बुनिधिः सागरस्तस्मिन्, पतन्तं कर्मवशादागच्छन्तं मज्जन्तं च जनं प्राणिनम्, भवन्तं त्वां विना को वा तारयिष्यति ? त्वादृशस्य दयालोरन्यस्याऽभावान्न कोऽपि तारयिष्यतीत्यर्थः । परम्परितरूपकम् ॥७३॥

प्रभोर्जगच्चक्षुष्ट्वमाह-पापोलूकेति—

पापोलूककुलैकविप्रियविधौ बद्धोद्यमे सर्वदा,
निर्वाणामरभूधरेण पिहिते देवे जगच्चक्षुषि ।
मिथ्यात्वोद्धतपङ्कशोषकरणे त्वय्येव नाथे हहा,
लोको लोचनवर्जितः कथमयं भावी भवारण्यगः ॥७४॥

पापान्येवोलूककुलानि तस्यैकोऽसाधारणो यो विप्रियस्य प्रतिकूलतायाः, तदुन्मूलनेन कृत्वेति भावः विधिर्विधानं करणं तस्मिन् सर्वदा, बद्ध आश्रित उद्यमः प्रयत्नो येन तस्मिन् उद्यते, मिथ्यात्वम् जिनोक्ताऽश्रद्धानमेव दूषकत्वादुद्धतो दुर्हानः पङ्कः तस्य शोषकरणे नीरसत्वाऽपादाने, मिथ्यात्वनाशने इत्यर्थः जगच्चक्षुषि सूर्यरूपे, पङ्कस्य सूर्ये इव मिथ्यात्वस्य शोषके त्वयि देवे नाथे एव, निर्वाणं मुक्तिरेव तिरोधायकत्वादपरो भूधरोऽस्ताचलस्तेन विहिते तिरोधापिते सति, हहा इति शोकाऽधिक्ये, लोचनवर्जितः नेत्रहीनोऽयं लोकः, भवारण्यगः भवो दुरवगाहत्वादरण्यमिव तत्र गच्छतीति स तादृशः, कथं केन प्रकारेण भावी भविष्यति ?, सूर्यो हि यथा पङ्कं विशोष्य तिमिरनाशनेन कृत्वाऽऽलोककरः, इति अरण्यं सुगं भवति, तथा पापोन्मूलमिथ्यात्वशोषणाभ्यां भवानपीति त्वदभावे भवमतिर्न भविष्यतीत्यर्थः "त्रयीतनुर्जगच्चक्षुस्तपनोऽरुणसारथि"रिति हैमः अत्र निर्वाणामरभूधरेणेति पाठोऽर्थाऽसङ्गत्या हेयः । परम्परितरूपकम् ॥७४॥

संसारान्तरे त्वमेव जीवनद इत्याह-पुत्रेति -

पुत्राभावनरेन्द्रमानविगमव्याधिप्रभेदोदय-
दारिद्र्यानलहेतिसंहतिशतैर्दंदह्यमानं विभो ?।
सन्तोषामृतकूपवर्जितमिमं तृष्णासमुल्लासकं ,
कस्त्वां जीवनदं विना शमयिता संसारकांतारकम् ॥७५॥

विभो ! प्रभो ! पुत्राभावः नरेन्द्रेण मानस्य विगमः नरेन्द्रकृतमानमर्दनम् व्याधीनां रोगाणां प्रभेदानां प्रकृष्टभेदानामुदय आविर्भावः दुःसाध्यव्याधिसमागमः, दारिद्र्यञ्चेत्येतानि अनलस्याग्नेर्हेतीनां ज्वालानां संहतिः परम्पराः तासां शतैः "हेतिः कीलाशिखाज्वालाऽर्चिरि"ति-हैमः दंदह्यमानम् पुनः पुनरतिशयेन च दह्यमानम् सन्तोषो यथालाभतुष्टिरेवाऽमृतकूपं जलकूपं सुधाकूपं च तेन वर्जितं रहितम् उपलक्षणत्वात्तृष्णानिराससाधनशून्यमित्यर्थः। तृष्णायाः कामादिरूपायाः पिपासारूपायाश्च समुल्लासकं वर्धकमिमं संसार एव कान्तारं तत्संसारकान्तार-कम्, जीवनं सद्वृत्तिं भावप्राणधारणञ्च जलं च ददाति इति स तादृशं त्वां शांतिनाथं विना कः शमयिता शमप्रदः ? ; न कोऽपीत्यर्थः । यथा दवाग्निग्रस्तं जलाधारादिरहितं तापतृषा-वर्धकं कान्तारं जलद एव शमयिता, तथा दुःखपीड़ितं कामादिवर्धकं सन्तोषशून्यं संसारं त्वां विना न कोऽपि शमयिता छेदकः इति भावः "पीयूषममृतं सुधा" "पयः कीलालममृतं जीवनं भुवनं वनम्" "वृत्तिर्वर्तनजीवने" इति चाऽमरः । अत्र परम्परितरूपकाऽनुप्राणितः श्लेषोऽलङ्कारः ॥७५॥

प्रभुं विना संसारस्याऽशोभमत्वमाह-रात्रिरिति—

रात्रिश्चन्द्रमसं विनोदवसितं दीपं विना भास्वरं,
कासारः कमलं विना ननु दिनं प्रद्योतनं तं विना ।
भूपालोऽपि नयं विना जिनपते ! दानं विवेकं विना,
यद्वद् नैव विभाति देव ! भुवनं तद्वद् भवन्तं विना ॥७६॥

जिनपते ! देव ! यद्वत् यथा, रात्रिश्चन्द्रमसं विना, उदवसितं गृहम् "गृहं गेहोदवसिते" इत्यमरः। भास्वरं प्रकाशशीलं दीपं विना, कासारः तडागः कमलं विना ननु निश्चयेन दिनं दिवसं प्रद्योतनं सूर्यं तं विना, भूपालोऽपि नृपश्च, नयं सामादिनीतिं विना, दानं विवेकं पात्राऽपात्रविचारं विना, नैव विभाति शोभते इति सम्बध्यते । रात्र्यादेश्चन्द्रमसादय इव भुव-नस्य भवान् भूषण इत्यर्थः। मालोपमाऽलङ्कारः ॥७६॥

अथेन्द्रेण सशोकचितानिर्मापणमाह-इत्थमिति –

इत्थं नाथं स्तुवंस्तं स्वयमपि विलपन् स्वं समालम्ब्य शक्रो,
मज्जन्तं दुःखवार्धौ विधृतकृतनिजाख्यांश्च संक्रन्दनांस्तान् ।

संबोध्यैवाभियोग्यैर्द्रुतमपि विबुधैर्देवदारूणि देवो-
द्यानादानाय्य वृत्तां स्म रचयति चितां प्राग्दिशि श्रीजिनस्य ॥७७॥

इत्थमुक्तप्रकारेण तं नाथं स्तुवन् स्वयं विलपन्नपि शक्रः, दुःखवार्धिः दुःखमेव जलं तद् विद्यत्वाद्वार्धिः सागरः तस्मिन् मज्जन्तं ब्रुडन्तं स्वमात्मानं शं शान्तिमालम्ब्य मनसि धारयित्वा, समालम्ब्येति पाठस्तु निराकाङ्क्षत्वाद्धेयः विधृताः स्वामिवियोगेन धृतिरहिताः कृताः ये निजा-ऽऽख्याः स्वतुल्यनामानस्तानन्यान्, संक्रन्दनान् संक्रन्दन्तीत्येवं शीलान् इन्द्रांश्च सम्बोध्य शांति बोधनद्वारा प्रापय्य, एवेति चार्थे । आभियोग्यैः आभिविबुधैर्देवैः कृत्वा द्रुतं देवोद्यानान्न-न्दनाख्याद् देवदारूणि दिव्येन्धनान्यानाय्य; श्रीजिनस्य शांतिजिनस्य शरीरस्य प्राग्दिशि पूर्वदि-शायां वृत्तां वर्तुलाकारां चितां रचयति निर्मापयति स्म ॥७७॥

अथ यथायोग्यं चितान्तरविधानमप्याह-अपाच्यामिति—

अपाच्यामिक्ष्वाकन्वयभवमुनीनां विरचिता,
चिता गीर्वाणैस्तैर्झगिति चतुरस्राऽथ चतुरैः ।
परेषां वारुण्यां ककुभि च महानन्दलयिनां
प्रभूणामादेशाद् विदधति न किं किङ्करजनाः ? ॥७८॥

चतुरैः दक्षैः गीर्वाणैर्देवैः अथ जिनेश्वरचितानिर्माणानन्तरम्, अपाच्यां दक्षिणस्यां दिशि झगिति द्रुतमेव, इक्ष्वाकन्वयभवानामिक्ष्वाकुकुलोद्भवानां मुनीनां चतुरस्रा चतुष्कोणा चिता विरचिता निर्मिता, वारुण्यां वरुणदेवताकायां ककुभि दिशि पश्चिमदिशि इत्यर्थः । महानन्दलयिनां शाश्वतानन्दलीनानां परेषामन्यवंशोद्भवानां मुनीनां, चिता विरचितेत्यनुषज्यते, ननु ते किमित्येवं कृतवन्त इति चेत्तत्राऽऽह—प्रभूणामिति—प्रभूणां स्वामिनामादेशात् किङ्करजनाः भृत्यवर्गाः किं न विदधति ? अपितु सर्वं विदधतीत्यर्थः । तदेव हि कैङ्कर्यं यत् स्वाम्याज्ञाकरणमिति भावः ॥७८॥

अथ शान्तिनाथदेहसंस्कारमाह-संस्नाप्येति—

संस्नाप्य क्षीरवार्धेर्विमलतरजलैश्चन्दनैः संविलिप्य,
वासोभिर्देवदुष्यैरमृतकरकरप्रोज्ज्वलैः संविभूष्य ।
देवैरभ्यर्च्य पुष्पैः स्वयमपि मघवा स्वामिदेहं तथैव
कृत्वाऽन्याङ्गानि चान्ये सपदि दिविपदो याप्ययानेष्वमांस्ते ॥७९॥

मघवा इन्द्रः, देवैः कृत्वा स्वयमात्मनाऽपि च, स्वामिनः श्रीशान्तिनाथस्य देहं शरीरं, क्षीरवार्धेः क्षीरोदधेः विमलतरजलैः संस्नाप्य, चन्दनैः संविलिप्य अनुलिप्य, अमृतं सुधा जलं वा करेषु किरणेषु यस्य सोऽमृतकरश्चन्द्रस्तस्य करा मरीचय इव प्रोज्ज्वलानि तैः, देवदुष्यैः वासोभिः वस्त्रैश्च, संविभूष्य, पुष्पैरभ्यर्च्य, अन्ये च दिविपदो देवा अन्येषाम् भगवदन्तिकानां

भार्यमुनीनाम् अङ्गानि शरीराणि तथैव कृत्वा स्नानार्चादि कृत्वा ते दिविषदो देवाः, सपदि सद्यः याप्ययानेषु शिबिकासु "शिबिका याप्ययाने" इति हैमः । अमान् स्थापयन्ति स्म ॥७९॥

अथ देवकृतशिबिकोद्वहनमाह-उद्धारेति—

उद्धार शिबिकां शतक्रतुः स्वामिनः स्वशिरसा विषादभाक् ।
द्वे तु ये च शिबिके पृथक् पृथक् ते सहस्रममरा समुद्दधुः ॥८०॥

शतक्रतुरिन्द्रः, विषादभाक् स्वामिविरहेण विषण्णः सन् स्वशिरसा स्वमस्तकेन स्वामिनः शान्तिनाथस्य शिबिकां याप्ययानमुद्धार ऊढवान् । द्वे उभे तु ये च शिबिके इक्ष्वाकुकुलोत्पन्नमुनीनां तद्व्यतिरिक्तमुनीनाञ्चेत्यभिगम्यते ते द्वे शिबिके, सहस्रममराः सहस्रसंख्याका देवाः पृथक् पृथक्, समुद्दधुरुद्वहन्ति स्म ॥८०॥

अथ देवैः शिबिकात्रयस्य चितासमीपप्रापणं विशेषकेणाऽऽह पौलोम्यादिकेति—

पौलोम्यादिकदेवतासु ददतीषूच्चैः स्वरं रासकान्,
गन्धर्वप्रकरे पुरः कलरवं संगीतकं कुर्वति ।
वासोवन्दनमालिकाः सरभसं तन्वत्सु देवेष्वलं,
रङ्गं केषुचिदुत्सृजत्सु मनसः काश्मीरपङ्कच्छलात् ॥८१॥

पौलोमी इन्द्राणी सा आदिः प्रथमा मुख्या वा यासां तासु देवतासु इन्द्राणीप्रभृतिदेवीषु, उच्चैः स्वरो यथा स्यात्तथा, रासकान् तदाख्यगीतविशेषान् ददतीषु कुर्वतीषु सत्सु तथा पुरोऽग्रे गन्धर्वाणां देवविशेषाणां प्रकरे समूहे कलो मधुरो रवः स्वरो यथास्यात्तथा सङ्गीतकं सङ्गीतं कुर्वति सति, देवेषु वासांसि वन्दनमालिकाश्च सरभसं सवेगहर्षम् अलमत्यर्थम् तन्वत्सु वितरत्सु सत्सु, केषुचिद्देवेषु काश्मीरं घुसृणं तस्य पङ्कस्य कर्दमस्य च्छलाद्व्याजान्मनसो रङ्गमनुरागम्, भक्तिमिति यावत् उत्सृजत्सु उत्क्षिपत्सु सत्सु ॥८१॥

स्वाम्यग्रेऽगुरुजं वहत्सु बहलं धूपं पुनः केषुचिद्,
गन्धाढ्या अपि केषुचित् सुमनसो मालाः प्रवर्षत्सु च ।
बिभ्राणेषु विभोरुपर्युपरि च च्छत्रोच्चयं केषुचित्
शेषाः केषुचिदाच्छिनत्सु परतो निःशेषदोषच्छिदे ॥८२॥

पुनस्तथा, केषुचिद्देवेषु स्वाम्यग्रे शान्तिनाथाऽग्रे अगुरुजं कृष्णागुरुजं बहलं सान्द्रं धूपं वहत्सु नयत्सु सत्सु केषुचिद्देवेषु च गन्धाढ्याः परिमलोद्गारिणीः सुमनसः, माला अपि, प्रवर्षत्सु सत्सु, केषुचिद्देवेषु विभोः श्रीशान्तिनाथस्य उपर्युपरि च्छत्राणामातपत्राणामुच्चयं राशिं बिभ्राणेषु धारयत्सु सत्सु च केषुचिद्देवेषु परतः पश्चात्, निःशेषाणां सकलानां दोषाणां पापादीनां छिदे नाशाय शेषाः निर्माल्यरूपाः विभोरुपरि क्षिप्ताः पुष्पादय आच्छिनत्सु हठाद्बलाच्च परस्परं गृह्णत्सु सत्सु च ॥८२॥

प्रेक्षणस्य समवेक्षणक्षणस्थैर्यमेव दधतः पदे पदे।
निन्युराशु शिबिकात्रयं चितासन्निधौ सुरपतिः सुराश्च ते ॥८३॥

प्रेक्षणस्य दर्शकस्य, प्रेक्षते इति नन्द्यादित्वादनः, पदे पदे प्रतिपदं समवेक्षणे दर्शने क्षणस्थैर्यं कालविलम्बमेव दधतः कुर्वतः सतोऽपि, अन्तिमदर्शनत्वादिति भावः सुरपतिरिन्द्रः, ते सुराश्च आशु शिबिकात्रयम् चितासन्निधौ निन्युः प्रापयामासुः ॥८३॥

अथ चितायां तेषां व्यवस्थापनमाह-प्राचीति—

प्राचीपतिर्न्यधित शान्तिजिनस्य देहं, प्राच्यां समारचितवृत्तमहाचितायाम्।
अन्ये सुराश्च चतुरस्रचिताद्वयेऽपि, देहान् न्यधुर्मुनिगणस्य परस्य खेदात् ॥८४॥

प्राच्याः पूर्वदिशायाः पतिरिन्द्रः प्राच्यां पूर्वदिशि समारचितायां निर्मितायां वृत्तायां वर्तुलायां महत्यां चितायां शान्तिजिनस्य देहं शरीरम् खेदात् सशोकं यथास्यात्तथा न्यधितातिष्ठपत्, अन्ये सुराश्चापि चतुरस्रे चतुष्कोणे चिताद्वये परस्याऽन्यस्य मुनिगणस्य देहान् शरीराणि न्यधुरतिष्ठिपत्, खेदादित्यत्राऽपि सम्बध्यते ॥८४॥

अथ चितायामग्न्यादिप्रदानमाह-वह्निमिति—

वह्निं वह्निकुमारका द्रुततरं तत्राऽमराश्चिक्षिपु-
र्वातं वातकुमारकास्तदपरे कर्पूरधूपानपि।
उत्पन्ना खलु धूमधोरणिरियं ताभ्यश्चिताभ्यस्त्रिधा,
कालुष्यं भुवनत्रयस्य ददतीवाऽभाज्जिनेन्द्रव्यये ॥८५॥

तत्र चितासु वह्निकुमारकाः स्वनामख्याता अमरा देवा द्रुततरमतिशीघ्रम् कालविलम्बस्याऽनपेक्षणीयत्वादिति भावः वह्निं चिक्षिपुः निक्षिप्तवन्तः, वातकुमारकाः स्वनामख्याताः पवनकुमाराः अमरा वातं वह्निसन्दीपकं पवनम्, चिक्षिपुरिति सम्बध्यते वायुना प्रज्वालयन्ति स्म ताभ्यामग्निकुमारवातकुमाराभ्यामपरेऽन्ये देवाः अपि कर्पूरधूपान्, चिक्षिपुरित्यनुषज्यते ताभ्यश्चिताभ्यस्तिसृभ्यः त्रिधा त्रिप्रकारा उत्पन्ना इयं प्रत्यक्षकल्पा धूमानां धोरणिः परम्परा जिनेन्द्रव्यये प्रभोर्विरहे सति, भुवनत्रयस्य कालुष्यं शोकजन्यमलिनत्वम्, धर्मचक्रप्रवर्तकाऽसत्वाद् दुःखार्तत्वं वा ददती ददानेव अभात् भाति स्म। उत्प्रेक्षा ॥८५॥

अथ चिताऽग्निज्वालां वर्णयति-वह्नाविति -

वह्नावुच्छ्रयतां समीयुषि मरुत्संपातमात्रादपि,
ज्वालानां त्रितयं विनिःसृतमभात् ताभ्यश्चिताभ्यस्ततः।
भेदं वेदयितुं कथञ्चिदिव तत् तीर्थङ्करान्यात्मनां
त्रित्वं केवलवेदनागतमिदं लोकत्रयालोकने ॥८६॥

वह्नावग्नौ, मरुतो वायोः सम्पातमात्रात्सञ्चारमात्रेणाऽपि, उच्छ्रयताम् ऊर्ध्वज्वलत्वं समीयुषि प्राप्ते सति, ततोऽनन्तरं ताभ्यश्चिताभ्यो विनिःसृतं निर्गतं ज्वालानां त्रितयम्, तीर्थङ्करस्य अन्येषां मुनीनामात्मनाञ्च कथञ्चिदिव केनाऽपि प्रकारेण तत्प्रसिद्धं भेदं तारतम्यं वेदयितुं ज्ञापयितुम्, इदं केवलवेदनं केवलज्ञानं लोकत्रयस्य आलोकने त्रित्वं त्रिसङ्ख्यत्वं गतं प्राप्तमिव अभाद् भाति स्म अत्र लोकत्रयेति पदस्यार्थः केवलवेदनस्य त्रित्वे हेतुतयोपन्यस्त इति पदार्थहेतुकः काव्यलिङ्गमलङ्कारः ॥८६॥

अथ चिताविध्यापनदंष्ट्राग्रहणमाह-मेदोधामेति—

मेदोधामविवर्जधातुषु शिखिप्लुष्टेषु दुग्धाम्बुभि—
देवैर्मेघकुमारकैरतिजवाद् विध्यापितायां चितौ ।
ऊर्ध्वामादित दक्षिणां सुरपतिर्दंष्ट्रामधस्ताच्च तां,
पातालाधिपतिर्जिनस्य चमरो दोषप्रमोषादरः ॥८७॥

मेदसो वसाया धाम सारः इव मेदोधाम कीकसम्, अस्थीत्यर्थः । तस्माद्विवर्जेषु रहितेषु धातुषु मांसादिषु शिखिनाऽग्निना प्लुष्टेषु दग्धेषु सत्सु, मेघकुमारकैः देवैः, अतिजवादतिशीघ्रं दुग्धैरम्बुभिश्च, क्षीरोदवारिभिर्वा चितौ चितायां विध्यापितायामुपशमितायां सत्याम् सुरपतिरिन्द्रः जिनस्य श्रीशान्तिनाथस्य ऊर्ध्वामुपरिस्थां दक्षिणां दक्षिणभागस्थां दंष्ट्रामादित गृहीतवान् पाताऽधिपतिश्चमरस्तदाख्य इन्द्रश्च, दोषप्रमोषे दोषोन्मूलने आदरः साग्रहं मनो यस्य स तादृशः, जिनदंष्ट्रा पार्श्वस्था सती दोषनाशिनीति तथा हृदयः सन्, अधस्तादधोभागस्थां तां दक्षिणां च आदितेति सम्बध्यते ॥८७॥

अथाऽन्येषामपि दंष्ट्राद्यादानं स्तूपस्थापनाञ्चाह-ईशानेति -

ईशानाधिपतिर्बलिश्च मघवा वामे च दंष्ट्रे तथा—
ऽग्राहीष्टां क्रमशः परे च रदना नाखण्डलाश्चाभितः ।
अस्थीन्यादिषताऽमरा नृपतयो भूतिं च रेणुं नरा,
रत्नस्तूपमतिष्ठिपञ्जिनचितिस्थानेऽथ देवेश्वराः ॥८८॥

ईशानाऽधिपतिरीशानेन्द्रः बलिस्तदाख्यश्च मघवा इन्द्रः, तथा पूर्ववत् वामे सव्ये दंष्ट्रे ऊर्ध्वाऽधःस्थे, अग्रहिष्टाम् गृहीतवन्तौ अत्राऽग्राहीष्टामिति पाठश्च्युतसंस्कारः, अद्यतन्यां ग्रहधातोर्हन्तत्वेन वृद्धिनिषेधात् इटो दीर्घाच्च अग्रहीष्टामिति पाठे तु वृत्तभङ्ग इति सुधीभिर्ध्येयम् परेऽन्ये आखण्डला इन्द्राश्चाभितः पार्श्वतः क्रमशो यथाक्रमम्, रदनान् दंतान् अग्रहीषुरिति शेषः, तथा, अमराः इन्द्रातिरिक्ता देवाः अस्थीनि, नृपतयः, भूतिं भस्म, नराश्च रेणुं पांसुम्, आदिषत गृहीतवन्तः, अर्थाज्जिनस्यैव, अथाऽनन्तरं देवेश्वरा देवेन्द्राः जिनस्य श्रीशान्तिनाथस्य चितेश्चितायाः स्थाने रत्नस्तूपं रत्नमयस्तूपं स्वनामप्रसिद्धम् अतिष्ठिपत् स्थापयन्ति स्म ॥८८॥

अथ शान्तिनाथकालमाह-वर्षाणामिति -

वर्षाणां किल पञ्चविंशतिरभूत् कौमारकाले प्रभो,
राज्ये चक्रिपदे व्रते च सकलं लक्षं पुनर्मीलितम् ।
आसीद् धर्मजिनस्य मुक्तिसमयात् शान्तिप्रभोर्निर्वृतिः,
पादन्यूनकपल्यहीनजलधिष्वीतेषु तेषु त्रिषु ॥८९॥

प्रभोः श्रीशान्तिनाथजिनस्य, कौमारकाले बाल्ये, वर्षाणां पञ्चविंशतिः, अभूत्, किलेत्यै-तिह्ये, इयं कालगणना ऐतिह्यप्रसिद्ध्यनुसारेणेत्यर्थः । प्रभोः पञ्चविंशतिर्वर्षाणां कौमाराव-स्थेत्यर्थः । तथा पुनः, राज्ये राज्यकाले, चक्रिपदे चक्रिपदयुक्ते व्रते च वर्षाणां पञ्चविंशतिः सकलं मीलितमेकीकृतम्, लक्षं लक्षवर्षात्मकम्, सम्पूर्णमायुः ननु स कदाऽभूत् कदा च निर्वृत इत्याह आसीदिति धर्मजिनस्य धर्मनाथतीर्थङ्करस्य मुक्तिसमयान्मुक्तिसमयमवधीकृत्य, तेषु प्रसिद्धेषु, त्रिषु त्रिसङ्ख्यकेषु, पादेन चतुर्थांशे न्यूनमेव न्यूनकं यत्पल्यं पल्योपमम्, तस्माद् हीनेषु न्यूनेषु जलधिषु सागरोपमेषु ईतेषु व्यतीतेषु सत्सु । ईधातोः क्ते ईतमिति रूपं बोध्यम् । शान्तिप्रभोर्निर्वृ-तिर्मुक्तिरासीदभूत् ॥८९॥

अथ देवानां स्वस्वस्थानगमनमाह-रत्नेति—

रत्नस्तूपे लिखित्वेत्यनुपमसुषमासुप्रशस्तां प्रशस्तिं,
श्रीशान्तेर्देवराजप्रमुखसुरवरा मङ्क्षु नन्दीश्वरेऽपि ।
ते गत्वाऽष्टाह्निकाया महिमपरमहं संविधायाऽस्तशोकाः,
स्वं स्वं स्थानं प्रतीयुः प्रमदसमुदयाऽऽपूर्णचित्ता विमानैः ॥९०॥

श्रीशान्तेः शान्तिजिनस्य, इत्युक्तप्रकारां बल्यादिकालबोधिकाम् अनुपमया शोभया सुषमा-कालेन वा सुप्रशस्तामत्युत्तमां प्रशस्तिं प्रशस्तिश्लोकं रत्नस्तूपे लिखित्वा, ते प्रस्तुता देवराजा इन्द्राः प्रमुखा येषु ते तादृशाः सुरवराः, मङ्क्षु शीघ्रमेव, नन्दीश्वरे तीर्थेऽपि गत्वा अष्टाह्निकायाः महिम-परं महत्त्वास्पदं महमुत्सवं संविधाय कृत्वा, अस्तशोकाः शोकरहिताः, अत एव, प्रमदस्य हर्षस्य समुदयेनोद्भवेन आपूर्णं संभृतं चित्तं येषां ते तादृशाः प्रहृष्टाः सन्तः, विमानैः वायुयानैः कृत्वा स्वं स्वं स्थानं प्रति ईयुः जग्मुः । "मुत्प्रीतिः प्रमदो हर्ष" इति अमरः ॥९०॥

अथ चक्रायुधनिर्वाणमाह दुष्कर्माणीति—

दुष्कर्माणि निहत्य तीव्रतपसा ज्ञानं विनाशोज्झितं,
लब्ध्वा भूवलये विहृत्य सुचिरं भव्यप्रबोधोद्यतः ।
तीर्थे कोटिशिलाख्ययाऽत्र विदिते संप्राप्तसंन्यासको,
निर्वाणाभरणो बभूव गणभृच्चक्रायुधोऽपि क्रमात् ॥९१॥

गृहीतदीक्षः चक्रायुधस्तदाख्यो गणभृद् गणधरोऽपि तीव्रेणोत्कटेन तपसा दुष्कर्माणि निहत्य विनाश्य, विनाशेन उज्झितं रहितं स्वस्वरूपेण नित्यमित्यर्थः। ज्ञानं केवलज्ञानं लब्ध्वा, भव्यानां प्रबोधे ज्ञानसम्पादने उद्यतस्तत्परः सन् सुचिरं दीर्घकालं यावत्, भूवलये महीतले विहृत्य विहारं विधाय, अत्रास्मिन् लोके कोटिशिलाऽऽख्यया कोटिशिलानाम्ना विदिते ख्याते तीर्थे क्रमात् कालक्रमात्, निर्वाणमाभरणं यस्य स तादृशो बभूव, निर्वाणं प्राप्तवानित्यर्थः ॥९१॥

**अथ ग्रन्थान्ते कल्याणमाशंसन्नाह राज्यमिति—**

> राज्यं भुक्तवतोऽपि यस्य समभूत् सा चक्रिलक्ष्मीर्वशे,
> भोगानां विमुखः सुदुर्जयतमं मोहं न्यहन् यः स्फुटम् ।
> वित्तिश्रीसहचारिणीं च रमते यः सिद्धिसीमन्तिनीं,
> कल्याणं स ददातु वः प्रतिदिनं श्रीशान्तिनाथः प्रभुः ॥९२॥

यस्य श्रीशान्तिनाथस्य राज्यं भुक्तवतः पालितवतोऽपि सा प्रसिद्धा चक्रिलक्ष्मीः चक्रवर्तिश्रीः वशे वशगाऽभूत्। तथा, यः श्रीशान्तिः, भोगानां विमुखः भोगेभ्यः पराङ्मुखः सन्, भोगानामिति शेषे षष्ठी बोध्या सुदुर्जयतमं जेतुमत्यन्तं दुश्शकमसाध्यं मोहं ममत्वबुद्धिं स्फुटं विशदं यथा स्यात्तथा न्यहन् विनाशितवान्, त्यक्तवानित्यर्थः तथा, यश्च वित्तेः ज्ञानस्य या श्रीस्तस्याः सहचारिणीं सखीं सिद्धिरेव स्त्रीत्वात् सीमन्तिनी ललना ताम्, रमते सेवते, यत्र ज्ञानं तत्रैव सिद्धिरिति भावः। स श्रीशान्तिनाथः प्रभुः वः श्रोतॄणामध्येतॄणां च प्रतिदिनं कल्याणं ददातु ॥९२॥

**अथ सर्गसमाप्तिमाह-आसीदिति--**

> आसीच्छ्रीगुरुगच्छमौलिमुकुटश्रीमानभद्रप्रभोः,
> पट्टे श्रीगुणभद्रसूरिसुगुरुर्विज्ञानभाजां गुरुः ।
> तच्छिष्येण कृतेऽत्र सर्ग उचिते श्रीशान्तिवृत्ते महा-
> काव्ये श्रीमुनिभद्रसूरिकविनाऽप्येकोनविंशोऽगमत् ॥९३॥

श्रीगुरूणां लक्ष्मीश्रेष्ठानां गच्छानां मौलीनां मस्तकानां मुकुटरूपस्य श्रीमानभद्रप्रभोः पट्टे विज्ञानभाजां विशिष्टज्ञानिनां गुरुः श्रेष्ठः श्रीगुणभद्रसूरिस्तदाख्यः सुगुरुरासीत्। तस्य गुणभद्रसूरेः शिष्येण श्रीमुनिभद्रसूरिकविना कृते रचिते, अत्राऽस्मिन् उचितेऽभ्यस्ते उत्तमे वा श्रीशान्तेः वृत्ते-पद्यात्मकचरित्रे वृत्तान्तात्मके वा महाकाव्ये, एकोनविंशोऽपि तत्सङ्ख्यकोऽपि सर्गः अगमत् समाप्तः ॥



# प्रशस्तिः काव्यकर्तुः

कल्याणात्मा सुरगिरिरिवाऽऽक्रान्तलक्षप्रमाणः,
प्रीत्युत्कर्षाद् विविधविबुधाधीश्वरै स्तूयमानः ।
कल्पान्तेऽप्यप्रतिहतिमयं निश्चलत्वं दधानः,
सिद्धाकाङ्क्षः स जयति चिरं श्री बृहद्गच्छगच्छः ॥१॥

भव्याम्भोजविबोधनेन विदितः श्वेताम्बरोद्द्योतकः,
सर्वाशाप्रतिरोधकोग्रतमसां प्रध्वंससंपादकः ।
तत्र श्रीमुनिचन्द्रसूरिरभवद् भास्वानिवोद्यद्विभः,
सन्मार्गं प्रकटीचकार भगवान् यो जीवमैत्रीं श्रयन् ॥२॥

तत्पट्टाचलपूर्वपर्वतशिरःशृङ्गारतिग्मद्युतिः,
स्फूर्जत्कौमुदचन्द्रधामनिहतिप्रख्यातकीर्तिव्रजः ।
तापव्यापदपाकृतिप्रमुदितैरासेव्यमानो भृशं,
सच्चक्रैः सततं चिरं स जयति श्रीदेवसूरिप्रभुः ॥३॥

पट्टे तस्य बभूवुरद्भुतमतिप्रागल्भ्यविभ्राजिनः,
श्रीभद्रेश्वरसूरयः शमरसात् कूपारलीलाभृतः ।
लक्ष्मीर्यत्पदवासिनी समभवत् पीयूषबन्धोर्गिरः,
प्रीतेवाऽपरथा कथं द्वयमिदं विन्दन्ति तद्वन्दिनः ॥४॥

सूरि श्रीविजयेन्दुसूरिरभवत् तत्पट्टनिष्ठक्रमो,
मिथ्यात्वद्विपमानभञ्जनविधौ पञ्चाननस्याग्रजः ।
यं मीमांसकनास्तिकप्रभृतयो मानोन्नता वादिनः,
श्रुत्वा सत्पथवर्तिनं जडतयैवाऽऽलम्बिताः कापथम् ॥५॥

तत्पट्टे पथिमानमाप गणभृत् श्रीमानभद्रप्रभु–
श्चित्रं चित्रशिखण्डिजस्य कुरुते यद्बुद्धिरालोकिता ।
चार्वाकं सुकृतानुमापकतया न्यक्कुर्वती सर्वतः,
कर्माद्वैतनिदर्शनेन च तथा द्वैतप्रवादं हठात् ॥६॥

तस्य श्रीगुणभद्रसूरिसुगुरुः पट्टावतंसोऽभवद्,
यः श्रीशाहिमुहम्मदस्य पुरतः क्ष्मापालचूडामणेः ।

श्लोकश्याकृतिरञ्जितस्य ददतः सौवर्णटङ्कायुतं,
ग्राह्यं नैव तपस्विनामिति वदंश्चारित्रमस्थापयत् ॥७॥

केचिद् व्याकरणे भवन्ति निपुणाः केचित् पुनश्छन्दसि,
प्रायः केचन नाटकेषु नितरां तर्केषु केचिन्पुनः ।
साहित्ये कतिचित् प्रसन्नमतयोऽलङ्कारपारङ्गमा–
श्चातुर्ये गुणभद्रसूरिसुगुरोः शास्त्रेषु सर्वेष्वपि ॥८॥

तच्छिष्यो मुनिभद्रसूरिरजनि स्याद्वादिसंमाननः,
श्रीपेरोजमहीमहेन्द्रसदसि प्राप्तप्रतिष्ठोदयः ।
तेनेदं निरमायि मन्दमतिना श्रीशान्तिवृत्तं नवं,
तत्तजन्मसहस्रसंचितमहादुष्कर्मविच्छित्तये ॥९॥

पूज्यश्रीमुनिदेवसूरिरचितश्रीशान्तितीर्थेश्वर–
प्रख्यातादभुतकाव्यदर्शनतया काव्यं मयेदं कृतम् ।
उत्सूत्रं यदि भावि किञ्चिदपि तद् नाऽऽदेयमेतत् सतां,
स्याद् नूनं नच निर्वृतिं रचयतीत्यालोच्य बुद्ध्याऽधिकम् ॥१०॥

श्रीमान् हर्षपुरीयगच्छजलधिप्रोल्लासशीतद्युति–
र्वाणीभूषणराजशेखरगुरुः सौजन्यसंवासभूः ।
श्रीशान्तेश्चरितं व्यशोधयदिदं दुष्कर्ममर्मापहं,
प्राज्ञैस्तैरपि शोध्यमेतदसमं कृत्वा प्रसादं मयि ॥११॥

अर्हत्पादपयोजसेवनविधौ यो वर्तते हंसवद्,
नित्यं सद्गुरुभक्त्यगाधसरसीक्रीडोऽच्छपक्षद्वयः ।
नीरक्षीरविवेकवत् प्रमनुते योऽधर्मधर्मान्तरं,
स श्रीशान्तिजिनेन्द्रकाव्यभणने संरम्भमुद्भावयेद् ॥१२॥

ये दोषान् प्रतिपादयन्ति सुधियः श्रीकालिदासोक्तिषु,
श्रीमद्भारविमाघपण्डितमहाकाव्यद्वयेऽप्यन्वहम् ।
श्रीहर्षामृतसूक्तिनैषधमहाकाव्येऽपि ते केवलं,
यावद् वृत्तविवर्णनेन भगवच्छान्तेश्चरित्रे गुणान् ॥१३॥

मिथ्यात्वाञ्चितकाव्यपञ्चकमिदं व्याचक्षते सूरयो,
यद्वद् प्राथमकल्पिकाय सततं व्युत्पत्तिसंप्राप्तये

तद्वच्छान्तिजिनाधिनाथचरितं सम्यक्त्वसंभावना-
वासावासितमानसा यदि ततः किं स्याद् न वा वाञ्छितम् ? ॥१४॥

अनुष्टुब्मानेन प्रविरचितवर्णैकगणनं,
प्रवित्त ग्रन्थाग्रं सकलमपि काव्ये जिनपतेः ।
शतानि द्वाषष्टिं बुधसमुदयाः संभदभृतः,
परं द्वासप्तत्या समधिकतमानि स्वयमिदम् ॥१५॥

प्रोक्तो लोकत्रितयगुरुभिर्द्वेषरागैकबीज-
व्यामोहस्य क्षयविरचनात् प्राप्तविज्ञानतत्त्वैः ।
यावद्धर्मो जगति जयति श्रीमतः शान्तिनाथ-
स्यैतद् तावच्चरितमनिशं वाच्यमानं सुधीभिः ॥१६॥

० १ ४ १
अन्तरिक्षरजनीहृदीश्वरब्रह्मवक्त्रशशिसंख्यवत्सरे
वैक्रमे शुचितपोजयातिथौ शान्तिनाथचरितं व्यरच्यत ॥१७॥

इतिश्रीशान्तिनाथचरित्रं समाप्तम्



## ॥ श्री-शान्तिनाथ-महाकाव्य-व्याख्याकृता कृतं मङ्गलम् ॥

[ प्रथमसर्गादौमङ्गलाचरण-श्लोकद्वयम् ]

यच्छान्त्यं शमवाप्य निःस्पृहतया योगीश्वराः कामना-
तीताध्यात्पदं निरामयमलं पश्यन्ति तादात्म्यतः ।
तं शान्त्यैकनिकेतनं जिनवरंनत्वा तनोति स्फुटां,
व्याख्यां दर्शनसूरिरस्य चरिते श्री शान्तिनाथप्रभोः ॥१॥

साहाय्यं स्मृमितिमागतो गुरुवरः श्रीनेमिसूरिः कृपा-
पारावार इहाशयामलमतिं दत्वा करिष्यत्यलम् ।
आसत्यादिविभावितान्वयमति प्रद्योतनैकक्रिया,
व्याख्येयं प्रभुशान्तिनाथचरणे सेवार्थमुल्लासिता ॥२॥

[ प्रथमसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

वृत्यर्थान्वयबोधिका नियमिता तात्पर्यतोऽर्थे वरे,
बाध्यार्थापरिशीलिता विमतिहृत्कोशप्रमाणान्वया ।
आप्ते शान्तिचरित्रसङ्गतिपरे मूलार्थविद्योतिता,
सर्गे पूर्तिमुपागाता तनुतरा व्याख्यांऽशतो भाविता ॥१॥

[ द्वितीयसर्गादौ मङ्गलाचरण-श्लोकः ]

यं मातुं न गुणैर्गुरुप्रभृतयो देवेन्द्रपूज्या जिनं,
शक्ताः शान्तिनितान्तकान्तममलं मुक्त्यङ्गनालिङ्गितम् ।
तं श्रीशान्तिपतिं वरिष्ठचरितं नत्वा द्वितीये वरे,
सर्गे दर्शनसूरिरास्तचरिते व्याख्यां तनोत्यादरात् ॥१॥

[ द्वितीयसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

पौर्वापर्ययुते सुपद्यनिचये गूढाशयोल्लासिते,
साङ्गत्येन मिथोऽन्वयानुगमनेऽनेकान्तमार्गाश्रिता ।
व्याख्या दर्शनसूरिणा विरचिता सर्गे द्वितीये गता,
पूर्ति शान्तिचरित्रचर्वणपरा विज्ञप्रमोदप्रदा ॥१॥

[ तृतीयसर्गादौ मङ्गलाचरणश्लोकः ]

यो रागादिविपक्षपक्षदलनाज्ज्ञानप्रकर्षं गतो,
देवेन्द्रादिभिरर्चनीयचरणोऽबाध्यागमैकान्तमूः ।

नत्वा तं जिनमाप्तमस्य चरिते व्याख्यां तृतीये स्फुटां,
सर्गे संतनुते निसर्गमधुरे विद्याघनो दर्शन ॥१॥

[ तृतीयसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

या भक्तिर्गुरुनेमिसूरिचरणे शक्तिस्तु या भाविकी,
नैपुण्यं बहुलोकशास्त्ररचनादालोनातोऽपि यत् ।
अभ्यासो बुधशिक्षया समभवत् योऽसौ समस्तैस्तु तै-
र्व्याख्या पूर्तिमियं च दर्शनभवा सर्गे तृतीये गता ॥१॥

[ चतुर्थसर्गादौ मङ्गलाचरणश्लोकः ]

शान्तिं यस्तनुतेऽमितां जिनवरश्चैत्ये विचित्रप्रभे,
शस्त्रालङ्कृतिशून्यभव्यमुकुटाद्यच्छ त्सबिम्बार्चके ।
लोके भक्तिभराञ्चिते तमभितश्श्रीशान्तिनाथं प्रभुं,
नत्वा सर्गं इमां करोति सुकृती व्याख्यां तुरीये वराम् ॥१॥

[ चतुर्थसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

व्याख्यानान्तरशून्यतापरिचिते सूक्तेऽतिगूढार्थके,
सर्गे दर्शनसूरिबुद्धिजनिता व्याख्या तुरीये तु या ।
सा पूर्णाऽपि कथं भविष्यति तथा नो पूर्णमोदप्रदा,
विज्ञानां यदि तर्हि कामितफलं कर्तुः स्वयं दास्यति ॥१॥

[ पञ्चमसर्गादौ मङ्गलाचरण-श्लोकः ]

यज्ज्ञाने भाति विश्वं चरमचरमपि स्वस्वधर्मावलीढं,
सापेक्षं युक्त्युपेतावितथबहुविधप्राज्यमानोपनीतम् ।
नत्वा तं शांतिनाथं गुरुचरणरतो दर्शनः पञ्चमेऽस्य,
सर्गे व्याख्यां तनोति स्फुटतरवचनैर्भावबोधप्रवीणाम् ॥१॥

[ पञ्चमसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

व्याख्या तन्वी मनोज्ञा सरसवचनतो मोददा मार्मिकाणां,
नीतिव्रातावनद्धा मितिततिभजनोल्लासनैकान्तकान्ता ।
पूर्णा श्रीनेमिसूरिप्रवरगुरुकृपाऽवाप्तविद्येन सर्गे,
संदब्धा दर्शनेनागमहृदयविदा पञ्चमे गूढतत्त्वे ॥१॥

[ षष्ठसर्गादौ मङ्गलाचरणश्लोकः ]

सर्वे वादा यदीयागमजलनिधितो निर्गता भिन्नमार्गा,
एकान्तस्थानभूमौ नियतपतनतो न प्रतिष्ठां लभन्ते ।
श्रीमन्तं शान्तिनाथं तमिह जिनवरं सर्वविघ्नापनुत्यै,
नुत्वा सर्गे तु षष्ठे विवृतिमतिमितां दर्शनः सन्तनोति ॥१॥

[ सप्तमसर्गादौ मङ्गलाचरणश्लोकः ]

[ षष्ठसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

व्याख्येयं नूतनाभानवनवविषयोद्बोधनैकान्तदक्षा,
नो गुर्वी नातिलघ्वी सुगमसरणिणाषष्ठसर्गार्थभव्या ।
पूर्णश्रीदर्शनस्यामितमतिनिचिता बन्धुराचित्रभावा
विज्ञेभ्यो मोददाने भवतु पटुतरा दृष्टिमार्गोपजाता ॥१॥

अस्त्यात्मा नित्य एषो भवति च कृतिमान् भोगकृत् कर्मविद्धो,
मुक्तः सम्यक्त्वषट्कं षडितरदुदितात्रास्ति जीवादि मिथ्या ।
व्यक्तं सूत्रे यदीये तमिह जिनवरं दर्शनोऽहं प्रणम्य,
कुर्वे व्याख्यां तु सर्गे जिनवरचरिते सप्तमे भव्यतत्त्वाम् ॥१॥

[ सप्तमसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

व्याख्या चैकत्र काव्ये भवति बहुविधा कर्तृमन्तव्यभेदात्,
सर्वा सा सर्वमान्या न च भवति ततः श्लाघ्यता श्रोतृभिन्ना ।
इत्थं चैतद्व्यवस्थां बुधततिप्रमितामाश्रयन्तीह पूर्णा,
व्याख्या सर्गे प्रशस्ता भवतु बुधमता सप्तमे दर्शनोत्था ॥१॥

[ अष्टमसर्गादौ मङ्गलाचरणश्लोकः ]

यः सामान्यं विशेषाकलितमुदितवान् वस्त्वभिन्नं च भिन्नं,
ज्ञेयं जात्यन्तरं नो भवति परमतैर्दूषणैर्बाधनीयम् ।
तं नत्वा शान्तिनाथं जिनमतुलगुणं दर्शनो दर्शनज्ञो,
व्याख्यां सर्गेऽष्टमेऽर्थान्वयमतिजननीं पद्यराशेस्तनोति ॥१॥

[ अष्टमसर्गान्तेऽन्त्यमङ्गल श्लोकः ]

हृद्यालङ्कारयुक्ता नवरसकलिता मूलपद्यावली या,
साकाङ्क्षासत्तियोग्यां बहुविधहृदयां तां समालिङ्ग्य जाता ।

व्याख्येयं दर्शनोत्था निजगुणघटिताऽल्पाक्षरार्थौघमिश्रा,
पूर्णा सर्गेऽष्टमेऽलं जनयतु विबुधानन्दकन्दप्रकर्षम् ॥१॥

[ नवमसर्गादौ मङ्गलाचरणश्लोकः ]

यत्स्याद्वादं श्रयन्ते विमलमतिधनाः साङ्ख्यकाणादबौद्धा,
एकानेकप्रधानाद्युपगमनघटा दुर्घटैवान्यथा स्यात् ।
स्मृत्वा तं शान्तिनाथं गुरुपदविनतो दर्शनो भव्यसर्गे,
व्याख्यां योग्यां तनोति स्फुटमिह नवमे मोददां धीनिधीनाम् ॥१॥

[ नवमसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

व्याख्याद्वैते समार्थे यदि भवति तदा व्यर्थतैवोत्तरस्यां,
भिन्नार्थे मूलकर्तुः क्व नु मतिरनयोस्संशयः स्यादवश्यम् ।
एषा व्याख्याऽगतार्था प्रथमत उदिता दर्शनेनाद्वितीया,
पूर्णा सर्गे मनोज्ञे भवति तु नवमे नोक्तदोषानुविद्धा ॥१॥

[ दशमसर्गादौ मङ्गलाचरणश्लोकः ]

यस्याध्यक्षं परोक्षं स्वपरविषयकं निर्णयैकस्वभावं,
ज्ञानं मानं स्वतोऽर्थोऽनुगतिमतिगतस्स्याद्विशेषस्तथैव ।
तं नत्वा शान्तिनाथं सुचरितमवरं दर्शनो मन्दबुद्धि-
र्व्याख्यां सर्गे तनोति स्फुटमिह दशमे नेमिसूरीशशिष्यः ॥१॥

[ दशमसर्गान्तेऽन्त्यमङ्गलशोकः ]

व्याख्या काप्याप्तनद्धा सुचरितविषयौत्सुक्यतो दर्शनीया,
विज्ञानां नात्र शङ्का प्रसरति विषये बालगोपालसिद्धे ।
व्याख्या त्वेषात्वपूर्वे जिनवरचरिते भक्तिमद्दर्शनान्ता,
पूर्णा सर्गे विशिष्टाऽनुभवतु दशमे मान्यतां बुद्धिभाजाम् ॥१॥

[ एकादशसर्गादौ मङ्गलाचरणश्लोकः ]

उत्पादध्रौव्यनाशैः प्रतिसमयमिता युक्तता वस्तुमात्रे,
सक्ताऽनेकान्तवादे निजनिजगमकापेक्षया यस्य भव्ये ।
तं नत्वा श्रीजिनेन्द्रं स्वसमयधिषणो दर्शनस्संतनोति,
व्याख्यामेकादशेऽस्मिन् जिनवरचरिते पूजनीये तु सर्गे ॥१॥

[ एकादशसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

व्याख्यातारो विशिष्टागममननरताः पक्षपातं भजन्तः,
शास्त्रार्थानां विचारे विदधति नितरां काव्यवृत्तावुपेक्षाम् ।
व्याख्या सर्गेऽतिभक्त्या जिनवरचरणे दर्शनेनादृतेयं,
पूर्णा त्वेकादशे नो भवति जिनस्तुतैः शान्तिभक्त्यैरुपेक्ष्या ॥१॥

[ द्वादशसर्गादौमङ्गलाचरणश्लोकः ]

जीवाजीवाश्रवाद्यैर्विभजनघटना सप्तधा यस्य तत्त्वे,
जीवः संसारिमुक्त-द्वयविभजनया स्थापितोऽनेकयुक्त्या ।
धर्माधर्माद्यजीवे गदितमवितथं तं नमस्कृत्य शान्तिं,
व्याख्यां सर्गे करोति प्रविततिविषयां दर्शनो द्वादशेऽलम् ॥१॥

[ द्वादशसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

एका सर्वस्य काम्या न च भवति नवा सर्वथा काऽप्यकाम्या,
व्याख्या लोके प्रतीता भवति बहुविधोपेक्षिता चादृता च ।
सत्काव्येऽसत्यकाव्ये गतिरियमखिले संप्रधार्याऽत्र सर्गे,
पूर्णेऽयं दर्शनस्यामलमतिरचिता द्वादशे वृत्तिरिष्टा ॥१॥

[ त्रयोदशसर्गादौ मङ्गलाचरणश्लोकः ]

यस्येयं सप्तभङ्गी प्रतिविषयमिता सप्तभङ्गप्रवृत्या,
चादिष्टा माननीत्योः सकलविकलतायोगिनी मानमुख्या ।
तं श्री शान्ति प्रणम्याभयपदपथगो दर्शनो वक्ति सर्गे,
व्याख्यां योग्यां मितार्थां त्रियुतदशमके विज्ञमोदप्रदात्रीम् ॥१॥

[ त्रयोदशसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

मूलार्थे वक्तुकामैरतिकठिनवचोगुम्फनैस्संप्रवृत्ता,
व्याख्योपादेयभावं भजति न सुधियां मन्दबुधैर्न चेष्टा ।
इत्यालोच्यैव बुद्ध्या सुगमवचनतो दर्शिता दर्शनेन,
व्याख्या सर्गे प्रपूर्णा त्रियुतदशमके कामितार्थानुषक्ता ॥१॥

[ चतुर्दशसर्गादौ मङ्गलाचरणश्लोकः ]

एव स्याच्चद्विमुक्तैः कुनयमिति नयाख्यानमस्त्यादिशब्दै-
र्यत्स्याद्वादे तदर्थावगतिरभिमता शान्तिनाथं तमीड्यम् ।

नत्वा सर्गे तदीया चरणविधिकथागर्भकाव्ये प्रशस्तां,
व्याख्यां श्री दर्शनस्संतनुत इतचतुः पूर्वशब्दे दशेऽस्मिन् ॥१॥

[ चतुर्दशसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

अन्योच्छिष्टप्रधाना स्वमतविधुरिता वृद्धसंवादशून्या,
मूलापेक्षाव्यपेता समनुगमनतोऽभूषितोन्मार्गगन्त्री ।
व्याख्यानादेयभावं कलयति विदुषां तद्विभिन्ना तु सर्गे,
पूर्णा व्याख्या मितेऽस्मिन् भुवनगणनया दर्शनोत्थास्तु भूत्यै ॥१॥

[ पञ्चदशसर्गादौ मङ्गलाचरणश्लोकः ]

निक्षेपाणां नयानां विषयभजनया योजनं यस्य शास्त्रे,
पूर्वाचार्या मिथोऽत्र व्यदधुरभिमतं स्वस्वपक्षं विविक्तम् ।
स्तुत्वा तं शान्तिनाथं जिनवरमभितो दर्शनो वक्ति सर्गे,
व्याख्यां तिथ्यङ्कसंख्ये गुरुवरचरणाराधनावाप्तविद्यः ॥१॥

[ पञ्चदशसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

व्याख्या न्यूनैव सर्वा विलसति नितरां भावितानेकमार्गे,
मूले भूतार्थगर्भे कृतिवररचिते शान्तिकृत्येकसारे ।
पूर्णेयं कल्पनातस्तिथिगणितमिते दर्शनावाप्तरूपा,
सर्गे सुस्पष्टभावा मननपथगता मोददा स्याद् बुधानाम् ॥१॥

[ षोडशसर्गादौ मङ्गलाचरणश्लोकः ]

शास्त्रे यस्यास्ति वादो जनिमति सदसद्दूषणाक्रान्त आप्त-
ग्रामानेकान्तचर्चो विदलितकुहनैकान्तवादोऽप्रधृष्यः ।
तं स्तुत्वा शान्तिनाथं जिनवरमवरं दर्शनः सूरिवर्यो,
व्याख्यां सर्गे मितार्थां रचयति विमलां षोडशे ज्ञाततत्त्वः ॥१॥

[ षोडशसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

पद्ये पद्ये विशिष्टाचरणविषयकोद्बोधदानप्रगल्भे,
मूले मूलानपेतार्थविवरणपरा तीर्थकृद्भक्तिजाता ।
सर्गे व्याख्या प्रपूर्णा मितिनयलसिता नेमिसूरीशशिष्या-
चार्यश्रीदर्शनाप्तात्मभवनकलिता षोडशे मोददाऽस्तु ॥१॥

[ सप्तदशसर्गादौ मङ्गलाचरणश्लोकः ]

सर्वे वादा यदीयागमगतनयतस्संसृता भिन्नमार्गा,
द्रव्यार्थः पर्यवार्थो नयविभजनतस्संग्रहः सूक्ष्मगत्या ।
आनन्त्यं स्यान्नयानां वचनवदवरं तं जिनेशं प्रणम्य,
व्याख्यां सर्गे तु सप्तोत्तरदशप्रमिते दर्शनस्सन्तनोति ॥१॥

[ सप्तदशसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

कर्तुः स्वोपज्ञटीका सहृदयमभितो दर्शयन्ती प्रकृष्टा,
पुत्रान्तेवासिनद्धा बुधजनहृदयाह्लादिनी निश्चितार्था ।
संभाव्यार्था त्वियं सा जिनवरचरिते योजिता दर्शनेन,
व्याख्या पूर्णा तु सप्तोत्तरदशप्रमिते मोददा भातु सर्गे ॥१॥

[ अष्टादशसर्गादौ मङ्गलाचरणश्लोकः ]

दोषा सर्वे परोक्ता यदुदितसमये न स्पृशन्त्यर्थजातं,
सिद्धानेकान्ततस्ते गगनसुमसमा इष्टतां यान्ति सिद्धाः ।
नत्वा तं शान्तिनाथं गुणततिकलितेऽष्टादशे वर्यसर्गे,
व्याख्यां सूरिस्तनोति प्रविततचरिते दर्शनो दर्शनज्ञः ॥१॥

[ अष्टादशसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

सन्दिग्धार्थां श्रयन्ते न खलु कृतधियो योजनामात्ररम्यां,
व्याख्यां विज्ञैर्विगीतां कठिनतरपदोल्लासितां भावशून्याम् ।
तद्भिन्ना शान्तिनाथप्रततचरितगा दर्शनोद्भावितार्था,
व्याख्या सर्गे प्रपूर्णा नियमितविषयाऽष्टादशे शान्तिदाऽस्तु ॥१॥

[ एकोनविंशसर्गादौ मङ्गलाचरणश्लोकः ]

सर्वेऽप्यर्था यदीये सुमतिदिनकरेऽनन्तधर्मानुषक्ता,
भासन्ते स्वप्रकाशे जनिलयरहिते केवले निष्कलङ्के ।
तं नत्वा शान्तिनाथं जिनमपररविं दर्शनोऽन्त्ये च सर्गे,
व्याख्यां भव्यां तनोति प्रकृतिपरिणतां भूतये मङ्गलाय ॥१॥

[ एकोनविंशसर्गान्तेऽन्त्यमङ्गलश्लोकः ]

व्याख्याऽदृष्टोपसर्गे जिनवरचरिते भावनाभावितार्था,
सर्गेऽन्त्ये नेमिसूरीश्वरगुरुकृपया दर्शनाप्तस्वरूपा ।

पूर्णा पूर्णस्वभावं जनयति प्रमितैकोनविंशत्युपेता,
व्याख्यायां कीर्तिमिष्टामपि निजजनके कल्पगां सन्तनोतु ॥१॥

॥ प्रशस्तिः ॥

पट्टे पश्चिमतीर्थकृत्प्रभुवराध्यासावदात्तप्रभे,
यत्रानल्पगुणप्रभावकलितेऽभूच्छ्रीसुधर्मा प्रभुः ।
तत्पश्चादपरेऽपि सूरिमुकुटाः काले बभूवुः क्रमात्,
जैनानां मतमद्वितीयमभितः संस्थापयन्त्योऽमलम् ॥१॥

स्वच्छे तत्र तपाभिधानमहिते गच्छे सुधर्मान्विते,
भव्ये जैनमतप्रचारनिलये विद्यावतामग्रणीः ।
सूरीशो नृपराजिलालितपदस्तीर्थोद्धृतिव्यापृतो,
विख्यातो भुविनेमिसूरिरमराचार्योपमोऽभूद्बुधः ॥२॥

तत्पट्टे प्रथमः प्रशस्तचरणो न्यायादिविद्याचणो,
गीतार्थप्रवरो गुणौघनिलयो व्याख्याननैपुण्यभाग् ।
नव्यन्यायविशारदो बहुविधग्रन्थोक्तिसंवादवद्-
व्याख्यानिर्मितकोविदोऽस्ति विदितो यो दर्शनः सूरिराट् ॥३॥

तेनेयं रचिता जिनस्य चरिते श्रीशान्तिनाथप्रभो-
र्व्याख्यैकोनकविंशसर्गसुगमा पूर्णा बुधाकाङ्क्षिता ।
सा सूरीश्वरनेमिसूरिगुरवे स्वःस्थाय भक्त्यार्पिता,
मोदं विज्ञजनस्य संविदधती कल्पान्तमस्तु स्थिरा ॥४॥



ॐ ह्रीँ श्री गौतम स्वामिने नमः

શ્રી મુનિભદ્રસૂરિપ્રવર વિરચિત

# શ્રી શાન્તિનાથ મહાકાવ્ય

## ( ભાષાન્તર )

### સર્ગ. ૧૪ મો.

( ભાષાન્તર કર્તા :- પન્યાસ શ્રી. પ્રિયંકર વિજયજી ગણિવર્ય )

૧. જે શાંતિનાથ ભગવાનનું શુદ્ધ કેવલ જ્ઞાનરૂપી કમલમાં ત્રણે લોક ભ્રમરની જેમ આચરણુ કરે છે. એવા સકલ અતિશય શાલી શ્રી જિનેશ્વર પ્રભુ શ્રોતા અને વક્તાના મનોરથ પૂર્ણ કરો.

૨. પૂર્વે ઋષભદેવના સો પુત્રો હતા, તેમાંના એકનું કુરુ નામ પ્રસિદ્ધ હતું. તે જે ભૂમિપર રાજ્ય કરતો તે દેશ કુરુદેશ તરીકે પ્રસિદ્ધિ પામ્યો.

૩. દેવો પણુ નિરંતર જેની ઝંખના કરે છે અને બીજા દેશમાં પ્રવર્તતા દુકાલ દૂર કરવા માટે એવાં ધાન્યો જે દેશમાં થતાં હતાં.

૪. હિમાલયની જેવી ઉંચી વિના પ્રયત્ને મોટી થતી મહાપુરુષોના પુણ્યથી જ જાણે બનાવાયેલી ના હોય એવી વિદ્વાનોની જાણે ઉજ્વલ વાણી જ ન હોય તેવી ત્યાંના ગાયના વાડાની ગાયો હતી.

૫. જેમ જલથી તલાવ, ગાયોથી ગોષ્ઠ, કમલોથી જલ, ગોષ્ઠોથી ગામ, ભ્રમરોથી કમલ. તેમ ગામ વડે નગરો શોભે છે પરસ્પર એકબીજાથી શોભે છે.

૬. કુરુદેશ જોયા પછી વત્સ દેશમાં પ્રીતી થતી નથી. અંગ દેશ દુર્બલ દેખાય છે લાટ દેશની પ્રશંશા રહી નથી, ગૂર્જર દેશ વૃદ્ધ જેવો લાગે છે.

૭. કર્ણાટક, કાનમાં પીડા આપે છે. સુરાષ્ટ્ર ને મહારાષ્ટ્ર તે બન્ને તો વ્યર્થ દેખાય છે ને હૂણુનો તો જાણે જન્મ જ થયો નથી. ૨ થી ૭.

૮. જાણે દેવનગર જ ન હોય એવું તે કુરુદેશમાં હસ્તિનાપુર નામે નગર હતું. વળી દેવલોકમાં જેઓને વિરોધ છે તેવો શુક્ર બૃહસ્પતિ તથા બુધનો પરસ્પર વિરોધ જે દેશમાં નથી.

૯. અગાધ જલથી ભરેલું વિકસ્વર કમલોથી શોભતું બ્રાહ્મણોના સમુદાયથી વીટાયેલું સરોવર બાહરના દેશમાં શોભે છે. બીજો અર્થ નગરજનો શૃંગાર આદિ રસોથી વ્યાપ્ત, શોભનીય દાંતોવાળી કમલાક્ષી સ્ત્રીઓથી નગર શોભે છે.

૧૦ આ કુરુદેશમા રહેલા હસ્તિનાપુરે પોતાની સંપત્તિ વડે ધર્મરાજની નગરીને શરમાવી દીધી. શરમની મારી સંયમિની બની ગઈ કારણ કે સંયમથી પરાભવ પામે નહિ.

૧૧. જે લંકાપતિ રાવણ પરદારામાં સ્નેહ કરવા લાગ્યો. તેથી સૌન્દર્યહીન થવાથી તે લંકા હસ્તિનાપુરની તુલના કેમ કરી શકે!

૧૨. જે ભોગોની નગરી સર્પોના રહેઠાણ હોવાથી આ નગરીની સ્પર્ધા કરી શકે નહિ કારણ કે સંપૂર્ણ દરાત્મા અને સર્પોને નગરથી હાંકી કાઢીને તે પાતાલમાં જઈ રહ્યા, તે કારણથી ભોગાવતી નગરી હસ્તિનાપુરની સ્પર્ધા કરી શકતી નથી

૧૩. પંડિતો અમરાવતી નગરીનું જે વર્ણન કરે છે. તે તેનો કદાગ્રહ છે, ધર્મકલ્યાણના જનક સત્કર્મવાળા અને નિત્ય ઉત્સવ વાલાને હસ્તિનાપુર નગરની આગળ પુણ્યક્રિયાથી હીન અમરાવતી નગરની કોઈ શોભા નથી. ૮ થી ૧૩.

૧૪. તારા જેવા રાજાઓમાં સંપૂર્ણ ચંદ્ર જેવો, સમગ્ર વિશ્વમાં સેનાથી વ્યાપ્ત વિશ્વસેન નામનો રાજા થયો.

૧૫. ત્રિનેત્રધારી શિવવિભૂતિ વડે શોભતોજે ગંગાને મસ્તક ઉપર ધારણ કરે છે. તે ગંગા પોતે જ હસ્તિનાપુરમાં રાજાની આગળ વહે છે.

૧૬. જે વિશ્વસેન રાજા પોતાને લક્ષ્મી વશ થવાથી વિષ્ણુ જેવો શોભ્યો જ્યારે આ રાજા શત્રુને અભયદાન આપે છે ત્યારે શત્રુઓ પુનર્જન્મ માને છે. કારણ કે શત્રુ જીવતો રહી જશે તો ફેર ગુહનો કરશે એ ચિંતા રાજા કરતો નથી.

૧૭. ફેલાતા ઉજ્જ્વલ યશ વડે શરદ ઋતુનો ચંદ્રમા જીતાયો છે. પરાજીત થયેલો ચંદ્રમા હ્રદયમાં લજ્જા ધારણ કરે છે. તેને કવિઓ કલંકરૂપ માને છે.

૧૮. સૂર્ય પ્રથમ તપાવે જે ને પશ્ચિમ દિશાના રાગવાળો છે કવિ (શુક્ર) સાથે દ્વેષ કરે છે. પોતાના પ્રકાશથી જગતમાં પ્રકાશતો એવો સૂર્ય રાજા જેવો નથી.

૧૯. કિરણો વડે જે કમલોને સંકુચિત કરે છે. કલંક હોવાથી દોષની ખાણ રૂપ છે સુમેરુ પર્વતની ચારે બાજુ ફરતો એવો ચંદ્ર આ રાજાની સરખામણી કેમ કરે.

૨૦ ન્યાયથી ચાલતા તે વિશ્વસેન રાજાએ ઉત્તમકીર્તિને પ્રાપ્ત કરી દાન દેવાથી સોનામાં સુગંધ જેવો મનાયો. દાન અને ન્યાય આ બન્નેને વિનય વડે શોભાવ્યા એવો વિશ્વસેન રાજા થયો.

૨૧. બે હજાર જીભોને ધારણ કરતો શેષનાગ જેના શૌર્યાદિ ગુણવર્ણન કરવામાં અસમર્થ થઈ લજ્જાને પામતો તે પાતાલનગરમાં જઈને રહ્યો. ૧૪ થી ૨૧

૨૨. ઉદાર ચિત્તવાળી પુણ્યશાલી અચિરા નામે વિશ્વસેન રાજાની પત્ની હતી કે પાર્વતી જેમ શિવ પ્રત્યે તેમ પોતાના પતિ પ્રત્યે પ્રીતિ રાખતી હતી.

૨૩. તે અચિરાએ પોતાના સ્થિર સૌભાગ્ય માટે રોહિણી તપ કર્યો જે રોહિણી નક્ષત્રમાં કરાતો તપ જિનાગમમાં પ્રસિદ્ધ છે.

૨૪. જેનું મુખ પૂર્ણ ચંદ્રમાને હસે છે. એટલે લજ્જિત થયેલો ચંદ્ર પ્રતિપદાથી ક્ષીણ થાય છે. બીજાથી પરાભવ પામેલોક્ષીણ થાય તે ઉચિત છે.

૨૫. લક્ષ્મીનો ભંડાર, ત્રિભૂવનનો વિજય કરનાર કામદેવની રાજધાની શરદ ઋતુના ચંદ્રની કૌમુદી, ઉજ્જવલ ગુણોનું ક્રીડા સ્થાન છે અદ્વિતીય સૌન્દર્યનું પાત્ર જાણે બીજી ઈન્દ્રાણીજ ભૂમંડલમાં અવતરી ના હોય શું એવી અચિરાનેબ્રહ્માએ સરજી ૨૨, ૨૩, ૨૪, ૨૫,

૨૬. ચકોરનો દિવસે વિયોગ ને રાત્રી એ ચક્રવાક પક્ષિનો વિરહ જગ પ્રસિદ્ધ છે. માટે સુખ સમુદ્રમાં નિમગ્ન રહેલા તે બન્ને તુલનામા આવી શકે નહિ

૨૭. તે બન્ને દંપતિને કેટલાય દિવસ વીતી ગયા તે તે બન્નેનું જીવન પ્રેમપૂર્વક વીત્યું એમ પંડિતોએ જાણ્યું

૨૮. તે મેઘરથનો જીવ સ્વર્ગમાં પોતાના ત્રીશ સાગરોપમનું આયુ પૂર્ણ કરી. ભાદરવાવદિ સાતમના દિવસે ભરણી નક્ષત્રમાં અચિરાની કુક્ષિમાં ઉત્પન્ન થયો.

૨૯. અચિરા દેવીએ ચૌદ સ્વપ્નો જોયા, મોતીઓના ચંદરવા વાળા અને જ્યાં કૃષ્ણા ગુરુ ધૂપબળી રહ્યો છે તેવા સુવર્ણગૃહમાં અલ્પ નિદ્રા કરતી કાંઈક જાગતી હર્ષિત થયેલી. અચિરાદેવીએ ચૌદ સ્વપ્નો જોયાં

૩૦. પહેલે ગજવર હિમાલયની શિલાના સમૂહ જેવો સાક્ષાત્ ઉજ્વલ ગજરાજ ન હોય સફેદ ચાર દાંતથી શોભતો, મદ જરવાથી દિશાઓને સુગંધિત બનાવતો એવો ઐરાવત હાથી આકાશમાંથી ઉતરતો પોતાના મુખ કમલમાં પ્રવેશતો તેણે પહેલા સ્વપ્નમાં જોયો.

૩૧. બિજે વૃષભ દેવીએ બીજા સ્વપ્નમાં ચંદ્રની ચાંદની જેવો ને પૃથ્વીને શિંગડા વડે ઉખેડતો અને ઈન્દ્ર જાણે પોતાનું વાહનજ ઉપહારમાં આપતો ના હોય તેવા વૃષભને આકાશમાંથી ઉતરી મુખ કમલમાં પ્રવેશ કરતો વૃષભ જોયો.

૩૨ ત્રીજે કેશરી સિંહ સફેદ વર્ણવાલા વીજળીના જેવા નેત્રવાળા પોતાની સિંહ ગર્જના વડે બલવાન મદોન્મત્ત હાથીઓનો પણ પરાજય કરતા સિંહને ત્રીજા સ્વપ્નમાં જોયો.

૩૩. ચોથે લક્ષ્મી દેવી મહાસૌન્દર્યના સમૂહ રૂપ કામદેવને ઉદ્દિપન કરવામાં અને કમલ પત્ર જેવી એકસ્થાને મળેલી ત્રણ ભુવનની સુંદરીઓની શોભાને જીતનારી સર્વાંગ મનોહર એવી લક્ષ્મીને અને ચોથાસ્વપ્નમાં જોઈ.

૩૪. પાંચમેફૂલનીમાળા આનો શ્વાસ મારી મુદુતાને જીતી લેશે એમ માની કોમલ પુષ્પમાલા સર્વોત્કૃષ્ટ તેના ચરણનું શરણું લીધું અને પોતાની સુંગધીથી આકર્ષાયેલો ભમરો વાળી એવી પુષ્પમાલાનેમુખમાંપ્રવેશ કરતી જોઇ

૩૫. જે ચંદ્ર રાણીના મુખ કમલથી પરાજિત થઈને આકાશમાં પણ દિવસે શોભા રહિત બન્યો, ચોસઠ કલાને ધારણ કરતી ચંદ્ર મુખી રાણી અચીરાએ મુખમાં પ્રવેશ કરતા ચંદ્રને છઠ્ઠા સ્વપ્ને જોયો.

૩૬ સાતમે સૂર્ય આ ગર્ભમાં આવેલા પ્રભુ ભવ્ય જીવોને જ્ઞાન પમાડશે અને પોતાના તેજથી બીજાને જીતી લેશે. અને જગતના લોકોને ચક્ષુરૂપ થશે એમ માની સૂર્યે સાતમા સ્વપ્ને અચિરાના મુખમાં પ્રવેશ કર્યો

૩૭. આઠમે ધ્વજ :– પર્વત ઉપર ઊંચે રહેલા વંશના અગ્રભાગે જેમ હું રહું છું તેમ આ ગિરિવંશને શોભાવનાર અધિક ક્રાંતિ વડે મંદિરોના ભૂષણ રૂપ અનેક રાજાઓના ભૂષણ સરખેઆ થશે. એમ માનીને આઠમાસ્વપ્ને ધ્વજે અચિરાના મુખમાં પ્રવેશ કર્યો

૩૮. નવમે પૂર્ણ કુંભ :– મધુરજલથી સમુદ્ર જેવો ભરેલો વિકસિત ફૂલનીમાળાથી પૂજીત જિન બિંબની જેમ શોભતો સ્વર્ગના ઈન્દ્રે ભેટ ના આપ્યો હોય તેવો નવ નિધિ રૂપેજ રહેલા કલશને નવમે સ્વપ્ને મુખમાં પ્રવેશતો જોયો

૩૯ ૧૦ મે પદ્મ સરોવર:– ખીર સમુદ્રના પ્રતિનિધિ રૂપ. અમૃત રૂપ જલથી ભરેલું અનેક પક્ષિઓથી સેવાતું વિકસ્વર કમલોથી શોભતુ પદ્મસરોવર દશમે સ્વપ્ને જોયું.

૪૦ અગીઆરમે સમુદ્ર:– જેના અંકમાં પુત્રની જેવા મણી રત્નોવાળા, મહારત્નની પ્રભાનો પણ જેણે તિરસ્કાર કર્યો છે એવા કાંઠાવાળો અને પવનથી પ્રેરાતા તરગવાળો એવા સમુદ્રને ૧૧ મે સ્વપ્ને આનંદિત થયેલી અચિરાયે જોયો.

૪૧ ૧૨ મે વિમાન:-સૂર્ય મંડલમાંથી તેજ લઈને બ્રહ્માએ જેની રચના ન કરી હોય એમ જે વિમાન હંમેશાં પ્રકાશમાન છે તે મોક્ષ સુખને આપનાર વિમાનને બારમા સ્વપ્ને દેવી અચિરાએ જોયું.

૪૨ ૧૩ મે રત્નરાશિ:–બીજા ભુવનમાં મારી કિંમત કોઇ જાણતું નથી. કદાચ કોઈ રત્નશાસ્ત્ર ભણીને જાણે પણ લેવા માટે અસમર્થ એમ માની રત્નરાશિએ જિનપતિની સેવા કરવા માટે તેરમા સ્વપ્ને અચિરાના મુખમાં પ્રવેશ કર્યો.

૪૩ ૧૪મે નિર્ધૂમઅગ્નિ:–મારા શરીરથી ઉત્પન્ન થયેલ ધૂમે જગતને મલીન કર્યું માટે હે વિભુ–સર્વસ્વ ભગવંત–તમે જગતને પવિત્ર કરો એમ જિન પતિને વિનંતિ કરવા માટે નિર્ધૂમ અગ્નિને અચિરા માતાએ ચૌદમા સ્વપ્ને મુખમાં પ્રવેશ કરતો જોયો.

(૪૪) ચૌદ સ્વપ્નનું ફલ એ છે કે ચૌદ રાજલોકનું જ્ઞાન થશે. ૧૪ વિદ્યાનું જ્ઞાન ૧૪ રત્નોનું પાલન કરશે એવા આ સમગ્ર ૧૪ સ્વપ્નો અચિરાએ જોયાં.

૪૫ ચ્યવન કલ્યાણકસમયે અનિર્વચનીય પ્રકાશ થયો. જે પ્રકાશની આગળ સૂર્ય આગીયા જેવો દેખાયો જેનાથી વિશ્વનો અંધકાર દૂર થયો.

૪૬ ત્રણે જગતને સુખ આપવાથી જ લાલસાવાળો ન હોય તેવો એ કાલ થયો. જેમ ચંદ્રમા અમૃતમય છે તેમ જીવ જ્ઞાનમય છે.

૪૭ તે અચિરા દેવી પલંગમાંથી ઉઠી હર્ષિત હૃદયવાલી મંદમંદ ગતિએ હાથમા પુષ્પ લઇને પોતાના સ્વામી વિશ્વસેન રાજા પાસે ગઇ અને ૧૪ સ્વપ્નો કહ્યાં તે રાજા બોલ્યો હે દેવી તમારો પુત્ર અનુપમ રૂપવાળો થશે. એમ સાંભળી સંતુષ્ટ થયેલી અચિરાએ શુકન ગાંઠ બાંધી.

૪૮ સિંહાસન ચલાયમાન થવાથી ઈંદ્ર અવધિ જ્ઞાનથી પ્રભુનુ ચ્યવન કલ્યાણક જાણીને પોતાના આસન પાસે આદરપૂર્વક દુરંત પાપને દૂર કરનારી સ્તુતિ કરવા લાગ્યા,

૪૯ હે પ્રભો ! તમોએ નિવાસ કરવાથી આ પૃથ્વીમંડલ અનુત્તર વિમાનથી પણ પૃથ્વી મંડલ ઊંચું છે તેમ જ અધિક મહિમાવાળું છે નહિતર તમારૂ ચ્યવન કેમ થાય, દરિદ્રના ઘરે હાથી કયાંથી હોય !

૫૦ મતિ શ્રુતિ અવધિ પ્રમુખ જ્ઞાનત્રયી ગંગા માટે તમે હિમાલય સમાન છો સંપૂર્ણ ત્રણ ભુવનની લક્ષ્મીથી યુક્ત છો કામદેવ રૂપી મોટા સર્પ સામે તમે ગરૂડ જેવા છો સદા-ગમ વ્યવહારના પ્રવર્તક છો. એવા હે પ્રભુ તમે જયવંતા– વર્તો,

૫૧ તીર્થંકરભગવંતને તથા તેમની માતાને નમસ્કાર કરી, હર્ષપૂર્વક મોટી રૂદ્ધિવાળો ઈંદ્ર નંદીશ્વર દ્વીપની જાત્રા કરીને અને જિનેશ્વર ભગવાનનો મહોત્સવ કરીને પોતપોતાના સ્થાનમાં ગયા,

૫૨ દેવોએ પુત્રવાળા હોવાથી નીચ યોનીમાં વસતા પશુપંખીઓની પણ સ્તુતિ કરી તો જ્ઞાનવાન માનુષી સ્ત્રીની શી વાત ! ઉપડી ન શકે એવા પૃથ્વીના ભારને વહન કરનાર કાચબાની માતાની પણ સ્તુતિ કરવા લાયક છે–માટે તિર્યંચની સ્તુતિ કરી.

૫૩ હું જિનેશ્વરની માતાને જોઈને આકાશ મંડળને પવિત્ર કરનારો થઈશ એમ માનીને જ જાણે સૂર્ય ઉદયાચલ પર્વતના શિખર ઉપર ચઢયો.

૫૪ ગર્ભમાં રહેલા પ્રભુને જાણે હર્ષ પામતી દિક વધૂઓ, સાથે ઉદય પામેલાં સૂર્યનાં કિરણ રૂપી લાલ વસ્ત્રને ધારણ કરી પક્ષિઓના સ્વરને બહાને આકાશ ગાય છે.

૫૫ વિશ્વસેન રાજાએ પ્રાતઃસિંહનુ કાર્ય પતાવીને સામંતો મંત્રીઓ સાથે નમ્ર બનેલો સિંહાસન ઉપર બેસી ઈંદ્રના કહેવાથી જિનેશ્વર ગર્ભમાં આવ્યા છે એમ જાણી અચિરાના પ્રેમથી આઠ સ્વપ્ન પાઠકોને બોલાવ્યા,

૫૬ રાણીએ જોયેલા સ્વપ્નો–સંબંધી રાજાએ સ્વપ્ન પાઠકોને પૂછયું. તેઓએ એક મત થઈ કહ્યું કે નરદેવસિંહી તમારો પુત્ર ધર્મ તીર્થંકર થશે. તથા ચક્રવર્તી થશે એમ સાંભલી હર્ષિત મનવાલા રાજાએ તેમનો સત્કાર કર્યો–

૫૭. દેવીએ રત્ન અને સુવર્ણ રચિત આભૂષણોથી તેમનો સત્કાર કર્યો ને તેઓ સંતોષ પામી પોતાને સ્થાને ગયા પછી પડદાને આંતરે બેઠેલી રાણી પાસે આવી રાજાએ સ્વપ્ન પાઠકોએ કહયા પ્રમાણે સિંહાસન ઉપરથી ઉતરી સ્વપ્નોનો અર્થ તેણી આગળ કહ્યો.

૫૮. ત્યાર પછી સૌભાગ્યાદિ ગુણોથી પાર્વતી જેવી મહાન આશય વાળી તે સતી રાણી સ્વતિ નક્ષત્રની છીપ જેમ મેઘના બિન્દુને ધારણ કરે તેમ ગુણોથી ઉજવલ ગર્ભને ધારણ કરવા લાગી.

૫૯. તીર્થંકર ગર્ભમાં આવ્યા પહેલાં તે કુરુદેશમાં મારી વિગેરે સેંકડો રોગો પ્રાણને હરી લેનારા થતા હતા તેનો નાશ કરવા માટે લોકોએ ઘણા ઉપચારો કર્યાં. પરંતુ સમુદ્રમાં વડવાનલ–જેમ વધવા લાગ્યા,

૬૦ જયારે જિનેશ્વર અચિરાદેવીની કુક્ષિમાં આવ્યા ત્યારે ચંદ્રના ઉદયે–ઉનાળાનો ઘામ શાંત થાય, તેમ સ્વાભાવિક બધા લોકો, રોગ રહિત થયા, આમ ગર્ભમાં રહ્યાં રહ્યાં લોકોને સુખ આપનારા થયા તો તે જયારે જન્મશે ત્યારે ભવ્ય જીવોને કયું સુખ આપનાર નહિ થાય ! બધુંજ સુખ આપનાર થશે.

૬૧. જ્યારે જિનેશ્વર જન્મશે ત્યારે કેવલ પુષ્પજાતિનુ મહત્ત્વ નહિ રહે પરંતુ સામાન્યને વિશેષ એમ બન્નેનું મહત્ત્વ રહેશે. એમ જાણી વર્ષાકાળમા જાઇના પુષ્પો વિકસિત બન્યા,

૬૨. ભગવાન બેવચનીપણું સહિ નહિ શકે એટલે પહેલેથી જ અમે તેનો નાશ કરી દઇએ એમ માની સર્પોના ક્ષયમાં બંધાયેલા વિલાસવાળા ઉન્મત્ત બનેલા મયૂરો તે વખતે વર્ષા ઋતુમાં ગર્જના કરવા લાગ્યા.

૬૩. દ્વેષી અને જડને પ્રભુના દર્શન થશે નહિ એમ જણાવતી જલાશયોને નિર્મલ કરનારી હંસને બોલાવનારી -શરદઋતુ આવી

૬૪. જોકે ભગવાનનું તેજ અસાધરણ થશે, તો પણ તેને સૂર્યની ઉપમા લોકો આપશે માટે સૂર્ય અધિક કિરણોવાળો શરદ કાળમાં શોભવા લાગ્યો.

૬૫. આ પ્રભુનો જન્મ થયા પછી તો બધાય ઉપાસના કરશે જ્યારે હું આ તીર્થંકરની ગર્ભથી જ ઉપાસના કરૂં એમ માની શરદઋતુમાં અગસ્ત તારાનો ઉદય થયો.

૬૩ થી ૬૫

૬૬. સુવર્ણ તથા કેતકી પત્ર જેવી સ્વાભાવિક અચિરાદેવીને ગર્ભના સંબંધથી કેશર વિલેપન વિના મુખ કમળ પીળું થયું

૬૭. આ અચિરાદેવી સ્વભાવિક રીતે સુંદર તો હતી જ ને પટરાણી થવાથી અધિક સુંદર દેખાવવા લાગી આ ગર્ભ વડે દષ્ટિ દોષ ના લાગે એટલા માટે જ જાણે તે વખતે બન્ને સ્તનો શ્યામમુખવાળા થયા.

૬૮ ગર્ભ હોવા છતાં દેવીનું ઉદર વધ્યું નહિ તો પણ તે શોભાને પામવા લાગી, ગાલ પર્યન્ત શોભાવાળી મુખની પીળાશ તે ગર્ભને જણાવવા લાગી.

૬૯. સ્વભાવથી જ મંદગતિવાલી તો હતી જ અને ગર્ભના ભારથી મદઝરતા શ્રેષ્ઠ હાથીની પ્રિયા–હાથણી ની જેમ અધિક મંદગતિવાલી થઈ

૭૦. શરદ પછી મારાથી લોકમાં અધિક જડતા આવે છે આ કલંક યશના નાશનો હેતુ છે છતાં તમારા ચરણકમળના પ્રભાવથી તમારા યશનો નાશ નહિ થાય તેને લગતી વિનંતિ કરવા માટે જ જાણે હેમંતઋતુ આવી

૭૧. જેમા જિનેશ્વરનો જન્મ થશે નહિ તો માટે ફોગટ પ્રકાશ વડે શું ! એમ દુઃખને ધારણ કરીને દિવસે દિવસે હેમંતકાલ દિવસોને નાના બનાવવા લાગ્યો.

૭૨. તે ઋતુમાં દિવસ સરખો થાય છે. જ્યારે ભગવાન અમારા ટાઈમમાં જ જન્મ લેશે એમ માનતા રાત્રીઓ નાની થઈ નહિપણ તેઓ નવીન જ હર્ષવાળી થઈ

૭૩. ભગવાનના જન્મ વખતે જે પુરુષોમા પવિત્ર અવસર પામીને અનુરાગ ન થાય તે પ્રશંશાપાત્ર ન બને. એમ લોકો હૃદયમાં વિચારી તેનો અભ્યાસ પાડવા માટે હાથ પગના નખોમાં લેપ કરવા લાગ્યા, ૭૦ થી ૭૩

૭૪. તીર્થંકરની માતાના મુખની કાંતિની સમાનતાને કમલ ધારણ કરી શકતુ નથી. ને ભગવાનના નેત્રકમલ ચરણકમળને હસ્તકમળમાં આ ત્રણેની પણ કમળમા સરખામણી નહિ હોવાથી ક્રોધથી શિશિર ઋતુએ તેને બાળી નાખ્યું.

